श्रीफार्बसगुजरातीसभाग्रन्थमालाग्रन्थाङ्कः १२

हर्षपुरीयगच्छीयश्रीतिलकसूरिशिष्यरत्नमलधारि-

श्रीराजशेखरसूरिसन्दृब्धः

प्रबन्धकोशेत्यपराह्वयः

# ॥ चतुर्विंशतिप्रबन्धः ॥



सूर्यपुरवास्तव्यश्रीयुतरसिकदासतनुजनुषा एम्. ए. इत्युपपदधारिणा

प्रो. हीरालालेन परिशिष्ट-प्रस्तावनादिसमलङ्कृतः ।

श्रीफार्बसगुजरातीसभाद्वारा प्रकाशितः ।

प्रथमं संस्करणम् ।

प्रतयः ५०० ।

विक्रमसंवत्सरे १९८८ तमे ] [ ऐसवीयाब्दे १९३२ तमे

पण्यं सार्धं रूप्यकद्वयम् ।

The Forbes Gujarati Sabhā Series No. 12

# Caturviṁs'ati-Prabandha

*or*

# Prabandhakos'a

*by*

**S'rī Rājas'ekhara Sūri**

***Edited with Introduction, Notes and Appendices***

*by*


**Prof. Hiralal Rasikdas Kapadia, M. A.,**
Post-Graduate Lecturer at the Bhandarkar
O. R. Institute, Poona, formerly Asst Prof.
of Mathematics, Wilson College,
Bombay




A. D. 1932 ]  *Price 2-8-0*  [ Copies 500

# FOREWORD

It is with great pleasure that we place before the public for the first time a Sanskrit work written by a well-known *Jaina* author *S'rī Rājas'ekhara Sūri* of great importance as a material for the history of Gujarat. This work was entrusted to Prof H R. Kapadia, M. A., in 1931 A D., by the Forbes Gujarātī Sabhā, Bombay, for editing, annotating etc. We are grateful to him for the splendid edition he has prepared by utilizing 3 Mss and a printed copy. Herein the learned reader will find various readings, Sanskrit renderings of verses in Prakrit and old Gujarati, notes pertaining to the technicalities of Jainism and several appendices. Out of them the alphabetical index of names of rulers, cities etc, will attract the attention of students interested in research work. This edition stands unique in all these aspects which are wanting in the other edition which may be looked upon as *editio princeps.* This was published in A. D 1921 by S'rī Hemacandrācārya Granthāvalī, as the 20th number of that Series, which has been here referred to as *ga*

We need not dilate upon the life of the author as well as the historical basis of the 24 *prabandhas* as the learned editor hopes to deal with it in the subsequent volume of this work viz the critical edition of the Gujarati translation which is entrusted to him by our Sabhā and which is in press at present.

We shall be failing in our duty if we did not express our indebtedness to Divan Bahadur K M. Javeri, M A., LL. B, who procured from the Bombay Royal Asiatic Society for the Sabhā two Mss, of

*Caturviṁśati-prabandha* here designated as *kha* and *gha* respectively, *ka* being a Ms. belonging to the Bhandarkar Oriental Reserch Institute, and consulted by our editor during his stay in Poona. We are grateful to *Śrī Caturavijaya* for his supplying the editor with the press-copy for the 2nd and the 6th appendices and for going through some of the proof-sheets In the end, we may thank Dr V G. Paranjpe, M A.,LL. B., the Proprietor of Āryasaṁskṛti Press, Poona, for the attention he paid as regards the printing etc., of the work.

We are indebted to the Bombay Branch of the Royal Asiatic Society as well as the Bhandarkar Oriental Research Institute of Poona for allowing us to make use of their Mss.

21-2-1932.
Bombay.

**Harsiddhbhai Vajubhai-Divetia,**
*Honorary Secretary,*
S'rī Forbes Gujarātī Sabhā,
BOMBAY.

# किञ्चित् प्रास्ताविकम् ।

" भवबीजाङ्कुरजनना रागाद्याः क्षयमुपागता यस्य ।
ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥ "

विदाङ्कुर्वन्तु विद्यारसिकशिरोमणयः सहृदयहृदया यदयं प्रबन्धकोशेत्यपराह्वयः श्रीचतुर्विंशतिप्रबन्धो गूर्जरगीर्गुम्फितो गद्यप्रायः प्राकृतादिभाषानिबद्धैः पद्यगद्यात्मकैश्चावतरणैः समलङ्कृतो ग्रन्थो वरीवर्ति । अत्र सूरिप्रबन्धा दश,

---

१ सन्तुल्यतां यदुक्तं स्वयं ग्रन्थकारैः प्रशस्त्यां निम्नलिखितपद्यद्वारा—

" तेनायं मृदुगद्यैर्मुग्धो मुग्धावबोधकामेन ।
रचितः प्रबन्धकोशो जयताज्जिनपतिमतं यावत् ॥३॥ "

२ प्राकृत-प्राचीनगूर्जरादिभाषासङ्कलितानामवतरणानां प्रतिसंस्कृत कृतं मया मन्दधिया, किन्तु कुत्राचित् समस्ति शङ्का । यत्र स्खलनाऽवगम्यते शेमुषीशालिभिस्तत्प्रमार्जनं ते करिष्यन्ति मह्यं च निवेदयिष्यन्तीति तेभ्यो मेऽभ्यर्थना विद्यते ।

३ ' गुरुवचनमलमपि० ' इति गद्यात्मक अवतरणं तृतीये पृष्ठे । एतस्य मूलस्थलनिर्देशार्थिभिः प्रेक्ष्यतां श्रीयुतकालेद्वारा सम्पादितायाः कादम्बर्याः १०२तमः परिच्छेदः ।

४ एतेषां सर्वेषां मूलस्थाननिर्देशकरणे नाहमलं, यथेष्टसाधनाप्राप्तेः । तथापि कतिपयानां मूलस्थान प्रादर्शि मया छ-परिशिष्टे । अनेनानुमीयते यदुत अयोगव्यवच्छेदिकाद्वात्रिंशिका-कादम्बरी-कुमारसम्भव-नैषधीयचरित्र-रघुवंश-प्रबन्धचिन्तामणि-रुद्रटालङ्कार-विक्रमोर्वशीय-वेणीसंहार-वैराग्यशतकप्रभृतयो ग्रन्था ग्रन्थकाराणां दृष्टिपथमवतीर्णाः ।

कविप्रबधाश्चत्वारः, भूपतिप्रबन्धाः सप्त, राजाङ्गश्रावकप्रबन्धास्त्रयः; एवं प्रबन्धाश्चतुर्विंशतिः सन्ति । एतेषु कतिपयाः[2] प्रभावकचरित्रेऽपि दृश्यन्ते यत्संवादादिमीमांसां कर्तुं प्रयतिष्येऽस्य ग्रन्थस्य गूर्जरभाषात्मकेऽनुवादे[3] । चतुर्विंशतौ प्रबन्धेषु सप्तमं विहाय सर्वे गद्यमयाः । किञ्च समस्तेषु प्रबन्धेषु नवमः प्रान्तिमश्च विशेषतो विस्तृतौ वर्तेते । अपरञ्चात्र क्वचिद् गूर्जरभाषायाः शब्दाः संस्कृतस्वाङ्गसज्जीकृता विलोक्यन्ते, यथाहि—वण्डः (पृ. ११), हक्कितः (पृ. २१), छोटयित्वा (पृ. ३४), खटपटापयति (पृ. ५३), टलवलायमानः (पृ. ८१), तडफडायमाना (पृ. ९६), छुटन्ति (पृ. ९६), बुम्बां पातयन् (पृ. १२१), झगटक (पृ. १३८) । अस्मिन् प्रबन्धकोशे नाना न्याया अपि निर्दिष्टाः, यथाहि—'एकं वानरं अपरं वृश्चिकेन जग्धा' (पृ. १८, प. ७), अस्थिमज्जः (पृ. ५९, प. १), काकतालीयः (पृ. ८५, प. ४), अन्धवर्तकी (पृ. ८५, प. ५), 'भजते विदेशमधिकेन जितस्तदनुप्रवेशमथवा कुशलैः' (पृ. १२३, प. २०३) मात्स्यः (पृ. २०६) च ।

अस्य प्रबन्धकोशस्य प्रणेतृभिः श्रीराजशेखरसूरिभिः[4]

---

१ श्रीअमरचन्द्रसूरीणां प्रबन्धस्यान्तर्भावोऽत्र कृतः प्रस्तुतग्रन्थकारैः, न तु सूरिप्रबन्धेषु । तत्र केनापि कारणेन भवितव्यमिति सम्भावनायामेतेषां कविप्रतिभाप्रदर्शनहेतुकं निरूपणमिदमिति पोस्फुरीति ।

२ सन्तुल्यन्तां प्रभावकचरित्रगता आर्यनन्दिल-पादलिप्त-वृद्धवादि-मल्लवादि-हरिभद्र-बप्पभट्टि-हेमचन्द्रसूरीणां जीवनवृत्तान्ताः ।

३ मत्कृतोऽनुवादोऽयं प्रस्तावनापरिशिष्टादिपरिष्कृतश्च प्रसिद्ध्यमानोऽस्ति श्रीफार्बसगुजरातीसभया'ऽऽदित्य'मुद्रणालये राजनगरे ।

४ प्रस्तुतप्रबन्धकाराणां काव्यनिर्माणसम्बन्धिनी कुशलता कीदृशी वर्तते तन्निश्चयार्थिभिः पठ्यतां प्रबन्धोऽयम् ।

प्रशस्तौ निजकुलगणशाखागच्छगुरूणां यो नामोल्लेखोऽकारि त-दाधारेण ज्ञायते यदुतैतेषां प्रश्नवाहनाभिधं कुलम्, कोटिकाभिख्यं गणम्, मध्यमाख्या शाखा, हर्षपुरीयाह्वं गच्छम्, श्रीतिलकेत्या-ह्वयाश्च गुरवः ।

यैर्मलधारिश्रीराजशेखरसूरिभिर्षड्दर्शनसमुच्चयः सन्द-ब्धः त एव इमे इति सम्भाव्यते। ७१०श्लोकप्रमाणकवस्तुपालप्र-बन्धस्य प्रणेतृरूपेण येषां श्रीराजशेखरेति नामधेयं निर्दिष्टं जैन-ग्रन्थावल्यां तेऽपीमे एव स्युः । स प्रबन्धोऽपि प्रबन्धकोश-स्यास्यान्तर्गत एव स्यात् । निश्चयस्तु तत्प्रतिविलोकनेनैव शक्यः । एभिर्मलधारिसूरिभिश्चतुरशीतिः कथा अपि निर्मिता इति ज्ञायते बृहट्टिप्पनिकागतेन निम्नलिखितेनोल्लेखेन—

" २४ प्रबन्धाः ८४ कथाश्च राजशेखरसूरिरचिताः । "

अथवा प्रत्यक्षे प्रमाणे सति किमनुमानेन ? । अयं चतुरशीतिकथा-त्मको ग्रन्थः प्रसिद्धिं नीतः पण्डितश्रावकहीरालालहंसराज-नामकैर्महाशयैर्वैक्रमीयाब्दे १९६९तमे ।

---

१ एतन्नामोल्लेखो मङ्गलाचरणरूपेण रचितस्य पद्यपञ्चकस्य प्रान्तेऽ-प्यवलोक्यते । आद्ये पद्यचतुष्के तु श्रीऋषभ-नेमि-पार्श्व-वीरेतितीर्थ-ङ्करचतुष्टयस्य वन्दनं विहितमाचार्यवर्यैः ।

२ अस्याद्यं पद्यमित्थम्—

" नत्वा निजगुरून् भक्त्या, स्मृत्वा वाङ्मयदेवताम् ।
सर्वदर्शनवक्तव्यं, वक्ति श्रीराजशेखरः ॥ १ ॥

अन्तिमं तु यथा—

" बालावबोधनकृते 'मलधारि'सूरिः
श्रीराजशेखर इति प्रथमानबुद्धिः ।
सम्यग् गुरोरधिगतोत्तमतर्कशास्त्रः
षड्दर्शनीमिति मनाक् कथयाम्बभूव ॥ १८० ॥

स्याद्वादकलिकाकर्तारोऽपि नाम्ना राजशेखरा इति जैन-ग्रन्थावल्यां निर्देशः। एतत्प्रणयनसमयः १२१४तमो वैक्रमीयाब्द इति तत्र सूचितम्। अनेनानुमीयते यदुतैते न प्रस्तुताः। किञ्च कर्पूरमञ्जरी-काव्यमीमांसा-बालभारत-बालरामायण-विद्धशालभञ्जिकाप्रणेतारो राजशेखरा अप्येभ्यो मलधारिसूरिभ्यो भिन्ना एव।

लुङ्(Aorist)प्रयोगप्रचुरस्यास्य प्रबन्धकोशस्य संशोधनकार्ये साधनीभूतं पुस्तकचतुष्टयम्। तत्र क—सञ्ज्ञकं पुण्यपत्तनस्थप्राच्यविद्यासंशोधनमन्दिरसत्कं हस्तलिखितम्, ख—घ—सञ्ज्ञात्मके मुम्बापुर्यां रॉयल्एशियाटिक्सोसायटिसत्के हस्तलिखिते, ग—सञ्ज्ञि तु श्रीहेमचन्द्राचार्यग्रन्थावल्यां विंशतितमाङ्करूपेण प्रसिद्धिं नीतम्। एतस्मिन् पुस्तकचतुष्के क—ख—सञ्ज्ञयोः प्रायः परस्परा पाठसदृशता दरीदृश्यते, ग—घ—सञ्ज्ञयोरपि च तथाविधता। घ—सञ्ज्ञा हस्तलिखिता प्रतिः शेषापेक्षया शुद्धतमा, परन्तु न चैतस्या एवाधारेण संशोधनं शक्यम्। किञ्च पुस्तकचतुष्टये प्राप्तेऽपि कतिचन स्थलानि सन्देहास्पदानि सन्ति।

अस्य सम्पादनविधावनुगृहीतोऽस्मि महाशयैस्त्रिभिः। तत्र १३६तमानां पृष्ठानां द्वितीयवेलाशोधनपत्राणामेकस्या प्रतेः समीक्षणेनोपकृतोऽहं दक्षिणविहारिमुनिवर्यश्रीअमरविजयशिष्यरत्नमुनिश्रीचतुरविजयैः सम्पूर्णस्य ग्रन्थस्य मुद्रणवेलाशोधनपत्राणां तु डॉ. वासुदेवराव गोपालराव पराञ्जपे एम्. ए., एल्एल्. बी. इत्येभिर्महानुभावैः। अपरश्चाहमृणीकृतः श्रीफार्बसगुजरातीसभया यया जैनसाहित्यप्रचारकार्ये सुयोगः समर्पितो मह्यम्।

एवं यथासाधनं सम्पादितो विषमस्थानेषु टिप्पनकैर्विशिष्टपरिशिष्टैश्च समलङ्कृतोऽयं ग्रन्थः साद्यन्तः समीक्ष्यतां समीक्षकैः।

कथासाहित्यरसपिपासुभिः कर्णेहत्य निपीयताममन्दानन्दसन्दोहनिस्यन्दी रसनिवहः। अयं मदीयः परिश्रमः फलेग्रहितां नीयतां नीतिनिपुणैर्विद्याविनोदिभिः सद्भिः। क्षम्यन्तां 'क्षमासन्ततिचारुचित्तै'र्निसर्गोपनिपाताश्छाद्मस्थिकानि स्खलनानि। उपेक्ष्यन्तामशुद्धयो मुद्रणयन्त्रसञ्जातास्तन्नियुक्तजनसमाचरिता वा मात्राऽनुस्वाराङ्कादिपतनपरावर्तनप्रभृतयः प्रतिभाप्रतिष्ठापुरस्कृतैः परीक्षकैरिति प्रार्थयति विबुधवृन्दारविन्दमकरन्देन्दिन्दरो हीरालालो मोहमयीनगर्यां भूलेश्वरवीथ्या माघे सुदि सप्तम्यां २४५८तमे वीरसंवत्सरे।



# विषयानुक्रमः—Table of Contents

| विषयः | पृष्ठाङ्कः |
|---|---|
| Foreword ( आमुखम् ) | ५–६ |
| किञ्चित् प्रास्ताविकम् | ७–११ |
| श्रीचतुर्विंशतिप्रबन्धः | १–२५९ |
| उपक्रमः | १–२ |
| ( १ ) श्रीभद्रबाहुवराहप्रबन्धः | ३–७ |
| ( २ ) श्रीआर्यनन्दिलसूरिप्रबन्धः | ८–१२ |
| ( ३ ) श्रीजीवदेवसूरिप्रबन्धः | १३–१७ |
| ( ४ ) श्रीआर्यखपटसूरिप्रबन्धः | १८–२२ |
| ( ५ ) श्रीपादलिप्तसूरिप्रबन्धः | २३–२९ |
| ( ६ ) श्रीवृद्धवादि-सिद्धसेनसूरिप्रबन्धः | ३०–४२ |
| ( ७ ) श्रीमल्लवादिसूरिप्रबन्धः | ४३–४८ |
| ( ८ ) श्रीहरिभद्रसूरिप्रबन्धः | ४९–५४ |
| ( ९ ) श्रीबप्पभट्टिसूरिप्रबन्धः | ५५–९५ |
| (१०) श्रीहेमचन्द्रसूरिप्रबन्धः | ९६–१११ |
| (११) श्रीहर्षविद्याधर-जयन्तचन्द्रप्रबन्धः | ११२–११८ |
| (१२) हरिहरप्रबन्धः | ११९–१२५ |
| (१३) श्रीअमरचन्द्रसूरिप्रबन्धः | १२६–१३० |
| (१४) श्रीमदनकीर्तिप्रबन्धः | १३१–१३५ |
| (१५) श्रीसातवाहनप्रबन्धः | १३६–१५२ |
| (१६) श्रीवङ्कचूलप्रबन्धः | १५३–१५९ |
| (१७) श्रीविक्रमादित्यप्रबन्धः | १६०–१६९ |
| (१७ अ ) विक्रमचरितम् | १६९–१७१ |
| (१८) श्रीनागार्जुनप्रबन्धः | १७२–१७४ |
| (१९) श्रीवत्सराजोदयनप्रबन्धः | १७५–१७९ |

| विषयः | पृष्ठाङ्कः |
|---|---|
| (२०) श्रीलक्षणसेनप्रबन्धः | १८०–१८४ |
| (२१) श्रीमदनवर्मप्रबन्धः | १८५–१९० |
| (२२) श्रीरत्नप्रबन्धः | १९१–१९८ |
| (२३) श्रीआभडप्रबन्धः | १९९–२०४ |
| (२४) श्रीवस्तुपालप्रबन्धः | २०५–२५९ |
| **परिशिष्टानि** | २६०–३०५ |
| (१) सपादलक्षीयचाहमानवंशः | २६०–२६१ |
| (२) श्रीआर्यनन्दिलसूरिकृतो वैरोट्यास्तवः | २६१–२६३ |
| (३) 'उवसग्गहरं'स्तोत्रम् | २६४ |
| (४) श्रीपादलिप्तसूरिकृता श्रीवीरस्तुतिः | २६५–२६६ |
| (५) 'शान्तो वेषः'स्तवनम् | २६६–२६७ |
| (६) श्रीवस्तुपालकृतपुण्यकृत्यस्तुतिः | २६७–२६९ |
| (७) श्रीचतुर्विंशतिप्रबन्धगतपद्यानामकाराद्यनुक्रमः | २६९–२७६ |
| (८) विशिष्टनगनगरनरादीनां सूचिः | २७७–२९१ |
| (९) प्रकीर्णकटिप्पणकानि | २९२–३०० |
| (१०) शुद्धिपत्रकम् | ३०१–३०५ |




अर्हम्

श्रीराजशेखरसूरिवरविरचितः

# ॥ चतुर्विंशतिप्रबन्धः ॥

## प्रबन्धकोशेत्यपराह्वयः



राज्याभिषेके कनकासनस्थः, सर्वाङ्गदिव्याभरणाभिरामः[1]।
श्रियेऽस्तु वो 'मेरु'शिरोऽवतंसः, कल्पद्रुकल्पः प्रथमो[2] जिनेन्द्रः ॥१॥[3]

विवेकमुच्चैस्तरमारुरोह य–स्ततोऽद्रिशृङ्गं चरणं ततस्तपः।
ततः परं ज्ञानमथोत्तमं पदं, श्रियं स नेमिर्दिशतूत्तरोत्तराम् ॥२॥[6]

यस्मै स्वयंवरसमागतसप्ततत्त्व- 5
लक्ष्मीकरग्रहणमाचरतेति भक्त्या।
सप्त व्यधात् फणिपतिः फणमण्डपान् किं
वामाऽङ्गभूः स भगवान् भवतान्मुदे वः ॥ ३ ॥[7]

अर्थेन प्रथमं कृतार्थमकरोद् यो वीरसंवत्सरे
दाने च व्रतपर्वजेऽथ परमार्थेनापि विष्वग् जनम्। 10
यद्दत्तागमशुद्धबीजकबलादद्यापि तत्त्वाभिधा
लभ्यन्ते निधयो बुधै'र्भरत'भुव्यस्यां स वीरः श्रिये ॥ ४ ॥[8]

देयासुर्वाङ्मयं मे जिनपगणभृतो भारती सारतीव्रा
भारत्याः सौम्यदृष्ट्या विलसतु मम सा सन्तु सन्तः प्रसन्नाः[9]।
सूरिर्मे सद्गुरुः श्रीतिलक इति कलाः स्फोरयत्वस्तविघ्नः 15
शिष्याः स्फूर्जन्तु गर्जन्त्वविरलसुकृतश्रेणयः श्रावकौघाः ॥ ५ ॥[10]

---

१ ग–'णेऽभिरामः'। २ श्रीऋषभस्तीर्थङ्करः। ३ उपजातिः। ४ ग–'मथो सरं पद'। ५ क–'त्तरम्'। ६ वंशस्थविलम्। ७ वसन्ततिलका। ८ शार्दूलविक्रीडितम्। ९ क-ख-'प्रसन्ना'। १० स्रग्धरा।

इह किल शिष्येण विनीतविनयेन श्रुतजलधिपारङ्गमस्य क्रियापरस्य गुरोः समीपे विधिना सर्वमध्येतव्यम् । ततो भव्योपकाराय देशना क्लेशनाशिनी विस्तार्या । तद्विधिश्चायम्—अस्खलितम्, अमिलितम्, अहीनाक्षरं सूत्रमुच्चार्यम्[2] । अग्राम्यललितभङ्ग्याऽर्थः कथ्यः ।
५ कायगुप्तेन परितः सभ्येषु दत्तदृष्टिना यावदर्थबोधं वक्तव्यम् । वक्तुः प्रायेण चरितैः प्रबन्धैश्च कार्यम् । तत्र श्रीऋषभादिवर्धमानान्तानां जिनानाम्, चक्र्यादीनां राज्ञाम्, ऋषीणां चार्यरक्षितान्तानां वृत्तानि चरितानि उच्यन्ते । तत्पश्चात्कालभाविनां तु नराणां वृत्तानि प्रबन्धा इति ।

१० इदानीं वयं गुरुमुखश्रुतानां विस्तीर्णानां रसाढ्यानां चतुर्विंशतेः प्रबन्धानां सङ्ग्रहं कुर्वाणाः स्म । तत्र सूरिप्रबन्धा दश, कविप्रबन्धाश्चत्वारः, राजप्रबन्धाः सप्त, राजाङ्गश्रावकप्रबन्धास्त्रयः, एवं चतुर्विंशतिः । १ भद्रबाहु-वराहयोः, २ आर्यनन्दिलक्षपणकस्य, [3]जीवदेवसूरीणाम्, ४ आर्यखपटाचार्याणाम्, ५ पादलिप्त-
१५ प्रभूणाम्, ६ वृद्धवादि-सिद्धसेनयोः, ७ मल्लवादिनः, ८ [4]हरिभद्रसूरीणाम्, ९ [5]बप्पभट्टिसूरीणाम्, १० [6]हेमसूरीणाम्, ११ श्रीहर्षकवेः, १२ हरिहरकवेः, १३ अमरचन्द्रकवेः, १४ दिगम्बरमदनकीर्तिकवेः, १५ सातवाहन—१६ वङ्कचूल—१७ विक्रमादित्य—१८ नागार्जुन—१९ उदयन—२० लक्ष्मणसेन—
२० २१ मदनवर्मणाम्, २२ [7]रत्न—२३ आभड—२४ वस्तुपालानां चेति । [8]तेषु प्रथमम्—

[ १ ]

## ॥ भद्रबाहुवराहप्रबन्धः ॥

दक्षिणापथे 'प्रतिष्ठान'पुरे भद्रबाहु-वराहाह्वौ द्वौ द्विजौ कुमारौ निर्धनौ निराश्रयौ प्राज्ञौ वसतः । तत्र यशोभद्रो नाम

---

१ घ– 'इह हि किल' । २ ख-ग-घ-'सूत्रम्' । ३ ग-घ-'श्रीजीव०' । ४ घ–'श्रीहरि०' । ५ घ–'श्रीबप्प०' । ६ घ–'श्रीहेम०' । ७ घ–'रत्नश्रावक-आभड०' । ८ ख-घ-'एषु' ।

चतुर्दशपूर्वी समागतः। भद्रबाहु-वराहौ तद्देशनां शुश्रुवतुः। यथा–

भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायं भव–
स्तत्त्वस्येह कृते परिभ्रमत रे लोकाः ! सृ(कृ?)तं चेष्टितैः।
आशापाशशतोपशान्तिविशदं चेतः समाधीयतां
क्काप्यात्यन्तिकसौख्यधामनि यदि श्रद्धेयमस्मद्वचः ॥ १ ॥[३]

एतच्छ्रवणमात्रत एव प्रतिबुद्धौ गृहं गत्वा तौ मन्त्रयेते स्म–जन्म ५
कथं वृथा नीयते ?। तावद् भोगसामग्री नास्ति, तर्हि योगः साध्यते।

अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम्।
यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं १०
नो चेच्चेतः ! प्रविश सहसा निर्विकल्पे समाधौ ॥१॥[५]

इति विमृश्य द्वावपि बान्धवौ प्रवव्रजतुः।

भद्रबाहुश्चतुर्दशपूर्वी षट्त्रिंशद्गुणसम्पूर्णः सूरिरासीत्। १ दश-वैकालिक–२ उत्तराध्ययन–३ दशाश्रुतस्कन्ध–४ कल्प–५ व्यवहार–६ आवश्यक–७ सूर्यप्रज्ञप्ति–८ सूत्रकृत-९ आचा- १५
राङ्ग–१० ऋषिभाषिताख्यग्रन्थदशकप्रतिबद्धदशनिर्युक्तिकारतया पप्रथे, भ(भा?)द्रबाहवीं नाम संहितां च व्यरचयत्। तदा आर्यसम्भूतिविजयोऽपि चतुर्दशपूर्वी वर्तते। श्रीयशोभद्रसूरीणां स्वर्गगमनं जातम्। भद्रबाहुसम्भूतिविजयौ स्नेहपरौ परस्परं भव्याम्भोरुहभास्करौ विहरतो 'भरते' पृथक् पृथक्। वराहोऽपि २०
विद्वानासीत्; केवलमखर्वगर्वपर्वतारूढः सूरिपदं याचते भद्र-बाह्वाह्वसहोदरपार्श्वात्। भद्रबाहुना भाषितः सः–वत्स ! विद्वा-नसि, क्रियावानसि, परं सगर्वोऽसि; सगर्वस्य सूरिपदं न दद्मः। एतत् सत्यमपि तस्मै न सस्वदे, यतो 'गुरुवचनममलमपि महदुप-जनयति श्रवणस्थितं शूलमभव्यस्य'। ततो व्रतं तत्याज। मिथ्यात्वं २५

---

१ घ–'भुव–'। २ घ–'शान्त०'। ३ शार्दूल०। ४ख–'गृहं'। ५ मन्दाक्रान्ता। ६ क-ख–'स्वर्गं०'। ७ घ–'मपि सलिलमिव मह०'। ८ क–'सदुप०'।

गतः पुनर्द्विजवेषं जग्राह ।

व्रतावस्थाऽधीतशास्त्रार्थज्ञतया वाराहसंहितादिनवीनशास्त्र-रचनायां प्रजगल्भे, लोकेषु च जगाद— अहं बाल्ये लग्नमभ्य-स्यामि स्म । तद्विचार एव लीनस्तिष्ठामि स्म । एकदा प्रतिष्ठानाद्
५ बहिः [1]शिलायामेकस्यां लग्नं मण्डयामि स्म । सायममृष्ट एव तस्मिन् स्वस्थानमागत्य स्वपिमि स्म । सुप्तोऽहं तल्लग्नममृष्टं स्मरामि स्म । ततो मार्ष्टुं तत्र यामि स्म । तत्र लग्नाधिष्ठिते शिलातले पञ्चानन उप-विष्टोऽभूत्, तथापि तदुदरदेशे करं निक्षिप्य मया तल्लग्नं मृष्टम्; तावता पञ्चाननः साक्षाद् भास्कर एवाभूत् । तेनाहं भाषितः—
१० वत्स ! तव [2]दृढानिश्चयतया लग्नग्रहभक्त्या च बाढं तुष्टोऽस्मि, रविरहम्, वरं वृणीष्व । अथ मयोक्तम्—स्वामिन् ! यदि प्रसन्नोऽसि तदा निजविमाने चिरं माम[3]वस्थाप्य सकलमपि ज्योतिश्चक्रं मे दर्शय । अथाहं [4]मिह(हि)रेण चिरं स्वविमानस्थः खे [5]भ्रामितोऽस्मि । सूर्यसङ्क्रमितामृतसन्तर्पितेन च मया क्षुत्तृषादिदुःखं न
१५ किञ्चिदनुभूतम् । कृतकृत्यश्च सूर्यमापृच्छ्य ज्ञानेन च जगदुप-कर्तुं महीलोकं भ्रमन्नास्मि । अहं वराहमिह(हि)र इति वाच्यः । इत्यादि स्वैरं प्रख्यापयामास । सम्भाव्यत्वात् लोके पूजां परमा-[6]माप्य 'प्रतिष्ठान'पुरे शत्रुजितं भूपालं कलाकलापेन रञ्जयामास । तेन निजपुरोहितः कृतः । यतः—

२० गौरवाय गुणा एव, न तु ज्ञातेयडम्बरः ।
[7]वानेयं गृह्यते पुष्प–मङ्गजस्त्यज्यते मलः ॥ १ ॥[8]

अथ श्वेताम्बरान् निन्दति—किममी वराकाः काका [9]विदान्ति[?] मक्षिकावद् भिणिहणायमानाः कारास्था इव कुचेलाः कालं क्षपयन्ति, क्षपयन्तु । तच्छृण्वतां श्रावकाणां शिरःशूलमुत्पेदे । [10]धिगिद-

१ क–'विशालायामेक०' । २ क-ख– 'दृढतया लग्न०' । ३ ग–'मवस्थापय' । ४ सूर्येण । ५ क-ख-घ-' भ्रमितोऽस्मि ' । ६ क-ख– 'माप' । ७ वने जातम् । ८ अनुष्टुप् । ९ क-ख–'वदन्ति' । १० क–ख– 'धिगस्माक' ।

मस्माकं जीवितं येन गुर्ववज्ञां सहामहे । किं कुर्मः? । अयं कलावानिति नरपतिना पूज्यते । राजभिः पूज्यते यश्च सर्वैरपि पूज्यते । भवतु, तथापि भद्रबाहुमाह्वयामस्तावत् । इति सम्मन्त्र्य तथैव चक्रुः । आगताः श्रीभद्रबाहवः । कारिताः श्रावकैः ससंपर्द्धप्रवेशमहः । स्थापिता गुरवः सुस्थाने । नित्यं व्याख्यारसानास्वादयामासुः ५ सभ्याः । भद्रबाह्वागमे स वराहो बाढं मम्लौ, तथापि तेभ्यो नापकर्तुमशकदसौ ।

अत्रान्तरे वराहमि(हि)हरगृहे पुत्रो जातः । तज्जन्मतुष्टः प्रभूतं धनं व्ययति स्म । लोकाच्च पूजामाप्नोति स्म । पुत्रस्य वर्षशतमायुरिति तेन नरेन्द्रादिलोकाग्रसभासमक्षं प्रख्यापितम् । १० गृहे उत्सवोदयस्तस्य ।

एकदा सदसि वराहः प्राह स्म— अहो सहोदरोऽपि भद्रबाहुर्मे पुत्रजन्मोत्सवे नागात् इति बाह्या एते । एतदाकर्ण्य श्रावकैर्भद्रबाहुर्विज्ञप्तः— एवं एवमसौ वदन्नास्ते, गम्यतां भवद्भिरेकदा तद्गृहम्, मा वृधन्मुधा क्रोधः । श्रीभद्रबाहुनाऽऽ- १५ दिष्टम्— द्वौ क्लेशौ कथं कारयध्वे ? । अयं बालः सप्तमे दिने रात्रौ निशीथे बिडालिकया घानिष्यते । तस्मिन् मृते शोकविसर्जनायापि गन्तव्यमेव तावत् । ततः श्रावकैरूचे— तेन विप्रेणोपराजमर्भस्य समाशतमायुरुक्तम्, भवद्भिः पुनरित्थमादिष्यते, किमेतत् ? श्रीभद्रबाहुस्वामिना भणितम्— ज्ञानस्य प्रत्ययः सारम्, स चासन्न २० एवास्ते । स्थितास्तूष्णीं श्रावकाः । आगतं सप्तमं दिनम् । तत्रैव द्विप्रहरमात्रायां रात्र्यां बालं स्तन्यं पाययितुं धात्र्युपविष्टा । द्वारशाखाग्रे न्यस्ताऽर्गला बालमस्तके पतिता जनान्तरसञ्चारात् ।

---

१ 'ख'– 'स पूज्यते' । २ क–ख 'सस्पर्द्धिप्र०' । ३ घ–'स्पर्ध' । ४ ग- 'भद्रबाह्वागमे वराहो । ५ क–' भद्रबाहुर्मे इत आरभ्य 'क्रोधः' एतत्पर्यन्त नास्ति। ६ ख-' भद्रबाहुना' । ७ ग- 'पुनरिद०' । ८ ख–'बाहुना' । ९ क-ख–'मात्र्यां' । १० ग–'रात्रौ' । ११ ग–'शाखाग्रन्यस्ता०' । १२ क-ख–'मस्तकपतिता' ।

प्रमीतो[1] बालः। रुद्यते **वराह**गृहे। मिलितो लोकः । **भद्रबाहु**नाऽपि श्रावका उक्ताः-- शोकापनोदो धर्माचार्य इति तत्रास्माभिरधुना गन्तव्यम् । श्रावकशतावृता[2] गतास्तत्राचार्याः । **वराहः** शोकसङ्कुलोऽप्यभ्युत्थानाद्युचितमकरोत्,[3] अभ्यदधाच्च[4]-- आचार्याः ! भवतां
५ ज्ञानं मिलितम्, केवलं बिडालीतो मृत्युर्न, किन्त्वर्गलातः । **भद्रबाहु**ना निजगदे--तस्या अर्गलाया लोहमय्या अग्रभागे रेखामयी विडाल्यस्ति, नासत्यं ब्रूमः । आनीताऽवलोकिताऽर्गला[5] तथैवास्ते, अथोवाच **वराहः**-- तथा पुत्रशोकेन न खिद्येऽहं यथा राजविदिताख्यातपुत्रशतायुस्त्ववैफल्येन खिद्ये। धिगमीषां निजपुस्तकानां
१० प्रत्ययेनास्माभिर्ज्ञानं प्राकाशि,[6] एतान्यसत्यानि, तस्मान्मृज्मः[7] । इत्युक्त्वा कुण्डानि जलैरपूपुरत् । पुस्तकानि मार्ष्टुं स यावदारभते तावद् **भद्रबाहु**ना बाहुना[8] धृत्वा वारितः । आत्मप्रमादेन ज्ञानं विनाश्य कथं पुस्तकेभ्यः कुप्यसि ? एते पुस्तकाः सर्वज्ञोक्तमेव भाषन्ते, ज्ञाता तु दुर्लभः। अमुकस्मिन् स्थाने त्वं विपर्यस्तमतिर्जातः,
१५ आत्मानमेव निन्द ।

प्रभुप्रसादस्तारुण्यं, विभवो रूपमन्वयः ।
शौर्यं पाण्डित्यमित्येत--दमद्यं मदकारणम् ॥ १ ॥[9]

मत्तस्य च कुतो विचारसूक्ष्मेक्षिकाः ? । तस्मान्मा भाङ्क्षीः पुस्तकान् इति निषिद्धः । विलक्षीभूय स्थितो **वराहः** । तत्रान्तरे पूर्वं तत्कृता-
२० र्हन्मतगर्हापीडितमनसा केनापि श्रावकेण पठितम्---

युष्मादृशाः क्षपणकाः कृमयोऽपि यस्यां
भान्ति स्म सन्तमसमभ्युगमन्निशाऽसौ ।
सूर्यांशुदीप्तदशदिग्दिवसोऽधुनाऽयं
भात्यत्र नेन्दुरपि कीटमणे ! किमु त्वम् ॥१॥[10]

---

१ ग-'प्रमृतो'। २ ग-'शतवृता' । ३ ख-' शङ्कुसङ्कुलो '। ४ क-'अभ्यधाच्च' । ५ क-'आनीयाव०'। ६ क-'प्रकाशित' । ७ ग- 'तस्मात् तु मृज्मः' । ८ ग-'वाहौ' । ९ अनुष्टुप् । १० वसन्त० ।

इति वदन्नेव नष्टः सः । बाढं पीडितो वराहः । अत्रान्तरे स्वय-
मागतो राजा । राज्ञोक्तम्—मा स्म शोचीः, भवस्थितिरियं विद्वन् ! ।
तदा जिनभक्तेन राजमन्त्रिणैकेन भणितम्—ते आचार्या नवा
याताः सन्ति यैर्डिम्भस्य सप्ताहमात्रमायुरभाणि, ते सङ्गतवाचो
महात्मानः । केनापि दर्शिता भद्रबाहवः, एते ते; तदा द्विज- ५
स्तथा दूनो यथा स एव विवेद । गतो राजाऽपि, भद्रबाहुरपि,
लोकोऽपि स्वस्थानम् । राजा श्रावकधर्मं प्रतिपेदे । वराहोऽप-
मानाद् भागवतीं दीक्षां गृहीत्वाऽज्ञानकष्टानि महान्ति कृत्वा जैन-
धर्मद्वेषी दुष्टो व्यन्तरोऽभूत् । ऋषिषु द्वेषवानपि न प्रबभूव । तपो
हि वज्रपञ्जरप्रायं महामुनीनां परप्रेरितप्रत्यूहपृषत्कदुर्भेदतरम् । अतः १०
श्रावकानुपद्रोतुमारेभे । गृहे गृहे रोगानुत्पादयामास । श्रावकैः पीडार्त्तै-
र्भद्रबाहुरादरेण विज्ञप्तः—भगवन् ! भवति सत्यपि यद् वयं रुग्भिः
पीड्यामहे, तत् सत्यमिदम्—कुञ्जरस्कन्धाधिरूढोऽपि भषणैर्भक्ष्य-
(ष्य ?)ते इति ? । गुरुभिरभाणि—मा भैष्ट, सोऽयं वराहमिह(हि)रः[1]
पूर्ववैराद् भवद्भ्यो दुध्रुक्षति । रक्षामि पाणेरपि वज्रपाणेः । ततः १५
पूर्वेभ्य उद्धृत्य 'उवसग्गहरं पासम्' इत्यादि स्तवनं गाथापञ्चक-
मयं सन्दृभे गुरुभिः । पठितं च [2]तल्लोकैः । सद्यः शान्तिं गताः
क्लेशाः । अद्यापि कष्टापहारार्थिभिस्तत् पठ्यमानमास्ते । अचिन्त्य-
चिन्तामणिप्रतिमं च तत् । श्रीभद्रबाहुना विद्योपजीवी चतुर्दश-
पूर्वी श्रीस्थूलभद्रः परमतान्यचुचूर्णत् । २०

इति श्रीभद्रबाहुवराहप्रबन्धः प्रथमः ॥ ग्र० १२२ ॥



१ ख–'वराहचरः' । २ ख–'तल्लोके' ।

[ २ ]

## ॥ अथार्यनन्दिलप्रबन्धः ॥[1]

'पद्मिनीखण्ड'पत्तने **पद्मप्रभ**[2]नामा राजा। तस्य भार्या **पद्मावती**। तस्मिन् पुरे **पद्मदत्त**नामा श्रेष्ठी वसति। तस्य कान्ता **पद्मयशा** नाम। तयोः सुतः **पद्म**नामाऽभूत्। **वरदत्तेन** सार्थवाहेन स्वकीया **वैरोट्या** नाम पुत्री तस्य दत्ता। स तां व्यवाहयत्।

५ अन्यदा **वरदत्तो वैरोट्या**जनकः सपरिवारो देशान्तरं गच्छन् वनदवेन दग्धः। **वैरोट्यां** श्वश्रूः शुश्रूष्यमाणाऽपि [3]निष्पितृकां भणित्वाऽपमानयति। यतः—

रूपं रहो धनं तेजः, सौभाग्य प्रभविष्णुता।
प्रभावात् पैतृकादेव, नारीणां जायते ध्रुवम् ॥१॥[4]

१० सा श्वश्रूवचनैः कुकूलानलकर्कशैः पीडिताऽपि [5]दैवमुपालभते, न श्वश्रूं निन्दति, चिन्तयति च—

[6]सव्वो पुव्वकयाणं, कम्माणं पावए फलविवागं।
अवराहेसु गुणेसु य, निमित्तमि(म ?)त्तं परो होइ ॥ १ ॥[7]

अन्यदा **वैरोट्या** भोगीन्द्रस्वप्नसूचितं गर्भं बभार। पायसभोजन-

१५ दोहद उत्पन्नः। तदाऽऽचार्य**नन्दिल**नामा सूरिरुद्याने समवासार्षीत्, सार्द्धनवपूर्वधर आर्यरक्षितस्वामिवत्। **वैरोट्यायाः** श्वश्रूरिति वक्ति—अस्या वध्वाः सुता भविष्यति, न तु सुतः। इति [8]कर्णक्रकचकर्कशतद्वचःपीडिता सती सा सती वधूः सूरिवन्दनार्थं गता। सूरयो वन्दिताः। [9]स्वस्य श्वश्र्वा सह विरोधोऽकथि।

---

१ क–'नन्दिप्रबन्धः'। २ क–'पद्मप्रभो'। ३ क–'निःपितृका'। ४ अनुष्टुप्। ५ क-ग– 'देवमुपा०'।

६ छाया—सर्वः पूर्वकृतानां कर्मणां प्राप्नोति फलविपाकम्।
अपराधेषु गुणेषु च निमित्तमात्रं परो भवति ॥

७ आर्या। ८ ख–'कर्णे क्रकच०'। ९ ख–'ततः स्वस्य'।

सूरिभिरुक्तम्—पूर्वकर्मदोषोऽयम्, क्रोधो न वर्द्धनीयः, भवहेतुत्वात्, वत्से!

ईह लोए च्चिय कोवो, सरीरसंतावकलहवेराइं।
कुणइ पुणो परलोए, नरगाइसुदारुणं दुक्खं ॥ १ ॥[1]

पुत्रं च लप्स्यसे। पायसदोहदस्ते जातोऽस्ति सोऽपि यथा ५
तथा पूरयिष्यते[3]। इति सा सूरिवचसाऽऽनन्दितचित्ता निजगृह-
मागच्छत्, अचिन्तयच्च—

अस्माभिश्चतुरम्बुराशिरसनाविच्छेदिनी मेदिनीं
भ्राम्यद्भिः स न कोऽपि निस्तुषगुणो दृष्टो विशिष्टो जनः।
यस्याग्रे चिरसञ्चितानि हृदये दुःखानि सौख्यानि वा १०
व्याख्याय क्षणमेकमर्द्धमथवा निःश्वस्य विश्रम्यते ॥ १ ॥[4]

[5]एते तु गुरवस्तादृशाः सन्ति।

पद्मयशा अपि चैत्रपूर्णिमायामुपोषिता '[6]पुण्डरीक'तपसि
[7]क्रियमाणे उद्यापनमारेभे। तद्दिने पायसपूर्णः प्रतिग्रहो यतिभ्यो
दीयते, साधर्मिकवात्सल्यं च क्रियते। तया सर्वं कृतम्। वध्वाः १५
पुनर्वैरभावात् कुलत्थादि कदशनं दत्तम्। वधूः पुनः स्थाल्या-
मुद्धृतं पायसं प्रच्छन्नं गृहीत्वा वस्त्रे बद्ध्वा घटे क्षिप्त्वा जलाशयं
जलाय गता। वृक्षमूले कुम्भं मुक्त्वा यदा हस्तपादप्रक्षालनार्थं
गता तावताऽलिञ्जरनामा नागः पातालेऽस्ति, तस्य कान्तायाः
[10]क्षीरान्नदोहदः समजनि। पृथिव्यामायाता क्षीरान्नं गवेषयति। तत्र २०
तरोर्मूले घटमध्ये क्षीरान्नं दृष्टम्, भुक्तं च। येन मार्गेणागता तेनैव

---

१ छाया—इह लोके एव कोपः शरीरसन्तापकलहवैराणि।
करोति पुनः परलोके नरकादिसुदारुणं दुःखम् ॥
२ आर्या। ३ क-'पूरयिष्ये'। ४ शार्दूल०। ५ क-ख-'एते गुरव०'
६ एतत्स्वरूपार्थं प्रेक्ष्यतां क-परिशिष्टम्। ७ क-'क्रियामारेभे'। ८ क-ख-
'भरात्'। ९ ख-'कृत्वा'। १० ग-'पायसदोहदः'।

गता नागपत्नी। यदा **वैरोट्या** पादशौचं कृत्वा समायाति तावत् क्षीरान्नं न पश्यति, तथापि न चुकोप, न विरूपं बभाषे, किन्त्वेवं बभाषे[1]—'येनेदं भक्षितं भक्ष्यं पूर्यतां तन्मनोरथ इत्याशिषं ददौ।

इतश्चाऽलिञ्जरपत्न्या तदन्तरितस्थितया तस्यास्तदाशीर्वचनं श्रुतं स्वस्थानमेत्य स्वभर्त्रे निवेदितं च। **वैरोट्या** स्वगृहमागता। ततो रात्रौ **वैरोट्या**प्रातिवेश्मिक्याः स्त्रियाः स्वप्ने नागपत्न्या कथितम्—भद्रे! अहं **अलिञ्जर**नागपत्नी, मदीया तनया **वैरोट्या**, तस्याः पायसदोहदोऽस्ति, स तस्यास्त्वया पूरणीयः। तथा तस्याग्रे कथनीयम्—तव [2]पितृकुल नास्ति, परमहं पितृसमानोपकारं करिष्यामि, श्वश्रूपराभवाग्नितापमुपशमयिष्यामि। तया प्रातिवेश्मिक्या प्रातर्वैरोट्या क्षीरान्नं भोजिता। सम्पूर्णदोहदा सुतमजीजनत्। नागकान्तयाऽपि सुतशतमसूयत। **वैरोट्या**पुत्रनामकरणदिने पन्नगेन उत्सवः कारितः। यत्र पितृगृहं[3] पूर्वं स्थितं तत्र धवलगृहं कारयित्वा [4]पातालवासिभिर्नागैरलङ्कृतम्। गजा-ऽश्व-वरवाहन-पदातिवर्गसहिता नागलोकाः समाययुः। तस्या गृहलक्ष्म्या[5] सङ्कीर्णं चक्रुः। [6]**अलिञ्जर**पत्नी पतिना (? पत्न्या) पुत्रैश्च युता दिव्यवस्त्रपट्टकूलस्वर्णरत्नखचितसर्वाङ्गाभरणादिकं सर्वं मनोज्ञं वस्तुसमूहं **वैरोट्या**याः प्रतिपन्नसुतात्वेन पूरयति। **वैरोट्या अलिञ्जर**पत्नीगृहे नित्य यात्यायाति च। **अलिञ्जर**पत्न्याऽतीव मान्यते, पूज्यते **वैरोट्या**। श्वश्रूस्तथारूपं[7] पितृगृहं मेलापकमिव दृष्ट्वा वधूं[8] सत्कर्तुमारेभे। [9]लोकः पूजितपूजकः। **वैरोट्या**या रक्षार्थं नागवध्वा स्वकीयलघवः शतं पुत्राः सर्पकाः[10] समर्पिताः। तया सर्पा घटे क्षिप्ताः। तत्र च कयापि कर्मकर्या अग्नितप्तस्थालीमुखे सर्पघटो

१ ग-'वभाण'। २ पद्यार्थमिदम्। ३ क-ख-'पितुर्गृहं'। ४ क-ख-'पातालवासिभिरधिकृतं नागैः कृतम्'। ५ क-ख-'गृह सङ्कीर्णं'। ६ क-खप्रत्यो. 'अलिञ्जरपत्नी' इत आरभ्य 'पूज्यते **वैरोट्या**' पर्यन्तं नास्ति। ७ ग-'विध पितृ०'। ८ ग-'ता **वैरोट्यां** वधू'। ९ श्लोकचरणं सम्भाव्यते। १० क-'सर्पाः'।

दत्तः। [1]तत्क्षणमेव **वैरोट्ययो**च्चारितः। पानीयेनाभिषिक्तास्ते ततः [2]स्वस्थाः सम्पन्नाः। एकस्तु शिशुर्विपुच्छो जातः। यदा स स्खलति क्षितौ तदा **वैरोट्या** ब्रूते—[3]बण्डो जीवतु। **वैरोट्या**जातकस्य स्नेहेन मोहितास्ते सर्वे बान्धवरूपाः सर्पाः क्षौमरत्नस्वर्णादि दत्त्वा नामकरणं च कारयित्वा यथास्थानं ययुः। **वैरोट्या** नागप्रभावात् गौरवपात्रं जाता। 5

अन्यदाऽ**लिञ्जरः** स्वपुत्रं पुच्छरहितं दृष्ट्वा चुक्रोध। [4]मम पुत्रः केन दुरात्मना विपुच्छः कृतः ?। ततो **वैरोट्यया** कृतो विपुच्छो मे पुत्र इत्यवधिना ज्ञात्वा [5]**वैरोट्याया** उपरि पूर्वं सुप्रसन्नोऽपि चुकोप। कुपितः सन् विरूपं कर्तुं **वैरोट्या**गृहमगमत्। 10 **अलिञ्जरो** गूढ[6]तनुगृहमध्ये स्थितः। यदा **वैरोट्या** ध्वान्तभरे सति गृहापवरकमध्ये प्रविष्टा तदा तयोक्तम्— बण्डो जीवतु [7]चिरम्। तच्छ्रुत्वा नागराजः सन्तुष्टस्तस्यै नूपुरे ददौ। अद्यप्रभृति वत्से! त्वया पाताले आगन्तव्यम्, नागाश्च त्वद्गृहमेष्यन्ति इति प्रसादः कृतः। सा **वैरोट्या** पाताले गमनागमनं करोति। 15 [8]नागवरात् **नागदत्त** इति नाम दत्तं पुत्रस्य। तदा **पद्मदत्तो वैरोट्या**श्वशुरः श्रीआर्य**नन्दि**लक्षपणकैरेवमुक्तः— त्वया स्ववध्वग्रे कथनीयम्, नागाश्रयं गतया त्वया नागा वक्तव्याः—भवद्भिर्लोकस्यानुग्रहः [9]करणीयः, कोऽपि न दंष्टव्यः। तत् सूरिवचनं श्वशुरेण तस्यै, तथा च नागेभ्यः कथितम्। तत्र गता च **वैरोट्या** एवमुच्चैर्जगौ— 20 साऽ**लिञ्जर**पत्नी जीयाद् सोऽ**लिञ्जरो** जीयात् [10]येनाहमपितृगृहाऽपि सपितृगृहा कृता, अनाथाऽपि सनाथा [11]जाता।

---

१ ग-पुस्तके 'तत्क्षणमेव' एतदधिकम्। २ क-'सुस्थाः'। ३ 'बांडो' इति गूर्जरभाषायाम्। ४ ग-पुस्तके 'मम' इत्यत आरभ्य 'इति' एतत्पर्यन्तमाधिक्यं विद्यते। ५ क-खप्रत्योः 'वैरोट्या' इत्यत आरभ्य 'कर्तुं' एतत्पर्यन्तं न दृश्यते। ६ क--ख-'तनुमध्ये'। ७ ग--पुस्तके 'चिरं' अधिकं विद्यते। ८ क--खप्रत्योः 'नागदत्त इति नाम दत्तं पुत्रस्य' एतच्च दृश्यते। ९ ग--'कर्तव्यः'। १० क-'येनाहमपि सपितृगृहा कृता'। ११ ग--'सञ्जाता'।

भो भो नागकुमाराः ! आर्य**नन्दिल**ेन महात्मना एवमादिष्टम्—लोको न पीडयितव्यः, [1]लोकस्यानुग्रहः कार्यः । **वैरोट्या** पुनरपि स्वगृहं [2]गता । गुरुणा **वैरोट्या**स्तवो नवो विरचितः । यो **वैरोट्या**स्तवं पठति तस्य [3]पन्नगभयं नास्ति । पन्नगाः सर्वे **वैरोट्या**या गुरोः पार्श्वमानीताः । उपदेशं श्राविता उपशान्तचित्ताः [4]संवृत्ताः । **नागदत्त**नामा **वैरोट्या**पुत्रः सौभाग्यरङ्गभूरभूत् । **पद्मदत्त**ेन प्रियासहितेन व्रतं गृहीतम् । तपस्तप्त्वा स्वर्गं गतः । **पद्मयशा** अपि तस्य देवत्वं प्राप्तस्य इच्छासिद्धियुजो देवी सञ्जाता । **वैरोट्या** च फणीन्द्राणां(न्द्रस्य ?) ध्यानान्मृत्वा **धरणेन्द्र**पत्नीत्वेनोत्पन्ना । तत्रापि '**वैरोट्या**' इति नामास्याः ।

इति आर्यनन्दिलप्रबन्धः ॥ २ ॥



---

१ ग-पुस्तके 'लोकस्यानुग्रहः कार्यः' एतदधिकम् । २ क- 'आगता' । ३ सर्पभीतिः । ४ ग- पुस्तके 'संवृत्ताः' एतदधिकम् ।

## [ ३ ]

## ॥ अथ श्रीजीवदेवसूरिप्रबन्धः ॥

'गूर्जर'धरायां वायुदेवता[1]स्थापितं 'वायटं' नाम महास्थानम्। तत्र धर्मदेवनामा श्रेष्ठी धनवान्। तस्य शीलवती नाम गेहिनी गेहश्रीरिव देहिनी। तयोः सुतौ महीधर-महीपालौ। महीपालः क्रीडाप्रियो न कलाऽभ्यासं करोति। ततः पित्रा [2]हक्कितो रुष्टो देशान्तरमसरत्। धर्मदेवश्रेष्ठी परलोकं प्राप्तः। महीधरोऽपि श्रीजिनदत्तसूरीणां 'वायट'गच्छीयानां पादमूले प्रवव्राज। स राशिल्लसूरिर्नाम सूरीन्द्रो बभूव। महीपालोऽपि पूर्वस्यां दिशि 'राजगृहे' पुरे दिगम्बराचार्यदीक्षां प्राप्याचार्यपदमवाप। सुवर्णकीर्तिः इति नाम पप्रथे। श्रुतकीर्तिना गुरुणा तस्मै द्वे विद्ये प्रदत्ते—'चक्रेश्वरी'विद्या 'परकायप्रवेश'विद्या च। धर्मदेवे दिवं गते शीलवती दुःखिन्यासीत् यतः—

यथा नदी विनाऽम्भोदाद्, यामिनी [3]शशिना विना।
अम्भोजिनी विना भानुं, भर्त्रा कुलवधूस्तथा ॥१॥[4]

'राजगृहा'गतपरिचितमनुष्यमुखेन स्वपुत्रं स्वर्णकीर्तिं तत्रस्थं ज्ञात्वा तन्मिलनाय गता। मिलितः [5]स्वर्णकीर्तिस्तस्याः। उन्मीलितो मातापुत्रस्नेहः। एकदा तया सुवर्णकीर्तिर्भाषितः—तव पिता दिवमगमत्। त्वमत्र सूरिः। महीधरस्तु[6] राशिल्लसूरिर्नाम श्वेताम्बरसूरिपदे वर्तते। 'वायट'प्रदेशे विहरति। युवां द्वावेकमतीभूय एकं धर्ममाचरतम्। 'वायट'मानीतस्तया सः। द्वौ बान्धवौ एकत्र मिलितौ। सुवर्णकीर्तिर्भाषितो मात्रा, वत्स! त्वं श्वेताम्बर एधि। सुवर्णकीर्तिर्वदति— राशिल्लसूरिर्दिगम्बराचार्यो भवतु मदनुसरणात्। एवं वर्तमाने मात्रा द्वे रसवत्यौ

१ क-ख--'स्थित'। २ 'हांकी कढायेलो' इति भाषायाम्। ३ ग--'शशिन'। ४ अनुष्टुप्। ५ ग- 'सुवर्णकीर्तिः'। ६ क-ख--'महीपालस्तु'।

कारिते—एका विशिष्टा, [1]अपरा मध्यमा कुटुम्बार्थी । [2]दिग्वासाः पूर्वमाकारितः । स विशिष्टां रसवतीं भुङ्क्ते स्वैरम्, कुरसवतीं पश्यत्यपि न । राशिल्लसूरिशिष्यौ द्वावागतौ । ताभ्यां निर्जरार्थिभ्यां कुरसवतीं विजह्रे । मात्रा भोजनादनु दिगम्बरः प्रोक्तः—वत्स ! एते श्वेताम्बराः शुद्धाः, त्वमाधाकर्मचिन्तां न करोषि । एते तु वदन्ति—

[3]भुंजइ आहाकम्मं, सम्मं न य जो पडिकम्मइ ।
लुद्धो सव्वजिणाणा—विमुहस्स तस्स आराहणा नत्थि ॥ १ ॥

तथैव च पालयन्ति । [4]तस्मादेतेषां मिल, मोक्षमिच्छसि चेत् । स्वर्णकीर्तिर्मातृवचसा प्रबुद्धः श्वेताम्बरदीक्षा[5]माददे । जीवदेवसूरिः इति नाम तस्य दशसु दिक्षु विस्तृतम् । यतिपञ्चशतीसहचरो विहरन् भव्यानां मिथ्यात्वादिरोगान् सुदेशनापीयूषप्रवाहेण निर्दलयति ।

श्रीसूरेरेकदा देशनायां योगी कश्चिदा[6]यातः । [7]स 'त्रैलोक्यजयिनीं' विद्यां साधयितुं द्वात्रिंशल्लक्षणभूषितं नरं विलोकयति । तस्मिन् समये ते त्रय एव—एको विक्रमादित्यः, द्वितीयो जीवदेवसूरिः, तृतीयः स एव योगी, नान्यः । राजाऽवध्यः । नरकपाले एकपुटे षण्मासीं यावद् भिक्षा याच्यते भुज्यते च, ततः सिध्यति । तेन सूरिं छलयितुमायातः । सूरीणां 'सूरि'मन्त्रप्रभावाद् वस्त्राण्येव नीलीभूतानि, न पुनर्वपुः । ततो गुरुसमीपस्थवाचकजिह्वा स्तम्भिता । श्रीजीवदेवसूरिदृष्टौ [8]स्वजिह्वाया योगपट्टपर्यस्तिका वबन्ध । सभ्यलोको बिभाय । प्रभुभिः स कीलितः ।

---

१ ग--'द्वितीया' । २ दिगम्बर. ।

३ छाया—भुङ्क्ते आधाकर्म सम्यक् न च य प्रतिक्राम्यति ।
लुब्धः सर्वजिनाज्ञाविमुखस्य तस्याराधना नास्ति ॥

४ क-ख--'तस्मादेपा' । ५ क-ख- 'माददे' । ६ ग - 'गतः' । ७ ग--पुस्तके 'स' इति आरभ्य 'स्तम्भिता' पर्यन्त अधिक दृश्यते । ८ क--ख- 'जिह्वाया' ।

ततस्तेन खटिकया भूमौ लिखितम्—

उवयारह उवयारडउ सव्वउ लोउ करेइ।
अवगुणि कियइ जु गुणु करइ विरलउ जणणी जणेइ ॥ १॥

अहं तव च्छलनार्थमागतोऽभूवम्। त्वया ज्ञातः, स्तम्भितः, प्रसीद, मुञ्च, कृपां कुरु इत्यादि। ततः कृपया प्रभुभिर्मुक्तोऽसौ 'वायट-' नगरे वहिर्मठीं गत्वा तस्थौ। प्रभुभिः स्वगच्छः समाकार्योक्तः— योगी दुष्टो वहिर्मठेऽस्ति अमुकदिशि; तस्यां दिशि केनापि साधुना साध्व्या वा न गन्तव्यमेव। तथेति तन्मेने सर्वैः। साध्व्यौ तु द्वे ऋजुतया कुतूहलेन तामेव दिशं गते। योगिना समेत्य चूर्णशक्त्या वशीकृते तत्पार्श्वे न मुञ्चतः। प्रभुभिः स्ववसतौ दर्भपुत्रकः कृतः। तत्करच्छेदे योगिनोऽपि करच्छेदः। मुक्ते साध्व्यौ। मस्तकक्षालनात् परविद्याविदलनेन सुस्थीभूते ते।

अथान्यदा 'उज्जयिन्यां' **विक्रमादित्येन** [3]संवत्सरः प्रवर्तयितुमारेभे। तत्र देशानामनृणीकरणाय मन्त्री **निम्बो** 'गूर्जरधरादिशि प्रहितो **विक्रमेण**। स **निम्बो** 'वायटे' [4]श्री**महावीर**प्रासादमचीकरत्। तत्र देवं श्री**जीवदेवसूरीन्द्रः** [5]प्रत्यतिष्ठपत्।

अन्येद्युर्वायटे **लल्लो** नाम श्रेष्ठी [6]महामिथ्यादृग्। तेन होमः कारयितुमारब्धः। विप्रा मिलिताः। आसन्नादाचाम्लिकाद् द्रुमाद् धूमाकुलोऽहिः [7]कुण्डासन्नोऽपतत्। निर्घृणैर्विप्रैः स वराक [8]उत्पाट्याग्नौ जुहुवे। **लल्लस्तद्** दृष्ट्वा विरक्तो विप्रेषु उवाच च—अहो निष्ठुरत्वमेतेषाम्!। एव जीवहिंसारता ये तस्मादलमेभिर्गुरुभिः।

१ छाया—उपकारकस्य उपकार सर्वो लोक करोति।
अवगुणे कृते यो गुणं करोति विरल त जननी जनयति ॥

२ क—'मुञ्चेत'। ३ ख—'वत्सरो वर्तयितु०'। ४ अयं प्रासादस्तत्राद्यापि समस्ति। ५ ग—प्रत्यतिष्ठिपत्'। ६ ग—पुस्तके 'महामिथ्यादृक् एतदधिकम्'। ७ क—ख—'कुण्डासन्ने'। ग—'उत्पाटय वह्नौ'।

एवं वदन् विप्रान् विसृज्य स्वगृहमगमत्। [1]सर्वदर्शनानामाचारान्
विलोकते । एकदा मध्याह्ने श्रीजीवदेवसूरीणां साधुसङ्घाटक-
स्तद्गृहे भिक्षार्थं गतः। तयोः शुद्धभिक्षाग्रहणात् तुष्टः । लल्लेन
तौ मुनी आलापितौ– युवयोः के गुरवः ? । ताभ्यां श्रीजीवदेव-
५ सूरयः [2]कथिताः । लल्लस्तत्र गतः । श्रावकद्वादशव्रतीं ससम्यक्त्वां
लौ। अन्यदा लल्लेनोक्तम्—सूर्यपर्वणि मया द्रव्यलक्षं दाने कल्पित-
म्। तस्यार्द्धं व्ययितम्, शेषमर्द्धं गृहीतम्। न गृह्णन्ति ते निर्लोभाः।
लल्लो बाढं प्रीतः । गुरुभिरुक्तम्—अद्य सायं प्रक्षालितैक-
पादस्य तव यत् प्राभृतमायाति तदस्मत्पार्श्वे आनेयम् । इति श्रुत्वा
१० गृहं गतो लल्लः । सायं केनापि द्वौ वृषभौ प्राभृतीकृतौ । लल्लेन
गुरुपार्श्वमानीतौ । गुरुणोक्तम्—यत्रैतौ स्वयं यात्वा तिष्ठतः [3]तत्रै-
तद्द्रव्यव्ययेन चैत्यं काराप्यम् । तच्छ्रुत्वा तेन वृषौ स्वच्छन्दं
मुक्तौ '[4]पिप्पलानक'ग्रामे गतौ क्वचित् स्थितौ । तत्र भूमौ
लल्लेन चैत्यमारब्धम्, निष्पन्नम् । तत्रावधूतः कोऽप्यायातः ।
१५ तेनोक्तम्—अत्र प्रासादे दोषोऽस्ति। जनैरुक्तम्–को दोषः? । तेनो-
क्तम्—स्त्रीशल्यमास्ते । लल्लेन तच्छ्रुत्वा गुरवो विज्ञप्ताः । गुरुभि-
रुक्तम्—निःशल्यां भूमिं कृत्वा पुनः प्रासादः कार्यते, लल्ल !
त्वया द्रव्यचिन्ता न कार्या, तदधिष्ठात्र्यो धनं पूरयिष्यन्ति ।
प्रासाद उत्कीलयितुमारेभे । शब्द उत्पन्नः– चैत्यं नोत्कीलनीयम् ।
२० गुरवो विज्ञप्ताः । तैर्ध्यानं दध्रे । अधिष्ठात्री देव्यायया । तयो-
क्तम्—'कन्यकुब्ज'राजसुताऽहं [5]महणीकनाम्नी पूर्वं 'गूर्जर'-
देशे वसन्ती म्लेच्छसैन्ये समागते पलायमाना तेषु पृष्ठापतितेषु
भियाऽत्र कूपे[6]ऽपतम् । मृत्वा व्यन्तरी जाता । अतः स्वाङ्गास्थि-
शल्याकर्षणं नानुमन्ये। प्रतोल्यां [7]मामधिष्ठात्रीं त्वं कुरु यथा ऋद्धिं

---

१ क-ख--प्रत्योः 'सर्वं' इति पद नास्ति। २ ग–'कथितम्' । ३ क-ख--'तत्रैव द्रव्यव्ययेन' । ४ ख--'पिप्पलानकग्राम'। ५ ग -'महणीनाम्नी'। ६ क-ख--'पतन्ती'। ७ क-ख--'मामधिष्ठात्रीं कुरु यद्वा'।

वृद्धिं कुर्वे । गुरुभिः प्रतिपन्नम्[1] । ततस्तद्दत्तभूमौ तद्योग्या देवकुलिका कारिता । तत्र चामितं धनं लब्धम् । लल्लो निष्प्रतिमल्लसुखभाजनमभवत् । सङ्घश्च तुष्टः । लल्लद्वेषाद् द्विजैर्मुमूर्षुर्गौश्चैत्ये क्षिप्ता । सा तत्र मृता । श्रावकैर्विज्ञप्तं तद् गुरवे । गुरुणा विद्याबलाद् गौर्ब्रह्मभवने क्षिप्ता । यच्चिन्त्यते परस्य तदायाति सम्मुखमेव । ब्राह्मणैरनन्योपायत्वात् जीवदेवसूरयोऽनुनीताः । जीवदेवसूरे ! तारय नः । श्रीसूरिभिस्ते तर्जिताः, उक्ताश्च—यदि मच्चैत्ये मत्पट्टसूरेश्च श्रावकवत् सर्वां भक्तिं कुरुध्वे, मत्सूरेः सूरिपदप्रस्तावे [2]हेममययज्ञोपवीतं दत्थ, तत्सुखासनं स्वयं वहथ, तदा गामिमां ब्रह्मालयादाकृषामि; अन्यथा तु न । [3]तैरपि कार्यातुरैः [4]सर्वमङ्गीकृतम् । अक्षरादिभिः स्थैर्यमुत्पादितम् । ततो गौराकृष्याचार्यैर्बहिः क्षिप्ता । तुष्टं चातुर्वर्ण्यम् । कालान्तरे मरणासत्तौ सूरिभिस्तस्माद् योगिनो बिभ्यद्भिः स्वकीयाखण्डकपालस्य सर्वसिद्धिहेतोर्भञ्जनं श्रावकाग्रे कथितम् । [5]अन्यथा विद्यासिद्धौ सङ्घोपद्रवं करिष्यति । तथैव तैस्तदा चक्रे । योगी निराशश्चिरमरोदीत् ॥

इति श्रीजीवदेवसूरिप्रबन्धः ॥ २ ॥



---

१ ग–‘पन्नं तत् । तद्दत०’ । २ क-ख–‘हेमयज्ञोपमी(वी)त’ । ३ क-ख–‘तैरेव’ । ४ क–‘सर्वमप्यङ्गी–’ । ५ ग–पुस्तके ‘अन्यथा विद्यासिद्धौ सङ्घोपद्रवं करिष्यति’ एतदधिकं दृश्यते ।

[ ४ ]

## ॥ अथार्यखपटाचार्यप्रबन्धः ॥

क्वापि गच्छेऽनेकातिशयलब्धिसम्पन्नाः श्रीआर्य[1]खपटा नाम आचार्यसम्राजः। तेषां शिष्यो भागिनेयो भुवनो नाम। ते सूरयो 'भृगुकच्छ' विजह्रुः। तत्र बलमित्रो नाम बौद्धभक्तो राजा, बौद्धाश्च महाप्रामाणिकास्तादृग्यजमानगर्विताश्च दुर्दान्ताः। 'एकं वानरी, अपरं वृश्चिकेन जग्धा' इति न्यायात् ते श्वेताम्बराणा[2] धर्मस्थानेषु तृणपूलकान् निक्षेपयन्ति, यूयं पशव इति भावः। [3]अनयाऽवज्ञया [4]खपटाचार्या न चुक्रुधुः, गुरुत्वात्। यतः —

उपद्रवत्सु क्षुद्रेषु, न [5]क्रुध्यन्ति महाशयाः।
उत्फालैः [6]शफरैः किं स्या-त्क्षोभः कल्लोलिनीपतिः? ॥ १ ॥[7]

भुवनस्तु चुकोप। श्रावकशतसहस्रसङ्कुलो राज्ञः पार्श्वे ययौ श्रीसङ्घगुर्वनुज्ञां गृहीत्वा तत्रोच्चैरुवाच—

तावड्डिण्डिमघोषणां विदधतां तावत् प्रशंसन्तु च
स्वात्मानं प्रथयन्तु तावदतुलां [8]रीढां च पूज्ये खलाः।
यावत् प्राज्यघृतप्रतर्पितबृहद्भानुप्ररोहत्पृथु—
ज्वालाजालकरालजल्पनिवहैर्नोत्तिष्ठतेऽयं जनः ॥ १ ॥[10]

राज्ञा बलमित्रेणोक्तम् —साधो! किं किमात्थ?। भुवनो बभाण—तव गुरवस्तार्किकंमन्या गेहेनर्दिनः श्वेताम्बरान् निन्दन्ति, ततो वयं वादाय त्वत्सदः सम्प्राप्ताः। आस्फालय तान् मया सह, एकदा भवतु श्रोतॄणां कर्णकौतुकम्। ततो राज्ञा ते आहूताः। चतुरङ्गसभायां वादं कारिताः। भुवनमुनिपञ्चाननतर्कचपेटाताडिताः [11]फेरण्डा इव तूष्णीकाः समजनिषत। राजादि-

---

१ क-'खपुटा'। २ क-ख-- 'धर्मस्थाने'। ३ ख-- 'तया'। ४ क-'खपुटा०'
५ क-घ- 'क्षुभ्यन्ति'। ६ मत्स्यविशेषैः। ७ अनुष्टुप्। ८ अविनयम्। ९ अग्नि०
१० शार्दूल०। ११ शृगालाः।

भिर्घोषितः—जयः श्वेताम्बरशासनस्य । वर्तन्ते चैत्येषु महोत्सवाः । बौद्धास्तु [1]हिमहतपद्मवनाभा जाताः । तं बौद्धापमानं श्रुत्वा बौद्धाचार्यो 'गुडशस्त्र'पुराद् वृद्धकराख्यो महातार्किको 'भृगुपुर'मगात् । राजानमवोचत्—श्वेताम्बरैः [2]सह मां [3]वादं कारापय । राजा भुवनप्रज्ञा[4]स्फूर्तिज्ञेन वारितोऽपि नास्थात् । ५ [5]वादेऽजित एव सोऽपि भुवनेन जितः । न खलु यमो भूतानां [6]प्रीयते(?) । जित्वा सभ्याः प्रभापिताः—भो भो शृणुत—

यट्टङ्को दृषदो यदुष्णकिरणो ध्वान्तस्य य[7]च्छीतगुः
[8]शेफालीकुसुमोत्करस्य च [9]देशाकर्षः पतङ्गस्य यत् ।
अद्रेर्यत् [10]कुलिशः प्रचण्डपवनो मेघस्य यद् यत् तरोः १०
[11]पर्शुर्यत् [12]करिणो [13]हरिः प्रकुरुते तद् वादिनोऽसावहम् ॥१॥[14]

[15]सभ्याश्चमत्कृता उज्जुघुषुः — जयति धवलाम्बरशासनम् । [16]वृद्धकरः पुनरपमानाशनितप्तोऽनशनं कृत्वा 'गुडशस्त्र'पुरे वृद्धकराख्यो यक्ष उत्पन्नः प्राग्वैरेण जैनानुपद्रवति व्याधिवर्द्धन-भापन-धनहरणादिप्रकारैः । 'गुडशस्त्र'पुरसङ्घेन आर्य[17]खपटास्तद् विज्ञप्ता- १५ स्तत्र गताः । [18]तत्र यक्षायतनं प्रविश्य यक्षस्य कर्णयोरुपानहौ बबन्धुः, वक्षसि पादौ ददुः । लोको मिलितः । राजा तत्रस्थस्तत्रागतः । राज्ञि तत्रागते आचार्याः श्वेतवस्त्रेण स्वं सर्वमङ्गमावृत्य तस्थुः । राजा यत्र यत्रो[19]द्घाटयति तत्र तत्र [20]स्फि[21]चौवेव दृश्येते । ततः क्रुद्धो राजा घातान् दापयति [22]खपटाचार्यस्याङ्गे । २०

---

१ ख.--'हिमवत्पद्मनाभा' । २ ग-'सह वाद' । ३ घ--'वाद वादं कारय' । ४ क-ख--'स्फूर्तितेन' । ५ घ-'वादोदित एव' । ६ क--ख--'प्रायति' । ७ चन्द्रः । ८ लताविशेषगतपुष्पसमुदायस्य । ९ दीपकवर्नेराकर्षणम् । १० वज्रम् । ११ कुठारः १२ गजस्य । १३ सिंहः । १४ शार्दूल० । १५ ख--'सभ्याश्च चम०' । १६ ख-'करोऽपमान ०' । १७ क-'खपुटा०' । १८ ख-'तत्र च यक्षा०' ।१९ 'उघाडे छे' इति भाषायाम् । २० ग--'स्फिजावेव' । २१ जघनौ । २२ क-'खपुटा०'

ते घाताः शिरीषकोषादपि कोमलेष्वन्तःपुरीणामङ्गेषु [1]लेगुः ।
उच्छलितोऽन्तःपुरे स्त्रीणां कोलाहलः—हा नाथ ! रक्ष
रक्ष, हा हन्यामहे केनाप्यदृष्टेन, कथं जीविष्यामः ? ।
राजा सूरिशक्तिचमत्कृतमनाः सूरीणां [3]पदोर्लग्नः । प्रसद्य
५ मम सपरिजनस्य जीवितभिक्षां देहि, कृपालुस्त्वम् इत्याद्युवाच ।
यक्षस्तु स्वस्थानादुत्थायोपसूरि समागतो विनीतः पादसंवाहनां
कुरुते । मम कीटिकामात्रस्योपरि वः कः कटकारम्भ इति ब्रूते ।
मिलितो लोकः । आर्यखपटैर्यक्ष ऊचे — रे अधम ! अस्म-
[4]द्धूध्यान् पराबुभूषसि [5]? । पराभव, यदस्ति प्राभवम् ।
१० यक्षः प्राह स्म—हनूमति रक्षति सति शाकिन्यः पात्राणि कथं
ग्रसन्ते ? । तव भृत्योऽस्मि । मा मां पीडय । तव सङ्घं बान्धव-
वद् रक्षिताऽस्मि । राजादयः सर्वे चमत्कृताः सूरिभक्ता बभूवुः ।
सूरयः प्रासादान्निर्गत्य यदा बहिर्गतास्तदा यक्षः पाषाणमूर्तिः
सहायातः । द्वे दृषदौ, द्वे दार्पदकुण्डिके, सूक्ष्मयक्षाः सहागुः ।
१५ [6]नगरप्राकारद्वारायातेन सूरीन्द्रेण यक्षाद्या विसृष्टाः स्वस्थानमगुः ।
कुण्डिके तु पुरद्वारे सूरिणा स्थापिते, लोके ख्यातिनिमित्तम् ।
राजा प्रबोध्य सद्यः श्रावकः कृतः स्वसौधं गतः । प्रभावनानर्तकी-
रङ्गाचार्य इति स सूरीन्द्रस्तत्र चातुर्वर्ण्येन वर्णयामासे । तदैव
'भृगु'पुरात् साधू द्वावागतौ, ताभ्यां प्रभवः प्रोक्ताः— भगवन् !
२० 'भृगु'पुरादत्रागच्छद्भिर्भवद्भिर्या [7]कँपरिका गूढमधारि सा [8]भवतां
भागिनेयेनावाच्यत । वाचयता आकृष्टिलब्धिर्लब्धा । तद्वशादि-
भ्यानां गृहेषु निष्पन्नां रसवतीमाकृष्यानीय भुङ्क्ते स्म । तथा
कुर्वन् गच्छेन ज्ञातो निषिद्धो न निवर्तते, रसनेन्द्रियपरवशत्वात्

---

१ 'लाग्या' इति भाषायाम् । २ 'उछल्यो' इति भाषायाम् ३ ग-'पादौ लग्नः'
४ ग-'दृधान्'। ५ क- प्रतौ 'तव' इत्यारभ्य 'पीडय' एतत्पर्यन्तं न दृश्यते
६ घ-'पुरप्राकार०'। ७ घ-'कमलिका(?)'। ८ क-ख-ग-'क्षुल्लकेनैकेनावाच्यत'

ततः सङ्घेन दूमितः । भृगुकच्छं गत्वा बौद्धानां मिलितः । तदाचार्य इव जातः । बौद्धानां पात्राणि मठात् खेन गृहगोधिनां गृहेषु नयति । ततो भक्तपूर्णानि तानि खेनैव मठमायान्ति । तथा दृष्ट्वा लोको बौद्धभक्तो भवन्नास्ते । यदुचितं तत् कुरुध्वम् । तदवधार्यार्यखपटदेवा 'भृगु'पुरमगुः । प्रच्छन्नाः स्थिताः । बौद्धानां पात्राणि अन्नपूर्णान्यागच्छन्ति । शिलाविकुर्वणेन खे बभञ्जुः । पतन्ति पात्रेभ्यः शालि-मण्डक-मोदकाद्यंशाश्च लोकस्य मस्तकेषु । शैक्षकः सूरीणामागमनं सम्भाव्य भीतो नष्टो वराकः । सूरयः सराङ्घा बौद्धानां प्रासादमगमन् । बुद्ध उपलमूर्तिः सम्मुख उत्थितः जय जय महर्षिकुलशेखर ! इत्यादि स्तुतीरतनिष्ट । पुनर्जिनपतिशासनस्य प्रभावः प्रोद्दिदीपे । आर्यखपटा अन्यत्र विजह्रुः ।

इतश्च 'पाटलीपुत्र'पत्तने दाहडो नाम नृपो मिथ्यात्वी जैनयतीनाह्वयत्, अवोचच्च—विप्रान् नमस्कुरुत, इति । जैनैरुक्तम्—राजन् ! नेदं युक्तम्, मुनिपथोऽयम्, नायं न मतमी नश्याः । दाहडेनोक्तम्—न नमस्यथ चेच्छिरांसि वः कर्तयामि । जैनयतिभिः सप्तदिनी याचिता । राज्ञा दत्ता । दैवादार्यखपटशिष्य उपाध्यायो महेन्द्रनामा 'भृगुकच्छा'त् तत्रागतः । तस्मै यतिभिः स्वदुःखं कथितम् । तेन सन्धीरितास्ते । आत्तः करवीरलते द्वे रक्तश्वेते लात्वा महेन्द्र उपदाहडमगात् । तदाऽष्टमदिनप्रत्यूषं वर्तते । राज्ञोक्तम्—श्वेताम्बरा विप्रप्रणामायाहूयन्ताम् । आहूताः, अग्रे ऊर्ध्वास्तस्थुः । महेन्द्रेण रक्तां कम्बां चालयित्वा राजा भणितः किं प्रथममितो नमामः ? किंवा इतो नमाम इति । एतद्वचनानन्तरसमकालमेव विप्राणां मस्तकान्युट्टित्वा तालफलवद् भूमौ पेतुः । तद्

१ ग-'भृगुकच्छं' । २ ग-'बौद्धानां मठात्' । ३ क-'खपुट०' । ४ 'मांडा' इति भाषायाम् । ५ ख-ग-'शैक्षकः' । ६ ग-'प्रदिदीपे' । ७ क-'खपुटा०' । ८ क-ख-'पाटलीपुरे' । ९ क-'खपुट०' । १० क-'तालफल०' ।

दृष्ट्वा भीतो राजा चाटूनि करोति स्म, पुनर्नैवमविनयमाचरिष्यामि इति उवाच । तदा महेन्द्रेण पठितम्[1]–

क: कण्ठीरवकण्ठकेसरसटाभारं स्पृशत्यंघ्रिणा ?
क: कुन्तेन शितेन नेत्रकुहरे कण्डूयनं काङ्क्षति ? ।
५ क: संनह्यति पन्नगेश्वरशिरोरत्नावतंसश्रिये ?
य: श्वेताम्बरशासनस्य कुरुते वन्द्यस्य निन्दामिमाम् ॥ १ ॥[2]

विशेषतो भीतो नृपो दर्शन(?)स्य पादेष्वलगीत् । तदा महेन्द्रेण धवला करवीरकम्बा दिग्द्वयेऽपि वाहिता । पुनर्विप्राणां मस्तका: स्वस्थानेषु ससञ्जु: । प्रतिबोधितो राजा विप्रलोकश्च । एवं प्रभा-
१० वनाऽभूत् । भुवनोऽपि[3] बौद्धान् परिहृत्य स्वगुरूणां मीलित: । तेन स्वगुरव: क्षामिता: । तैर्गुरुभिस्तस्य भुवनस्य बहुमानं दत्तम् । पश्चाद् भुवनो गुणवान्, विनयवान्, चारित्रवान्, श्रुतवान्, जात: । तत आर्यखपटा:[4] सूरिपदं भुवनाय दत्त्वाऽनशनेन द्यामारुरुहु: ।

१५ जीवितव्यं च मृत्युं च, द्वयमाराधयन्ति ये ।
त एव पुरुषा: शेषा:, पशुरेष जन: पुन: ॥ १ ॥[5]

इति महाप्रभावकश्रीआर्यखपटाचार्यप्रबन्ध: ॥ ४ ॥



१ ग–'महेन्द्रेणोक्तम् । २ शार्दूल० । ३ क–घ–प्रतयो: ' भुवनोऽपि ' इत आरभ्य 'जात' एतत्पर्यन्तं नास्ति । ४ क–'खपुट:' । ५ अनुष्टुप् ।

[ ५ ]

## ॥ अथ पादलिप्ताचार्यप्रबन्धः ॥

'कौशला' नाम नगरी, तत्र **विजयवर्मा** राजा नयविक्रमसागरः। **फुल्ल**नामा श्रेष्ठी जैनः प्राज्ञो दानभटः। तस्य **प्रतिमाणा** नाम पत्नी रूपशीलसत्यनिधिवसुधा । सा निष्पुत्रत्वेन खिद्यते। केनाप्युक्तम्— **वैरोट्यां** देवीमाराधय। तपोनियमसयमैस्तयाऽऽराधिता सा प्रत्यक्षीबभूव, अभिदधौ च—वत्से! किमर्थ स्मृताऽहम्? । श्रेष्ठिन्योक्तम्—पुत्रार्थम्। **वैरोट्य**योक्तम्—वत्से! शृणु, 'विद्याधर'वशे श्रीकालिकाचार्योऽभूत्। तस्य 'विद्याधरो' नाम गच्छः। तत्र आर्य**नागहस्ती** नाम सूरिरास्ते। स सम्प्रति इमां नगरीमागतोऽस्ति क्रियाज्ञानार्णवः, तस्य पादोदक पिब। तत्र श्रेष्ठिनी भावनाभरभरिता गता। करस्थगुरुपदप्रक्षालनजलपात्रः [1]शिष्यकः सम्मुखमागच्छन् दृष्टः। श्रेष्ठिन्या पृष्टम्—तपोधन! किमेतत्?। शिष्यकेणोक्तम्—गुरूणां पादोदकम्। तया पीतम्।

अथ गुरवोऽवन्दिष(ष्य)त। गुरवः प्राहुः—यन्मत्तो दशकरान्तरस्थया त्वयाऽम्भः पीतं तत् ते पुत्रस्त्वत्तो दशयोजनान्तरितः [2]स्थाता। [3]ततः पश्चादन्ये नव पुत्रा भवितारः सारश्रियः। सा [4]चम्पककुसुममकरन्दपानमत्तमधुपध्वनिकोमलया गिरा बभाषे—आद्यः पुत्रो युष्मभ्यं दातव्यो मया। इत्युक्त्वा निजसदनमगमत्। भर्त्रे गुरूक्तं स्वोक्तं चाकथयत्। तुष्टः सः। श्रेष्ठिनी काले नागेन्द्रस्वप्नसप्रभावं पुत्रं प्रासूत। [5]माङ्गल्योत्सवाः प्रसरन्ति स्म। गुरुसत्कः सन् वर्धते। **नागेन्द्र** इति नाम तस्य। शरीरावयवैर्गुणैश्च सकललोकस्पृहणीयै-[6]र्ववृधे। गुरुभिरागत्याष्टमे वर्षे दीक्षितः। **मण्डना**भिधस्य मुनेः पार्श्वे पाठितः। बालोऽपि सर्वविद्यो जातः।

---

१ क–'शिष्यः कः'। २ ग–'स्थाता। पश्चाद०'। ३ 'त्यार पछी' इति भाषायाम्। ४ ग–'चम्पकमकरन्द०'। ५ क–'मङ्गलोत्सवाः'। ६ ग–'कमनीयै०'।

एकदा गुरुणा जलार्थं प्रस्थापितो विहृत्यागत आलोचयति—

[1]'अंबं तंबच्छीए, अपुप्फियं पुप्फदंतपंतीए ।
नवसालिकंजियं नव–वहूइ कुडएण मे दिन्नं ॥ १ ॥'[3]

इति गाथया गुरुभिर्भणितम्—पलित्तओ, शृङ्गारगर्भभणिति-
५ श्रवणात् । किल त्वं विनेयक ! रागाग्निना प्रदीप्त इति भावः ।
**नागेन्द्रेणाचचक्षे**—भगवन् ! मात्रया एकया प्रसादः क्रियताम्,
यथा 'पालित्तओ' इति रूपं भवति । अत्र को भावः ? गगनगमनो-
पायभूतां पादलेपविद्यां मे दत्त येनाहं **पादलिप्तक** इत्यभिधीये ।
ततो गुरुभिः पादलेपविद्या दत्ता । तद्वशात् खे भ्रमति । दशवर्ष-
१० देशीयः सन् सूरिपदे स्थापितः । बहुशिष्यपरिकरितो विहरति ।
नित्यं 'शत्रुञ्जयो'-'जयन्ता'दिपञ्चतीर्थी वन्दित्वाऽऽरुहिरसमश्नाति ।
तपस्तप्यते ।

यद् दूरं यद् दुराराधं, यच्च दूरे प्रतिष्ठितम् ।
तत् सर्वं तपसा साध्यं, तपो हि दुरतिक्रमम् ॥ १ ॥[7]

१५ ततः सर्वसिद्धयः ।

एकदा 'पाटलीपुत्र' गताः । तत्र **मुरुण्डो** नाम खण्डित-
चण्डारिमुण्डो राजा । तस्य षण्मासान् यावच्छिरोऽर्त्तिरुत्पन्नाऽऽस्ते ।
मन्त्रतन्त्रौषधैर्न निवृत्ता । [10]विशेषविदुरान् सूरीनागतान् श्रुत्वा राज्ञा
मन्त्रिणः प्रहिताः प्रोचुः—भगवन् ! राजराजेन्द्रस्य शिरोऽर्तिर्निवर्त्य-
२० ताम् । कीर्ति-धर्मौ सञ्चीयताम् । ततः सूरीन्द्रो राजकुलं गत्वा
मन्त्रशक्त्या क्षणमात्रेण शिरोऽर्त्तिमपहरति स्म । ततोऽद्यापि
पठ्यते—

---

१ छाया–आम्रं ताम्राक्ष्याऽपुष्पितं पुष्पदन्तपङ्क्त्या ।
नवशालिकाञ्जिकं नववध्वा कुडकेन मे दत्तम् ॥
२ क–'सालिकंजिअं' । ३ आर्या । ४ ग–'भ्रमति' । ५ शत्रुञ्जय-गिरिनारा-ऽर्बुद-सम्मेतशिखरा-ऽष्टापदेति तीर्थपञ्चकम् । ६ क–ख–'व्यवस्थितम्' । ७ अनुष्टुप् । ८ घ–'पाडलीपुत्रं' । ९ ग– 'मुरण्डो' ।१० प्रज्ञान् । ११ क–'राजेन्द्रशिरोर्तिः' ।

जह जह पएसिणिं जाणुयंमि पालित्तओ भमाडेइ ।
तह तह से सिरवियणा पणस्सइ मुरुंडरायस्स ॥ १ ॥[1][2][3]

प्रीतो राजा । संवृत्ता उत्सवाः । पादलिप्तसूरीणां यशसा पवित्रितानि सप्त[4] भुवनानि । राजा स्तौति—

चेतः सार्द्रतरं वचः सुमधुरं दृष्टिः प्रसन्नोज्ज्वला ५
शक्तिः क्षान्तिकला[5] श्रुतं हृतमदं श्रीर्दीनदैन्यापहा ।
रूपं शीलयुतं मतिः श्रितनया स्वामित्वमुत्सेकिता-
निर्मुक्तं प्रकटान्यहो नव सुधाकुण्डान्यमून्युत्तमे ॥ १ ॥[6][7]

एकदा सभायां नृपेणोक्तम्—राजकुले महान् विनयः । आचार्यै-रभिहितम्—गुरुकुले महीयान्[8] विनयः । तत आचार्याः प्राहुः— १०
यो वः परमभक्तो राजपुत्रोऽस्ति स आहूयताम्, इद च तस्मै कथ्यताम्—यात्वा[9] विलोकय 'गङ्गा' किं पूर्ववाहिनी किंवा पश्चिम-वाहिनी इति । आहूतो राजपुत्रः, प्रहितश्च विलोकनाय, यत्र तत्र भ्रमित्वा समागतः, भाषितो भूपालेन—विलोकिता 'गङ्गा' किं पूर्व-वाहिनी पश्चिमवाहिनी वा[10] ?" । अथ राजपुत्रः प्रचख्यौ—किमत्र १५
"विलोकनीयम्[11] ? बाला अपि विदन्ति 'गङ्गा' पूर्ववाहिनी, गत्वा च विलोकिता मया, पूर्ववाहिन्येवास्ते । राजा श्रुत्वाऽस्थात् । सूरिभिः साधुः स्वस्तस्मै कर्मणे प्रहितस्तत्र गतः । दण्डक प्रवाह्य[12] व्यलोकत पूर्ववाहिनी सुरवाहिनी । उपसूरि समागतः, अभाषत—अहं 'गङ्गा' पूर्ववाहिनी पूर्वमश्रौषम्, गत्वा पश्यंश्च तथैवाज्ञासिषम्, तत्त्वं तु[13] २०

---

१छाया— यथा यथा प्रदेशिनीं जानुनि पादलिप्तको भ्रामयति ।
तथा तथा तस्य शिरोवेदना प्रणश्यति मुरुण्डराजस्य ॥

२ ग–'मुरण्ड०' । ३ आर्या । ४ भूर्लोक-भुवर्लोक-स्वर्लोक-महर्लोक-जनर्लोक-तपर्लोक-सत्यलोकेति, सप्तमो ब्रह्मलोको वा । ५ ग–'युतं' । ६ मनोहरा । ७ शार्दूल० । ८ क-ख–'महान् विनयः' । ९ ग-घ–'गत्वा' । १० ग–'इति वा' । ११ घ–विलोक्यम्' । १२ क–ख–'प्रव्रज्य' । १३ ग–घ–'तु सद्गुरवो' ।

स्वयं सद्गुरवो विदन्ति । [1]एतच्च राजपुत्र-यत्योश्चरितं राज-सूर्योः प्रच्छन्नचरैरुक्तम् । राजा मेने एव—महीयान् गुरुकुले विनयः । ततः पठ्यते—

"[2]निवपुच्छिएण गुरुणा, भणिओ 'गंगा' कओमुही वहइ ? ।
५ संपाइयवं सीसो, जह तह सव्वत्थ कायव्वं ॥ १ ॥"[3]

'पाटलिपुत्रा'[4]दथ सूरीन्द्रो 'लाटान्' गतः । तत्रैकस्मिन् पुरे बालैः सह क्रीडति । मुनयो गोचरचर्यार्थं गताः । तावता श्रावकाः प्रवन्दनार्थमायाताः । आकारं संवृत्योपविष्टः प्रभुः । श्राद्धेषु गतेषु पुनरपवरकमध्यं गत्वा खेलति । तावता केऽपि वादिनः समायाताः।
१० तैर्विजनं दृष्ट्वा 'कूकुडूकू' इति शब्दः प्रोक्तः[5] । सूरीन्द्रेण तु 'म्याऊं' इति बिडालशब्दः कृतः । ततो दर्शनं दत्तम् । वादिनः पादयोः[6] पेतुः प्रभोः । अहो प्रत्युत्पन्नमतित्वं ते, चिरं जय बालभारति ! । तत आरब्धा प्रभुणा तैः सह गोष्ठी । तेष्वेकेन पृष्टम्—

१५ "[7]पालित्तय ! [8]कहसु फुडं, सयलं महिमंडलं [9]भमंतेण ।
दिट्ठं सुयं च [10]कत्थ वि, चंदणरससीयलो अग्गी ? ॥ १ ॥"[11]

प्रभुणाऽभाणि—

"[12]अयसाभिओगसंदू—मियस्स पुरिसस्स सुद्धहिययस्स ।
होइ वहंतस्स दुहं, चंदणरससीयलो अग्गी ॥ १ ॥"[13]

---

१ ग-घ-'एतच्च' एतदधिकम् ।

२ छाया— नृपपृष्टेन गुरुणा भणितो 'गङ्गा' किंमुखी वहति ? ।
सम्पादितवान् शिष्यो यथा तथा सर्वत्र कर्तव्यम् ॥

३ आर्या । ४ घ-'पाडलिपुत्रा०' । ५ ग-'कृतः' । ६ ख-घ-'पदयोः' ।

७ छाया—पादलिप्तक ! कथय स्फुटं सकलं महीमण्डलं भ्रमता ।
दृष्टं श्रुतं च कुत्रापि चन्दनरसशीतलोऽग्निः ? ॥

८ क-'कयसु' । ९ क-'भमंतेण' । १० क-घ-'कत्थइ' । ११ आर्या ।

१२ छाया—अयशोऽभियोगसन्दूनस्य पुरुषस्य शुद्धहृदयस्य ।
भवति वहतो दुःखं चन्दनरसशीतलोऽग्निः ॥ १३ आर्या ।

तुष्टास्ते वादिनस्तुष्टुवुः—साक्षादमरगुरुरेव[1] त्वम्, धन्या ब्राह्मी या ते वदने वसति ।

इतश्च ये पूर्वं ब्राह्मणाः खपटाचार्यगच्छीयेनोपाध्यायेन महेन्द्रेण भाषितास्ते बलात् केचित् प्रव्राजिताः । तेषां स्वजनाः 'पाटलीपुत्र'पत्तने वसन्ति । पूर्ववैराज्जैनयतीनुपद्रवन्ति । सा[2] वार्ता प्रभुश्रीपादलिप्ताचार्यैः श्रुता । स्वयं ते गगनेन तत्र गताः, अभ्यदधुश्च—रे मयि वीरे सति के नाम जैनजनं[3] तुदन्ति ? । जर्जराऽपि यष्टिः स्थालीनां भञ्जनाय प्रभवत्येव । ततस्ते काकनाशं नष्टाः । प्रभुः पुन'र्भृगु'पुरमगमत् । तत्रार्यखपट[4]सम्प्रदायात् सकलाः कलाः प्रजग्राह । 'ढङ्क'पर्वते नागार्जुनः प्रभुणा खगमनविद्यां शिक्षापितः परमार्हतोऽजनि । तेन 'पादलिप्तक'पुरं नव्यं कृतम् । दशार्हमण्डपोग्रसेनभवनादि च तत् तत् तत्र तत्र प्रभुणा [5]गाथायुगलेन स्तवनं बद्धम् । तत्र हेमसिद्धिविद्याऽवतारिताऽस्तीति वृद्धाः प्राहुः । नागार्जुनेन च रसः प्रारब्धः । सोऽतिकृच्छ्रेऽपि कृते न बन्धमायाति । ततो वासुकिनागस्तेनाराद्धः । तेन श्रीपादलिप्तेन चोपायोऽर्पितः—यदि 'कान्ती'पुर्याः श्रीपार्श्वनाथमानीय तद्दृष्टौ रसं बध्नासि तदा बन्धमायाति, नान्यथा । नागार्जुनेन पृष्टम्—कथमेति श्रीपार्श्वनाथः ? । वासुकिना पादलिप्तेन च प्रोक्तम्—उत्पाट्यानय गगनाध्वना । गतो नागार्जुनः 'कान्ती'म् । तत्र चैत्यं पृच्छति । तत्र धनपतिश्रेष्ठी चैत्यगोष्ठिकः[6] । तस्याग्रे नैमित्तिकेनोक्तम्—पार्श्वं रक्षेः, धूर्त एकरतद्धरणाय भ्रमन्नस्ति । स सचतुष्पुत्रो देवं रक्षति । नागार्जुनस्तत्र गतः । तेषु रक्षत्सु हरणावसरो नास्ति । तैरेव सह नागार्जुनेन प्रीतिरारेभे[7] । विश्वास उत्पन्नः । आरात्रिकमङ्गलदीपकसमये पितापुत्रेषु [8]प्रणामाधोमुखेषु

१ बृहस्पतिः । २ ग–'सा च वार्ता' । ३ ग–'जनमुपद्रवन्ति' । ४ क–'खपुट०' । ५ ख–'गाहाकुअलेन' । ६ 'गोठी' इति भाषायाम् । ७ क–'रारेभि' । ८ख–घ–'प्रणामेऽधो०' ।

पार्श्वं खेन गृहीत्वा गतो **नागार्जुनः**। 'सेडी'सञ्ज्ञनदीतटे श्रीपार्श्वदृष्टौ रसः स्तम्भितः। 'स्तम्भनकं' नाम तत् तीर्थं पप्रथे, 'स्तम्भनपुरं' नाम पुरं च।

अथ श्रीपादलिप्ताचार्याः 'प्रतिष्ठान'पुरं दक्षिणाशामुखभूषणं
५ 'गोदावरी'नदीतरङ्गरङ्गज्जलकणहृतपान्थश्रमभरं जग्मुः। तत्र **सातवाहनो** राजा विदुषां योधानां दानशौण्डानां भोगिनां च प्रथमः। तस्य सभायां वार्ताऽभूत्, यथा— **पादलिप्ताचार्याः** सर्वविद्यावनितावदनरत्नदर्पणाः समागच्छन्तः सन्ति प्रातः। ततः सर्वैः पण्डितैः सम्भूय स्त्यानघृतभृतं कच्चोलकमर्पयित्वा निजः पुरुष एक
१० आचार्याणां सम्मुखः [1]प्रस्थापितः। आचार्यैर्घृतमध्ये सूच्येका क्षिप्ता। तथैव च प्रतिप्रेषितं [2]तत्। राज्ञा स वृत्तान्तो ज्ञातः। पण्डिताः पृष्टाः– [3]घृतपूर्णकच्चोलकप्रेषणेन वः को भावः?। तैरुक्तम्—— एवमेतन्नगरं [4]विदुषां पूर्णमास्ते यथा घृतस्य वर्तुलकम्, तस्माद् विमृश्य प्रवेष्टव्यम्, इति भावो नः। राज्ञा निगदितम्—— तर्हि
१५ आचार्यचेष्टाऽपि भवद्भिर्ज्ञायताम्, यथा—निरन्तरेऽपि घृते निजतीक्ष्णतया सूची प्रविष्टा तथाऽहमपि विद्वन्निबिडे नगरे प्रवेक्ष्यामि इति। दध्वनुः पण्डिताः। [5]सर्वे राजेन्द्रोऽपि सम्मुखं गताः सुरसरिल्लहरिहारिण्या वाण्या [6]तुतुपुः। नगरमानीतो गुरुर्**निर्वाणकलिका**-[7]**प्रश्नप्रकाशा**दिशास्त्राणि सन्ददर्भ। एकां च [8]**'तरङ्गलोलां'** नाम
२० चम्पूं राज्ञोऽग्रे नवां निर्माय सदसि [9]व्याचख्ये प्रभुः। तुष्टो राजा। भवत्ययं कवीन्द्रः।

शाणोत्तीर्णमिवोज्ज्वलद्युति पदं वन्धोऽर्द्धनारीश्वरः
श्लाघालङ्घनजाङ्घिको दिवि लतोद्भिन्नेव [10]चार्थाद् गतिः।

---

१ ग–'प्रेषितः'। २ क–'तत'। ३ क-ख–'घृतसम्पूर्ण०'। ४ ग–'विदुषैः'। ५ ग–'सर्वे पण्डिता राजेन्द्रोऽपि'। ६ क–'तुष्टुवुः'। ७ नायं ग्रन्थो दृष्टिपथमायातः। ८ एषा सरसा कथा न क्वाप्युपलभ्यते। ९ क–'व्याचचक्षे'। १० क–ग–'चार्थोद्गतिः'।

ईषच्चूर्णितचन्द्रमण्डलगलत्पीयूषहृद्यो रस--
स्तत् किञ्चित् कवि[1]कर्ममर्म न पुनर्वाग्डिण्डिमाडम्बरः॥१॥[2]

इत्येवं कवयोऽपि तुष्टुवुः । एका तु [3]वेश्या विदुषी राजसभ्या गुणज्ञाऽपि सूरीन्द्रान् न स्तौति । ततो राज्ञा भणितम्— वयं सर्वे तुष्टाः स्तुमः । केवलमियमेका न स्तौति । तत् क्रियतां येन स्तुते । 5
तदाकर्ण्य सूरयो वसतिमाययुः । रात्रौ गच्छसम्मत्या कपटमृत्युना मृताः, पवनजयसामर्थ्यात् । शवयानमाश्रितः सूरिः । चातुर्वर्ण्यं [4]रोदिति । वेश्यागृहद्वारे नीतं शवयानम् । वेश्याऽपि तत्रागता रुदती वदति—

[5]सीसं कहवि न फुट्टं, जम्मस्स पालित्तयं हरंतस्स ? । 10
जस्स मुहनिज्झराओ, तरङ्गलोलानई वूढा ॥ १ ॥[6]

पुनरजीवत् प्रभुः । वेश्ययाऽभाणि—मृत्वाऽऽत्माऽस्तावि ? । सूरिराह—'मृत्वाऽपि पञ्चमो गेय' इति किं न श्रुतम् ? ।

अथ प्रभुः 'शत्रुञ्जये' [7]दिनसङ्ख्योपवासानशनेन ईशानेन्द्रसामानिकत्वेनोदपद्यत । 15

इति श्रीपादलिप्ताचार्यप्रबन्धः ॥ ५ ॥



१ क-'कर्मनर्म०' । २ शार्दूल० । ३ क-'वैश्या' । ४ क-'रोदित' ।
५ छाया—शीर्षं कथमपि न भग्नं यमस्य पादलिप्तं हरतः ? ।
यस्य मुखनिर्झरात् तरङ्गलोलानदी व्यूढा ॥
६ आर्या । ७ द्वात्रिंशदुपवासा० । ८ ख-'त्पद्ये' ।

[ ६ ]

## ॥ अथ श्रीवृद्धवादि-सिद्धसेनयोः प्रबन्धः ॥

'विद्याधरेन्द्र'गच्छे श्रीपादलिप्तसूरिसन्ताने स्कन्दिलाचार्याः साधितजैनकार्याः पुस्फुरुः। [1]ते यतनया विहरन्तो 'गौड'देशं ययुः।
५ तत्र 'कोशला'ह्वयग्रामवासी मुकुन्दो नाम विप्रः। स तेषां सूरीणां मिलितः। इत्थं देशनामश्रौषीत्—

भोगे रोगभयं सुखे क्षयभयं वित्तेऽग्निभूभृद्भयं
दास्ये स्वामिभयं गुणे खलभयं वंशे कुयोषिद्भयं।
स्नेहे वैरभयं नयेऽनयभयं काये कृतान्ताद् भयं
१० सर्वं नाम भयं भवे यदि परं वैराग्यमेवाभयम् ॥ १ ॥[2]

श्रुत्वा भवोद्विग्नश्चारित्रं गृहीत्वा गुरुभिः समं 'भृगु'पुरं गतः। स मुकुन्दमुनिस्तारस्वरेणाधीते रात्रौ। साधूनां निद्राभङ्गो भवति। ततस्तान् दुर्मनायमानान् ज्ञात्वा गुरुभिः पठन्निषिद्धोऽसौ। यथा—वत्स! नमस्कारान् गुणय। रात्रावुच्चैर्भाषणे हिंस्रजीवजागरणादनर्थ-
१५ दण्डो मा भूदिति। ततो दिवा पठने श्रावकश्राविकादीनां कर्णज्वरो भवति। केनाप्युक्तम्—किमयमियद्वयाः पठित्वा मुशलं पुष्पापयिष्यति?। तच्छ्रुत्वा मुकुन्दः खिन्नः सद्यो महाविद्यार्थी एकविंशत्योपवासैर्जिनालये ब्राह्मीमाराध। तुष्टाऽसौ प्रत्यक्षीभूय जगाद—सर्वविद्यासिद्धो भव। ततः [3]कवीन्द्रीभूय स्वगुर्वन्तिकमागत्य सङ्घ-
२० समक्षमक्षामस्वरेण बभाण— यन्ममोपहासः केनापि कृतो यदयं किं मुशलं पुष्पापयिष्यति, विलोकयत लोकाः! मुशलं पुष्पापयामि। इत्युक्त्वा मुशलमानाय्य चतुष्पथे स्थित्वा तत् पुष्पापयामास, मन्त्रशक्तिमाहात्म्यात्। स्कन्धस्थितेन तेन भ्रमति पठति च—

---

१ क-ख-'तेन यत०'। २ शार्दूल०। ३ क-'कवीन्द्रो भूत्वा'।

पत्तमवलंबियं तह, जो जंपइ फुल्लए न मुसलमिह ।[1]
तमहं निराकरित्ता, फुल्लइ मुसलं ति ठावेमि ॥ १ ॥[3]
तथा—

[4]मह्नोशृङ्गं शक्रयष्टिप्रमाणं
शीतो वह्निर्मारुतो निष्प्रकम्पः । ५
यस्मै यद् वा रोचते तन्न किञ्चिद्
वृद्धो वादी भाषते कः किमाह ॥१॥[5]

अप्रतिमल्लो वादी सोऽभूत् । **स्कन्दिलाचार्यैः** स्वपदे निवेशितः । **वृद्धवादी** इति ख्यातं तन्नाम । **स्कन्दिलाचार्याः** समाधिमृत्युरथेन धामगमन् । १०

एकदा **वृद्धवादी** 'भृगु'पुरं गच्छन्नास्ते । इतश्चा'ऽवन्त्यां' **विक्रमादित्यो** राजा । यस्य दानानि—

अष्टौ हाटककोटयस्त्रिनवतिर्मुक्ताफलानां तुला
पञ्चाशन्मदगन्धलुब्धमधुपक्रोधोद्धुराः सिन्धुराः ।
लावण्योपचयप्रपञ्चितदृशां पण्याङ्गनानां शतं १५
दण्डे 'पाण्ड्य'नृपेण ढौकितमिदं वैतालिकस्यार्प्यताम्[6] ॥१॥[7]

इत्यादीनि ख्यातानि । तस्य राज्ये मान्यः 'कात्यायन'गोत्रावतंसो **देवर्षिर्द्विजः** । तत्पत्नी **देवसिका** । तयोः **सिद्धसेनो** नाम पुत्रः । स प्रज्ञाबलेन जगदपि तृणवद् गणयति । प्रज्ञायाश्च इयत्ता नास्ति । जगति ततः पठ्यते— २०

मिता भूः पत्याऽपां स च पतिरपां योजनशतं
सदा पान्थः पूषा[8] गगनपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ १ ॥[9]

येन वादे जीये तस्याहं शिष्यः स्याम् इति प्रतिज्ञा तस्य । २५

---

१ छाया— पत्रमवलम्बित तथा यो जल्पति पुष्पेत् न मुशलमिह ।
तमहं निराकृत्य पुष्पति मुशलमिति स्थापयामि ॥

२ ग--'वाचेमि' । ३ आर्या । ४ ख--घ--'मह्नोः शृङ्ग' । ५ शालिनी
६ क--ख--'स्यार्पितम्' । ७ शार्दूल० । ८ सूर्यः । ९ शिखरिणी ।

क्रमेण **वृद्धवादिनः** कीर्तिं श्रुत्वा स तत्सम्मुखं धावति स्म। सुखासनारूढो 'भृगु'पुरं गतः। तावद् 'भृगुकच्छा'न्निर्गतो **वृद्धवादी** मार्गे मिलितः। परस्परमालापो जातः। **सिद्धसेनो**
५ भाषते– वादं देहि। सूरिराह— दद्मः, परमत्र के सभ्याः? सभ्यान् विना वादे जिताजिते को वदेत्?। **सिद्धसेनेनोक्तम्**– एते गोपालकाः सभ्या भवन्तु। **वृद्धवादिना** भणितम्— तर्हि ब्रूहि। ततः **सिद्धसेनस्तत्र** नगरगोचरे चिरं संस्कृतेन जल्पमनल्पमकरोत्। क्रमेण च स्थितः। गोपैरुक्तम्— किमप्ययं न
१० वेत्ति, केवलमुच्चैः पूत्कारं पूत्कारं कर्णौ नः पीडयति। धिग् धिक्। वृद्ध! त्वं ब्रूहि किञ्चित्! ततो **वृद्धवादी** कालज्ञः कच्छां दृढं बद्ध्वा [1]धिन्दिणिच्छन्दसा क्रीडति—

[2]नवि मारियइ नवि चोरियइ परदारह गमणु निवारियइ।
[3]थोवाथोवमु दावियइ सगि(ग्गि) ष्टु(टु)गुट्टगु जाईयइ ॥१॥

१५ पुनः पठति च—

[4]गुलसिउं चावइं तिलतांदली वेडिइं वजावइं वांसली।
पहिरणि ओढणि हुइ कांबली इण परि ग्वालइ पूज(र)इ रुली ॥१॥

नृत्यति च—

[5]कालउ कंबलु अनुनी वाँ[6]टु छासिहिं खालडु भरिउं निपाटु।
२० अइवडु पडित(य)उ नीलइ डा(झा)डि अवर कि सरगह सिंग निलाडि (?) ॥२॥[7]

---

१ ख--घ--'धीदण०'।

२ छाया— नापि मारयेत् नापि चोरयेत् परदारस्य गमन निवारयेत्।
स्तोकस्तोक दापयेत् स्वर्ग झटिति गच्छेत्।

३ क--'थोवाथोवं दाइयइ सगि दुकुटूटुकु जाइयइ'; घ--'थोवाथोवउं दायइ सागि-दुगुट्टुगु जाइयइ'।

४ छाया— गुडेन चर्वति तिलतान्दूलान् पर्वाभिर्वादयति वेणुम्।
परिधाने आच्छादने भवति कम्बली एव गोपालः पूरयति हर्षम्।

५ छाया—कृष्णः कम्बलो लघुमार्गस्तक्रेण दतिर्भृता निभृतम्।
अजावृन्द. पतित. सान्द्रे वृक्षेऽपर. किं स्वर्गस्य शृङ्गं ललाटे?॥

६ क-ख-'चाट्ट'। ७ क--इदं पद्य केवल ग--प्रतौ दृश्यते।

गोपा हृष्टाः प्रोचुः—**वृद्धवादी** सर्वज्ञः, अहो कीदृक् श्रुति-
सुखमुपयोगि[1] पठति । **सिद्धसेनस्तु** असारपाठक इत्यनिन्दन् ।
ततः **सिद्धसेनः** प्राह—भगवन् ! मां प्रव्राजय । तव शिष्योऽहं, वादे
सभ्यसम्मतं जितत्वात् । अथ **वृद्धवाद्याह**— 'भृगु'पुरे राजसभा-
यामावयोर्वादोऽस्तु । गोपसभायां को वादः ? । **सिद्धसेने-** ५
**नोक्तम्**—अहमकालज्ञः, त्वं तु कालज्ञः, यः कालज्ञः स सर्वज्ञः।
त्वयैव जितम् । इत्येवं वदन्तं तं तत्रैव दीक्षयामास ।

तत्र प्रभृति 'भृगु'पुरनरेन्द्रेण तं वृत्तातं ज्ञात्वा 'तालारसो' नाम
ग्रामः स्थापितः प्रौढः । **नाभेयचैत्यं** कारितम् । **नाभेयबिम्बं**
**वृद्धवादिना** प्रतिष्ठितम् । सङ्घो जगर्ज । **सिद्धसेनस्य** दीक्षाकाले १०
**कुमुदचन्द्र** इति नामासीत् । सूरिपदे पुनः **सिद्धसेनदिवाकर**
इति नाम पप्रथे। तदा 'दिवाकर' इति सूरेः सञ्ज्ञा, स्वामिशब्दवद्,
वाचकशब्दवच्च । **वृद्धवादी** अन्यत्र विहरति । **सिद्धसेनस्त्व**'ऽवन्तीं'
ययौ । सङ्घः सम्मुखमागत्य तं सूरिं 'सर्वज्ञपुत्रक' इति बिरुदे पठय-
माने'ऽवन्ती'चतुष्पथं नयति । तदा राजा **विक्रमादित्यो** हस्ति- १५
स्कन्धारूढः सम्मुखमागच्छन्नस्ति । राज्ञा श्रुतम्—सर्वज्ञपुत्रक इति ।
तत्परीक्षार्थं हस्तिस्थ एव मनसा सूरेर्नमस्कारं चकार, न वाक्-
शिरोभ्याम्। सूरिश्चासन्नायातो धर्मलाभं बभाण । राजेन्द्रेण भणित-
म्—अवन्दमानेभ्योऽस्मभ्यं[2] को धर्मलाभः ? । किमयं समर्घो लभ्य-
मानोऽस्ति ? । सूरिणा[3] श्रुत्वाऽभाणि—चिन्तामणिकोटितोऽप्यधिको- २०
ऽयं वन्दमानाय देयः, न च त्वया न वन्दिता वयम्, मनसः
सर्वप्रधानत्वात्; अस्मत्सार्वज्ञपरीक्षायै हि मनसाऽस्मानवन्दथाः ।
ततस्तुष्टो राजेश्वरो हस्तिस्कन्धादवरुह्य सङ्घसमक्षं ववन्दे कनककोटिं
चानाययत् । आचार्यैः सा न जगृहे, निर्लोभत्वात् । राज्ञाऽपि न
जगृहे, कल्पितत्वात् । तत आचार्यानुज्ञया सङ्घपुरुषैर्जीर्णोद्धारे २५
व्ययिता । राजवहिकायां त्वेवं लिखितम्—

1 ख-'मुपयोग' । २ ग--'ऽस्माकं' । ३ ख-घ-'सूरिसुत्राम्ला(?)माणि' ।

धर्मलाभ इति प्रोक्ते, दूरादुच्छ्रितपाणये ।
सूरये सिद्धसेनाय, ददौ कोटिं धराधिपः ॥ १ ॥[1]

श्रीविक्रमाग्रे अवसरे तेनैव भगवता भणितम्—

[2]पुन्ने वाससहस्से सयंमि वरिसाण नवनवइकलिए ।
५ होही कुमरनरिंदो तुह विक्कमराय ! सारिच्छो ॥ १ ॥[3]

अन्यदा सिद्धसेन[4]श्चित्रकूटमटति स्म । तत्र चिरन्तनचैत्ये स्तम्भमेकं महान्तं दृष्ट्वा कञ्चिदप्राक्षीत्—कोऽयं स्तम्भो महान् ? किंमयः ? । तेनोक्तम्—पूर्वाचार्यैरिह रहस्यविद्यापुस्तकानि न्यस्तानि सन्ति । स्तम्भस्तु तत्तदौषधद्रव्यमयः । जलादिभिरभेद्यो १० वज्रवत् । तद्वचनं श्रुत्वा सिद्धसेनस्तस्य स्तम्भस्य गन्धं गृहीत्वा प्रत्यौषधरसैस्तमाच्छोटयामास । तैः स प्रातरम्बुजवद् विचकास । मध्यात् पतिताः पुस्तकाः । तत्रैकं पुस्तकं छोटयित्वा वाचयन्नाद्यपत्र एव द्वे विद्ये लभते स्म । एका सर्षपविद्या, अपरा हेमविद्या । तत्र सर्षपविद्या सा यथोत्पन्ने कार्ये मान्त्रिको यावन्तः सर्षपान् १५ जलाशये क्षिपति तावन्तोऽश्ववारा [5]द्विचत्वारिंशदुपकरणसहिता निस्सरन्ति । ततः परबलं [6]भज्यते । सुभटाः कार्यसिद्धेरनन्तरमदृशीभवन्ति । [7]हेमविद्या पुनरक्लेशेन शुद्धहेम[8]कोटीं सद्यो निष्पादयति येन तेन धातुना । तद् विद्याद्वयं सम्यग् जग्राह । यावदग्रे वाचयति तावत् स्तम्भो मिलितः पुस्तकगर्भः । खे च वागुत्पन्ना—अयोग्यो- २० ऽसि ईदृशानां रहस्यानां, मा चपलं कृथाः; सद्यो मा म्रियस्व, इति । ततो भीतः स्थितः । यद् विद्याद्वयं लब्धं तल्लब्धम्, ना-

---

१ अनुष्टुप् ।

२ छाया— पूर्णे वर्षसहस्रे शके वर्षाणां नवनवतिकलिते ।
भविष्यति कुमारनरेन्द्रस्तव विक्रमराज ! सदृशः ॥

३ आर्या । ४ 'छोडीने' इति भाषायाम् । ५ एतन्नामानि न ज्ञायन्ते । ६ घ--'भक्ष्यते' ।७ क--'अदृश्या हेमविद्या' । ८ घ--'कोटीः' ।

धिकं लभ्यते अप्रार्थितः। 'चित्रकूटा'त् सिद्धसेनोऽथ पूर्वदेशे 'कूर्मार'पुरं गतः। तत्र देवपालराजानं(?जं) प्रबोध्य नीलीरागजैनमकार्षीत्। तत्रास्थात्। [1]नित्यमिष्टा गोष्ठी वर्तते। कियानपि कालो [2]जगाम।

एकदा राज्ञा रह एत्य साश्रुणा विज्ञप्तम्—भगवन्! पापा वयं नेदृश[3]मधुरभवद्गोष्ठीयोग्याः, येन सङ्कटे पतिताः स्म। सूरीन्द्रः पप्रच्छ—किं सङ्कटं वः? । राजा प्राह—सीमालभूपालाः सम्भूय मद्राज्यं जिघृक्षव आयान्ति। सूरिराह—राजन्! मा स्म विह्वलो भूः। तवैव राज्यश्रीर्वशे यस्याहं सखा। राजा हृष्टः। परचक्रमायातम्। विद्याद्वयशक्त्या राजेन्द्रः समर्थो विहितः सूरिणा। भग्नं परबलम्। गृहीतं तत्सर्वस्वम्। वादितान्यातोद्यानि। ततो बाढं राजा सूरिभक्तः सम्पन्नः। सूरयः सगच्छा अपि क्रियाशैथिल्यमादृषत। यतः—

चाटुकारगिरां गुम्फैः, कटाक्षैर्मृगचक्षुषाम्।
केलिकल्लोलितैः [4]स्त्रीणां, भिद्यते कस्य नो मनः? ॥ १ ॥[5]

[6][7]सुअई गुरू निच्चिंतो, सीसा वि [8]सुअंति तस्य अणुकमसो।
ओसाहिज्जइ मुक्खो, हुड्डाहुड्डं सुयंतेहिं ॥ १ ॥[9]

श्रावकाः पौषधशालायां प्रवेशमेव न लभन्ते।

[10]दगपाणं पुप्फफलं, अणेसणिज्जं गिहत्थकिच्चाइं।
अजया पडि[11]सेवंती(?ता), जइवेसविडंबगा नवरं ॥ १ ॥[12]

---

१ ग--घ--'नित्यमिष्टगोष्ठी'। २ घ--'जगाल'। ३ भ--घ--'मधुरगोष्ठी०'
४ ख--घ--'श्रीणां'। ५ अनुष्टुप्।

६ छाया— स्वपिति गुरुर्निश्चिन्तः शिष्या अपि स्वपति तस्यानुक्रमतः।
अवसद्यते मोक्षः स्पर्धया स्वपद्भिः।

७ घ--'सूयइ'। ८ घ--'स्वपंति'। ९ आर्या।

१० छाया— दकपान पुष्पफलमनेषणीयं गृहस्थकृत्यामि।
अयतना प्रतिसेवमाना यतिवेपविडम्बका नवरम्॥

११ ख-'पडिसेहती'। १२ आर्या।

इति गाथा समाचर्यते । तदपयशः श्रुत्वा **वृद्धवादी** कृपया[1] तं निस्तारयितुमेकाकीभूय गच्छं वृषभेषु न्यस्य तत्रागतः[2] । द्वारे स्थितः सूरीणामग्रे कथापयति द्वाःस्थैः, यथा—वादी एको ज्यायानायातोऽस्ति । मध्ये सूरिभिराहूतः पुर उपवेशितः । वस्त्रावगुण्ठितसर्व-
५ कायो **वृद्धवादी** वदति— व्याख्याहि—

[3]अणफुं[4]ल्लियफुल्ल म तोडहिं मा रोवा मोडहिं ।

मणकुसुमेहिं अच्चि निरंजणु [5]हिंडइ कांइ वणेण वणु ? ॥ १ ॥

**सिद्धसेन**श्चिन्तयन्नपि न वेत्त्यर्थम् । ततो ध्यायति—किमेते मे गुरवो **वृद्धवादि**नो येषां भणितमहमपि व्याख्यातुं न शक्नोमि ? ।
१० पुनः पुनः पश्यता उपलक्षिता गुरवः । '[6]पादयोः प्रणम्य क्षा[7]मिताः' पद्यार्थं पृष्टाः । तेऽथ व्याचक्षिरे, यथा— 'अणफुं[8]ल्लियफुल्ल०' प्राकृतस्यानन्तत्वात् अप्राप्तफलानि पुष्पाणि मा त्रोटय । को भावः ? । योगः कल्पद्रुमः । कथम् ? यस्मिन् मूलं यमनियमाः, ध्यानं प्रकाण्डप्रायं[9], स्कन्धश्रीः समता, कवित्ववक्तृत्वयशःप्रताप-
१५ मारणस्तम्भनोच्चाटनवशीकरणादिसामर्थ्यानि पुष्पाणि, केवलज्ञानं फलम् । अद्यापि योगकल्पद्रुमस्य पुष्पाण्युद्गतानि सन्ति, तत् केवल-फलेन तु पुरः फलिष्यन्ति । तान्यप्राप्तफलान्येव किमिति त्रोटयसि ? । मा त्रोटय इति भावः । 'मा रोवा मोडहि' इह [10]रोपाः पञ्च महाव्रतानि, तानि मा मोटय । 'मणकुसुमेहिं' मनःकुसुमै-
२० र्निरञ्जनं—जिनं पूजय । 'हिंडइ वणेण वणु' वनाद् वनं किं हिण्डसे ? । राजसेवादीनि कृच्छ्राणि विरसफलानि कथं करोषीति

---

१ घ--'क्षपया'। २ ग--'तत्र गत' ।

३ छाया—अप्राप्तफलानि पुष्पाणि मा त्रोटय मा रोपान् मोटय ।
मनःकुसुमैरर्चय निरञ्जनं हिण्डसे किम् वनाद् वनम् ? ॥

४ ग--घ--'हुल्लिय०'। ५ क-ख-ग-' हिंडइ वणेण '। ६ ख-ग-'पदयोः' । ७ क-ख-घ-'क्षमिता.' । ८ ग-घ-'हुल्लिय०' । ९ ख-'प्रायस्कन्धः श्रीः' १० ग-'रोपा पञ्च०' ।

पदार्थः । ततो वादी तां गुरुशिक्षां मूर्ध्नि धृत्वा राजानमापृच्छ्य वृद्धवादिना सह निबिडचारित्रधरो विजहार । अपरापरगुरुभ्यः 'पूर्व'गतश्रुतानि लेभे । वृद्धवादी दिवं गतः ।

एकदा सिद्धसेनः सङ्घं [1]मेलयित्वाऽऽह स्म—सकलानप्यागमानहं [2]संस्कृतमयान् करोमि, यदि आदिशथ । ततः सङ्घो वदति स्म— 5 किं संस्कृतं कर्तुं न जानन्ति श्रीमन्तस्तीर्थङ्करा गणधरा वा यदर्धमागधेनागमानकृषत ? । तदेवं जल्पतस्तव महत् प्रायश्चित्तमापन्नम् । किमेतत् तवाग्रे कथ्यते ? । स्वयमेव जानन्नसि । ततो विमृश्याभिदधेऽसौ—सङ्घोऽवधारयतु, अहमाश्रितमौनो द्वादशवार्षिकं 'पाराञ्चिकं' नाम प्रायश्चित्तं गुप्तमुखवस्त्रिकारजोहरणादिलिङ्गः 10 प्रकटितावधूतरूपश्चरिष्याम्युपयुक्तः । एवमुक्त्वा गच्छं मुक्त्वा ग्रामनगरादिषु पर्यटन् द्वादशवर्षे श्रीम'दुज्जयिन्यां' महाकालप्रासादे 'शेफालिका'कुसुमरञ्जिताम्बरालङ्कृतशरीरः समागत्याऽऽसाञ्चक्रे । ततो देवं कथं न [3]नमस्यसीति लोकैर्जल्प्यमानोऽपि नाजल्पत् । एवं च जनपरम्परया श्रुत्वा श्रीविक्रमादित्यदेवः 15 समागत्य जल्पयाञ्चकार— क्षीरलिलिक्षो ! भिक्षो ! किमिति त्वया देवो न वन्द्यते ? । [6]ततस्तु राजानं प्रतीदमवादि वादिना— मया नमस्कृते लिङ्गभेदो भवतामप्रीतये भविष्यति । राज्ञोचे— भवतु, क्रियतां नमस्कारः । तेनोक्तम्— श्रूयतां तर्हि । पद्मासनेन भूत्वा द्वात्रिंशद्द्वात्रिंशिकाभिर्देवं स्तोतुमुपचक्रमे । तथाहि— 20

"स्वयम्भुवं भूतसहस्रनेत्र—मनेकमेकाक्षरभावलिङ्गम् ।
अव्यक्तमव्याहतविश्वलोक—मनादिमध्यान्तमपुण्यपापम् ।। १ ।।[7]"

इत्यादि [8]श्रीवीरद्वात्रिंशद्द्वात्रिंशिका कृता । परं तस्मात्

---

१ जैनानां द्वादशाङ्गत एको विभागः संस्कृतप्रायः । २ 'मेळवीने' इति भाषायाम् । ३ ग-घ-'संस्कृतान्' । ४ ख-'मागधिना' । ५ ग-'नमसीति' । ६ क-ख-घ-'ततस्त्विदमवादि' । ७ उपजातिः । ८ ग-प्रतौ 'श्रीवीर०' इत्यारभ्य 'स्तवं चक्रे' एतत्पर्यन्तमधिकम् ।

तादृक्कं(शं) चमत्कारमनालोक्य पश्चात् **श्रीपार्श्वनाथद्वात्रिंशिका**मभिकर्तु **कल्याणमन्दिरस्तव**[ं चक्रे] प्रथम एव श्लोके प्रासादस्थितात् शिखिशिखाग्रादिव लिङ्गाद् धूमवर्तिरुदातिष्ठत् । ततो जनैर्वचनमिदमूचे—अष्टविधेशाधीशः कालाग्निरुद्रोऽयं भगवांस्तृतीय-
५ नेत्रानलेन भिक्षुं भस्मसात्करिष्यति । ततस्तडित्तेज इव सतडात्कारं[1] प्रथमं ज्योतिर्निर्गतम् । ततः **श्रीपार्श्वनाथ**बिम्बं प्रकटीबभूव । तद् वादिना विविधस्तुतिभिः स्तुतं क्षमितं च । राजा **विक्रमादित्यः** पृच्छति—भगवन् ! किमिदमदृष्टपूर्वं दृश्यते ? । कोऽयं नवीनो देवः प्रादुरभूत् ? । अथ **सिद्धसेनः** प्रोवाच—राजन् ! पूर्वमस्या-
१० मेवा'ऽवन्त्यां' श्रेष्ठिनीभद्रासूनुर्द्वात्रिंशत्पत्नीयौवनपारिमलसर्वस्वग्राही **अवन्तीसुकुमाल** इति ख्यातः श्रेष्ठ्यासीत् । स **शालिभद्र** इव कमपि गृहव्यापारं नाकार्षीत्, किन्तु मातैव सर्वामपि गृहतप्तिमकृत । एकदा दशपूर्वधर **आर्यसुहस्त्या**ख्यो 'मौर्य'वंशमुकुट-**सम्प्रतिनृपगुरुः** सगच्छो विहर'न्नवन्ती'मागत्य **भद्रा**ऽनुमत्या
१५ गृहैकदेशेऽस्थात् । रात्रौ ते 'नलिनीगुल्मा'ख्यस्य स्वर्विमानस्य विचारं गुणयन्ति । तपोधनजने विश्रान्ते सति तं विचारं शृण्वन्[2] सान्द्रचन्द्रातपायां निशि स्वैरं पद्भ्यां भ्रम**न्नवन्तीसुकुमाल**स्तत्रायातः सम्यगश्रौपीत् । आगत्य गुरून् जगौ—भगवन् ! किमेतद् गुण्यते ? । आर्यैरुक्तम्—वत्स ! '[3]नलिनीगुल्म'विमान-
२० विचारः । **अवन्तीसुकुमालः** प्राह स्म—ईदृशमेवेदं प्रेत्य मयाऽनुभूतम् । इदं केनोपायेन लभ्यते ? । आर्यैर्भणितम्—चारित्रेण । **अवन्तीसुकुमालो**ऽ[4]प्याविभातादू गृहीत'नलिनीगुल्म'विमानग्रहणप्रतिज्ञः स्वयं कृतलोचः पश्चाद् गुरुभिरपि दत्तसामायिकः 'कन्थार-कुडङ्गा'[5]ख्यं श्मशानमेत्य कायोत्सर्गी भवान्तरभार्यया शृगालीत्व-

---

१ घ–'तडत्कारं'। २ ग–प्रतौ 'शृण्वन्' इत्यधिकः पाठः। ३ ग–'नलिनीगुल्मविचारः'। ४ ग–'प्याविभातात्'। ५ ख–'कुडुङ्गा०'।

मापन्नया [1]सार्भया क्षुधितया दर्भसूचीवेधक्षरत्तद्रुधिरधारागन्धलुब्धा-
गतया भक्षितः सद्भावनाजर्जरितपापकर्मा 'नलिनीगुल्म'माप। प्रात-
स्तन्माता सस्नुषा गुरुमुखादवगतपुत्रवृत्तान्ता तच्छ्मशानमागत्य
विललाप विविधं विविधम्। पुनर्गृहमागता। एकां सगर्भां वधूं गृहे
मुक्त्वा एकत्रिंशता वधूभिः सह सयममादाय दिवं लेभे। सगर्भास्थित- ५
वधूकाजातपुत्रेण [2]स्फीतयौवनेनायं प्रासादः कारितः। मम पितु-
र्महाकालेऽत्राभूदिति 'महाकाल'नाम दत्तम्। श्री[3]पार्श्वबिम्ब मध्ये
स्थापितम्। कत्यप्यहानि [4]लोके पूजितम्। अवसरे द्विजैस्तदन्त-
रितं कृत्वा मृडलिङ्गमिदं स्थापितम्। अधुना मत्कृतस्तुतितुष्टः
श्रीपार्श्वनाथः प्रादुरासीत्। मत्प्रेरितशासनदेवताबलात् तु मृड- १०
लिङ्गं विदध्रे। सत्यासत्ययोरन्तरं पश्य। तच्छ्रवणान्नृपः शासने
ग्रामशतान्यदत्त देवाय। उपगुरु ससम्यक्त्वां द्वादश(?)व्रतीमुपादत्त।
अश्लाघत वादीन्द्रम्—

अहयो बहवः सन्ति, भेकभक्षणद[5]क्षिणाः।
एक एव [6]स शेषो हि, धरित्रीधरणक्षमः॥ १ ॥[7] १५

तथा त्वम्। अहो कवित्वशक्तिस्ते !।

पद सपदि कस्य न स्फुरति शर्करापाकिमं?
रसालरससेकिमं भणितिवैभवं कस्य न?।
तदेतदुभयं किमप्यमृतनिर्झरोद्गारिभै-
स्तरङ्गयति यो रसैः स पुनरेक एव क्वचित्॥ १ ॥[9] २०

न नाम्ना [10]नो वृत्या परिचयवशाच्छन्दसि न वा
न शब्दव्युत्पत्त्या निभृतमुपदेशान्न च गुरोः।
अपि त्वेताः स्वैरं जगति सुकवीनां मधुमुचो
विपच्यन्ते वाचः सुकृतपरिणामेन महता॥ २ ॥[11]

---

१ वत्ससहितया। २ क-'स्फीतिवधूजायौ०'। ३ ग-'श्रीपार्श्वनाथबिम्बं'। ४ क-'लोकेन'। ५ शिव०। ६ ग-'तत्पराः'। ७ ग-'श्रीशेषो हि धरणीधरण०' ८ अनुष्टुप्। ९ पृथ्वी। १० ख-घ-'मा वृत्या'। ११ शिखरिणी।

इति स्तुत्वा स सम्राट् स्वस्थानमयासीत् । वादीन्द्रोऽपि प्रभावना-
तुष्टेन सङ्घेन मध्ये कृतः ।

अन्येद्युः **सिद्धसेनो** विहर'न्नोङ्कारा'ख्यं 'मालवे'षु नगरं ययौ।
तत्र भक्तैः श्रावकैर्विज्ञप्तं सूरये, यथा—भगवन्! अस्यैव नगर-
५ स्यासन्नो ग्राम एक आसीत् । तत्र **सुन्दरो** नाम राजपुत्रो ग्रामणीः[1] ।
तस्य द्वे पत्न्यौ । एका प्रथमां पुत्रीं प्रासूत, अखिद्यत च । तदैव
सपत्न्यप्यासन्नप्रसवा वर्तते । मा स्मेयं पुत्रं प्रसूय भर्तुः सविशेषं
वल्लभा भूदिति स्त्रीत्वोचितया तुच्छया बुद्धया सूतिकामेकामवोचत—
यदा इयं मे सपत्नी प्रसवकाले त्वां दैववशादाह्वयति तदा त्वया
१० परस्थानात् प्रथमं सङ्गृहीतं मृतं किञ्चिदपत्यं तत्र सञ्चार्यम् ।
तज्जातकं चेत् पुत्रो भवति तदा स्वयं गृहीत्वा ग्रामाद् दूरे व्युत्स्रष्ट-
व्यम् । इदं हेम गृहाण । इति सूत्रणां चक्रुषी । विधिवशात् तत्र
तत् तया तथैव कृतम् । राजपुत्रो जातमात्रो ग्रामाद् दूरे क्षिप्तो ही ।
स राजपुत्रोऽपि पुण्याधिक इति तत्कुलदेवतया धेनुरूपेण दुग्धं
१५ दत्त्वा पालयन्त्याऽष्टवर्षदेशीयः कृतः । अथात्रैव 'ॐकार'नगरे **शिव-**
भवनाधिकारिणा भरटकेन दृष्टः, आलापितः, स्वां दीक्षां ग्राहितः ।

अन्यदा 'क(?का)न्यकुब्ज'देशाधिपतिर्नरेन्द्रो जात्यन्धो दिग्वि-
जयकार्येण प्रत्यासन्नः समावासितः । रात्रौ लघुभरटकस्य **शिवादेशः**
सञ्जातः—त्वया 'क(?का)न्यकुब्जे'शाय शेषा देया । तयाऽसौ सज्जा-
२० क्षो भावी । तद् वाक्यं लघुर्बृहद्गुरवे समाख्याय तदाज्ञया शेषामादाय
स्कन्धावारमध्यमेत्य राजामात्यानुवाच— भो भो स्वनाथमस्मत्सम्-
मुखमानयध्वं यथा सद्यः कमलदललितं स्वविषयग्रहणक्षमाक्षं
कुर्महे । ततोऽमात्यनुन्नो राजा तत्रायातः। ऋषिदत्तां शेषामादायाक्ष्णो-
र्निवेश्य सज्जाक्षो जातः । प्रीतो भक्त्या ग्रामशतानि शासनेऽदात् ।
२५ अत्रैव च 'ॐकारे' इममुत्तुङ्गं प्रासादमचीकरत् । वयमिह पुरे वसामः।
जैनः प्रासादः कारयितुं न लभ्यते । मिथ्यादृशो बलिनः । तस्मात्

---

१ ग–'राजपुत्रग्रामणीः' ।

तत्‌ कुरु येन इतोऽधिकं तुङ्गं रम्यं चैत्यं निष्पद्यते । बली त्वमेवेति ।
तद्वचनं श्रुत्वा वादी 'अवन्ती'मागत्य चतुःश्लोकीं हस्ते कृत्वा
विक्रमादित्यद्वारमेत्य द्वास्थेनोपराजं[1] श्लोकमचीकथत्‌ । स तेन
कथितः, यथा—

दिदृक्षुर्भिक्षुरायातो, द्वारि तिष्ठति वारितः[2] । ५
हस्तन्यस्तचतुःश्लोक, उतागच्छतु गच्छतु ? ॥ १ ॥[3]

त श्लोकं श्रुत्वा विक्रमादित्येन प्रतिश्लोकः कथापितः, यथा—

दत्तानि दश लक्षाणि, शासनानि चतुर्दश ।
हस्तन्यस्तचतुःश्लोक, उतागच्छतु गच्छतु ॥ २ ॥

वादिना तं श्लोकं श्रुत्वा द्वास्थद्वारेण भाणितं राज्ञे[4]— दर्शनमेव १०
भिक्षुरीहते, नार्थम्‌ । ततो राज्ञा स्वदृष्टौ आहूतः । उपलक्षितो
भाषितश्च—भगवन्‌ ! किमिति चिराद्‌ दृश्यध्वे ? । आचार्यैरुक्तम्‌—
धर्मकार्यवशाच्चिरादायातः । श्लोकचतुष्टयं शृणु । राज्ञि शृण्वति
पठितं तद्‌, यथा—

अपूर्वेयं धनुर्विद्या, भवता शिक्षिता कुतः ? । १५
मार्गणौघः समभ्येति, गुणो याति दिगन्तरम्‌ ॥ १ ॥[5]
[6]सरस्वती स्थिता वक्त्रे, लक्ष्मीः करसरोरुहे ।
कीर्तिः किं कुपिता राजन्‌ !, येन देशान्तरं गता ?॥२॥[6]
कीर्तिस्ते जातजाड्येव, चतुरम्भोधिमज्जनात्‌ ।
आतपाय धरानाथ !, गता मार्तण्डमण्डलम्‌ ॥ ३ ॥[7] २०
सर्वदा सर्वदोऽसीति, मिथ्या संस्तूयसे जनैः ।
नारयो लेभिरे पृष्ठं, न वक्षः परयोषितः ॥ ४ ॥[8]

श्रुत्वा तुष्टो विक्रमश्चतुरो गजान्‌ यथासङ्ख्यं वसन-सुगन्धद्रव्य-हेम-
नाणक-हारादिपूर्णान्‌ आनाय्य सूरिमभाणीत्‌—इमे गृह्यन्ताम्‌ ।

---

१ ग--'द्वास्थनोपचार' । २ क-ख--ग--'यातस्तिष्ठति द्वारि वारितः' ।
३ अनुष्टुप्‌ । ४ ख-घ-'राज्ञो दर्शन०'। ५-६ अनुष्टुप्‌ । ७-८ अनुष्टुप्‌ ।
चतुर्विंशति० ६

सूरिरूचे—नैतदर्थ्यहम् । पुनर्विक्रमो भणति—मन्महीसारभूतां-श्चतुरो देशान् स्वैरमादत्स्व । वाद्याह—इदमपि नेच्छामि । तर्हि किमिच्छसीति ?। राजन् ! श्रूयताम्—'ॐकारे' चतुर्द्वारं जैनप्रासादं शिवप्रासादादुच्चं कारय, स्वयं सपरिच्छदः प्रतिष्ठां च तत्र कारयेति।
५ राज्ञा तत् तथैव कृतम् । प्रभावनया सङ्घस्तुष्टः । एवं जैनं धर्मं द्योतयन् वादी दक्षिणस्यां 'पृथ्वीस्थान'पुरं विहरन् गतः । तत्रायु-रन्तं ज्ञात्वाऽनशनं लात्वा स्वर्गलोकमध्यवात्सीत् । तत्रत्यसङ्घेन 'चित्रकूटे' सिद्धसेनगच्छं तं वृत्तान्तं ज्ञापयितुं वाग्मी भट्ट एकः प्रस्थापितः । स तत्सूरिसभायां श्लोकपूर्वार्द्धं पुनः पुनः पठति स्म—

१० स्फुरन्ति वादिखद्योताः, साम्प्रतं दक्षिणापथे ।

पुनः पुनः पाठे 'सिद्धसारस्वत'या सिद्धसेनभगिन्योक्तम्—

नूनमस्तं गतो वादी, सिद्धसेनो दिवाकरः ॥ १ ॥[2]

पश्चाद् भट्टेन प्रपञ्च्योक्तम् । ततः शोको विहितो विसृष्टश्च ।

इति वृद्धवादिसिद्धसेनयोः प्रबन्धः[3] ॥ ६ ॥



---

[1] घ--'कूटे गच्छन्त त सिद्धसेनवृत्तान्त'। [2] अनुष्टुप्। [3] ख--घ--'प्रबन्धौ'।

[ ७ ]

## ॥ अथ श्रीमल्लवादिप्रबन्धः ॥

श्रीइन्द्रभूतिमानम्य, प्रभावकशिरोमणेः ।
श्रीमल्लवादिसूरीन्दो–श्चरितं कीर्त्यते मया ॥ १ ॥[1]
'खेटा'भिधं महास्थान–मस्ति 'गूर्जर'मण्डले । ५
देवादित्याह्वयस्तत्र, विप्रोऽभूद् वेदपारगः ॥ २ ॥
सुभगाख्या सुता तस्य, विधवा बाल्यकालतः ।
कस्मादपि गुरोर्मन्त्रं, [3]सौरं सा प्राप भक्तिभाक् ॥ ३ ॥
आकृष्टस्तेन मन्त्रेण, भास्करस्तामुपागमत् ।
तद्भोगलाभादापन्न–सत्त्वा सा न चिरादभूत् ॥ ४ ॥ १०
वैक्रियेभ्यः सुराङ्गेभ्यो, गर्भो यद्यपि नोद्भवेत् ।
[4]तदानीं त्वौदारिकाङ्ग–धातुयोगात् तु सम्भवी ॥ ५ ॥
आपाण्डुगण्डफलकां, ग्लानाङ्गीं वीक्ष्य तां पिता ।
बभाषे किमिदं वत्से !, निन्द्यमाचरितं त्वया ? ॥ ६ ॥
सा प्राह स्म पितर्नेयं, प्रमादविकृतिर्मम । १५
मन्त्राकृष्टागतोष्णांशु–न्यासः पुनरयं बलात् ॥ ७ ॥
इत्युक्तोऽपि विषण्णात्मा, देवादित्यः कुकर्मणा ।
तां पुत्रीं प्रेषयामास, सभृत्यां 'वलभीं' पुरीम् ॥ ८ ॥
कालेन तत्र साऽसूत, पुत्रं पुत्रीं च सुद्युतम् ।
तत्रैवोवास सुचिरं, जनकार्पितजीविका ॥ ९ ॥ २०
क्रमेण ववृधाते तौ, पुत्रौ बालार्कतेजसौ ।
यावदष्टौ व्यतिक्रान्ता, वत्सराः क्षणवत् तयोः ॥ १० ॥
तावदध्यापकस्यान्ते, पठितुं तौ निवेशितौ ।
कलहेऽर्भै निष्पितृक–मूचिरे लेखशालिकाः ॥ ११ ॥–युग्मम्

---

१ अतः परं ६९ तम पद्य यावत् छन्दोऽनुष्टुप्'। २ ख--घ--'स्थानं, अस्ति'।
३ सूर्यसम्बन्धि । ४ ख--घ -'तदानीतौ(?)दा०'।

तद्गिरा खिद्यमानोऽर्भः, पप्रच्छ जननीं निजाम् ।
किं मातर्नास्ति मे तातो, येन लोकोक्तिरीदृशी ? ॥ १२ ॥
माता जगाद नो वेद्मि, किं पीडयसि पृच्छया ?
ततः खिन्नः स सत्त्वाढ्यो, मर्तुमैच्छद् विपादिभिः ॥ १३ ॥
५ साक्षादागत्य तं भानु–रूचेऽहं वत्स ! ते पिता ।
पराभवकरो यस्ते, तस्याहं प्राणहारकः ॥ १४ ॥
इत्युक्त्वा कर्करं सूक्ष्म–मेकं तस्य समार्पयत् ।
ताड्योऽनेन त्वया द्वेषी, सद्यो मर्तेति चादिशत् ॥ १५ ॥
तेन कर्करशस्त्रेण, बालः स बलवत्तरः ।
१० विब्रुवन्तं विब्रुवन्त–मवधील्लेखशालिकम् ॥ १६ ॥
'वलभी'पुरभूपेन, श्रुतो वालवधः स तु ।
कुपितस्तं शिशुं सद्यो, जनैः स्वान्तिकमानयत् ॥ १७ ॥
उक्तश्च रे कथं हंसि, नृशंस ! शिशुकानमून् ? ।
बालः प्रत्याह न परं, बालान् हन्मि नृपानपि ॥ १८ ॥
१५ इत्थं वदन् महीपाल–महन् कर्करकेण तम् ।
मृतस्य तस्य साम्राज्ये, स राजाऽजनि विक्रमी ॥ १९ ॥
शिलादित्य इति ख्यातः, 'सुराष्ट्रा'राष्ट्रभास्करः ।
लेभे सूर्याद् वरं वाहं[4,5], परचक्रोपमर्दकम् ॥ २० ॥
निजां स्वसारं स ददौ, 'भृगुक्षेत्र'महीभुजे ।
२० असूत सा सुतं दिव्य–तेजसं दिव्यलक्षणम् ॥ २१ ॥
'शत्रुञ्जये' गिरौ चैत्यो–द्धारमारचयच्च सः ।
श्रेणिकादिश्रावकाणां, श्रेणावात्मानमानयत् ॥ २२ ॥
कदाचिदागतास्तत्र, बौद्धास्तर्कमदोद्धुराः ।
ते शिलादित्यमगदन्, सन्ति श्वेताम्बरा इमे ॥ २३ ॥

---

१ मुद्गरम् । २ ख--'सदा द्वेषी सद्यो मर्त्येति' । ३ घ--'शालकम्' ।
४ क-ख--'बाह' । ५ अश्वम् ।

वादे जयन्ति यद्यस्मां-स्तदैते सन्तु [1]नीवृति ।
वयं यदि जयामोऽमू-ऽस्तदा गन्तव्यमेतकैः ॥ २४ ॥
दैवयोगाज्जितं बौद्धैः, सर्वे श्वेताम्बराः पुनः ।
विदेशमाशिश्रियिरे, पुनः कालबलार्थिनः ॥ २५ ॥
शिलादित्यनृपो बौद्धान्, प्रपूजयति भक्तितः । ५
'[2]शत्रुञ्जये' च ऋषभ-स्तैर्बुद्धीकृत्य पूजितः ॥ २६ ॥
इतश्च सा शिलादित्य-भगिनी भर्तृमृत्युतः ।
विरक्ता व्रतमादत्त, सुस्थिताचार्यसन्निधौ ॥ २७ ॥
अष्टवर्षं निजं बाल-मपि व्रतमजिग्रहत् ।
[3]सामाचारीमपि प्राज्ञं, किञ्चित् किञ्चिदजिज्ञपत् ॥ २८ ॥ १०
एकदा मातरं साध्वीं, सोऽपृच्छदभिमानवान् ।
अल्पः कथं नः सङ्घोऽयं, प्रागप्यल्पोऽभवत् कथम् ? ॥२९॥
साऽप्युदश्रुरभाषिष्ट, वत्स ! किं वच्मि पापिनी ? ।
श्रीश्वेताम्बरसङ्घोऽभूद्, भूयानपि पुरे पुरे ॥ ३० ॥
तादृक्प्रभावनावीर-सूरीन्द्राभावतः परैः । १५
[4]स्वसात्कृतः शिलादित्यो, भूपालो मातुलस्तव ॥ ३१ ॥
तीर्थं 'शत्रुञ्जया'ह्वं यद्, विदितं मोक्षकारणम् ।
श्वेताम्बराभावतस्तद्, बौद्धैर्मूर्तैरिवाश्रितम् ॥ ३२ ॥
विदेशवासिनः श्वेता-म्बराः [5]खण्डितडम्बराः ।
क्षिपन्ति निहितौजस्काः, कालं क्वचन केचन ॥ ३३ ॥ २०
इति श्रुत्वाऽकुपद् बाल-स्[6]तीर्थागतभटान् प्रति ।
प्रतिज्ञां च चकारोच्चैः, प्रावृडम्भोधरध्वनिः ॥ ३४ ॥
नोन्मूलयामि चेद् बौद्धान्, नदीरय इव द्रुमान् ।
तदा भवामि सर्वज्ञ-ध्वंसपातकभाजनम् ॥ ३५ ॥

---

१ देशे । २ क-'शत्रुञ्जयेऽस्ति' । ३ साधूनामाचारम् । ४ आत्मवशीकृतः । ५ क-ख-'खण्डितडम्बरैः' । ६ बौद्धवीरान् ।

इत्युक्त्वाऽम्बां समापृच्छ्य, बालः कालानलद्युतिः ।
मल्लनामा गिरिं गत्वा, तेपे तीव्रतरं तपः ॥ ३६ ॥
आसन्नग्रामभैक्षेण, पारणं च चकार सः ।
दिनैः कतिपयैस्तच्च, जज्ञौ शासनदेवता ॥ ३७ ॥
५ भूत्वा व्योमनि साऽवादीत्, के मिष्टाः सोऽपि बालकः ।
तच्छ्रुत्वाऽऽख्यत् सानुभवं, वल्ला इति खदत्तदक् ॥ ३८ ॥
षण्मास्यन्ते पुनः सोचे, खस्था केन सहेत्यथ ? ।
बालर्षिरप्यभाषिष्ट, समं घृतगुडैः शुभैः ॥ ३९ ॥
अवधारणशक्त्यां तं, योग्यं शासनदेवता ।
१० प्रत्यक्षा न्यगदद् वत्स !, भूयाः परमतापहः ॥ ४० ॥
नयचक्रस्य तर्कस्य, पुस्तकं लाहि मानद ! ।
वाणी सेत्स्यति ते सम्यक्, कुतर्कोरगजाङ्गुली ॥ ४१ ॥
भूमौ मुमोच तं तर्क–पुस्तकं बालको मुनिः ।
प्रमादः सुलभस्तत्र, वयोलीलाविशेषतः ॥ ४२ ॥
१५ रुष्टा शासनदेव्यूचे, विहिताऽऽशातना त्वया ।
सान्निध्यं ते विधाताऽस्मि, प्रत्यक्षीभविता न तु ॥ ४३ ॥
तं लब्ध्वा पुस्तकं मल्ल–वादी देदीप्यते स्म सः ।
शस्त्रं पाशुपतमिव, मध्यमः पाण्डुनन्दनः[1] ॥ ४४ ॥
आगत्य 'वलभी'द्रङ्गं, 'सुराष्ट्र'राष्ट्रभूषणम् ।
२० शिलादित्यं युगप्रान्ता–दित्यद्युतिरुवाच सः ॥ ४५ ॥
बौद्धैर्मुधा जगज्जग्धं, प्रतिमल्लोऽहमुत्थितः ।
[2]अप्रमादी मल्लवादी, त्वदीयो भगिनीसुतः ॥ ४६ ॥
शिलादित्यनृपोपान्ते, बौद्धाचार्येण वाग्मिना ।
वादिवृन्दारकश्चक्रे, तर्कवर्वरमुल्बणम् ॥ ४७ ॥
२५ मल्लवादिनि जल्पाके, [3]नयचक्रबलोल्बणे ।

१ अर्जुनः । २ क घ–'अप्रवादी', ग-पुस्तके तु 'अप्रमादो' इति पाठः ।
३ ग–'नयतर्कबलो०' ।

हृदये हारयामास, षण्मासान्ते स शाक्यराट् ॥ ४८ ॥
षण्मासान्तनिशायां स, स्वं निशान्तमुपेयिवान् ।
तर्कपुस्तकमाकृष्य, कोशात् किञ्चिदवाचयत् ॥ ४९ ॥
चिन्ताचक्रहते चित्ते, नार्थास्तान् धर्तुमीश्वरः ! ।
बौद्धः स चिन्तयामास, प्रातस्तेजोवधो मम ॥ ५० ॥ ५
श्वेताम्बरस्फुलिङ्गस्य, किञ्चिदन्यदहो महः ! ।
निर्वासयिष्यन्तेऽमी हा, बौद्धाः साम्राज्यशालिनः ॥ ५१ ॥
धन्यास्ते ये न पश्यन्ति, देशभङ्गं कुलक्षयम् ।
परहस्तगतां भार्यां, मित्रं चापदि संस्थितम् ॥ ५२ ॥
इति दुःखौघसङ्घट्टाद्, विदद्रे तस्य हृत् क्षणात् । १०
नृपाह्वानं समायात, प्रातस्तस्य द्रुतं द्रुतम् ॥ ५३ ॥
नोद्घाटयन्ति तच्छिष्या, गृहद्वार वराककाः ।
[2]मन्दो गुरुर्नाद्य भूप–सभामेतेति भाषिणः ॥ ५४ ॥
तद् गत्वा तत्र तैरुक्तं, श्रुत्वा तन्मल्ल उल्लसन् ।
अवोचच्च **शिलादित्यं**, मृतोऽसौ शाक्यराट् शुचा ॥ ५५ ॥ १५
स्वयं गत्वा **शिलादित्य**–स्तं तथास्थमलोकत ।
बौद्धान् प्रावासयद् [3]देशाद्, धिक् प्रतिष्ठाच्युतं नरम् ॥ ५६ ॥
**मल्लवादिन**माचार्यं, कृत्वा वागीश्वरं गुरुम् ।
विदेशेभ्यो जैनमुनीन्, सर्वानाजूहवन्नृपः ॥ ५७ ॥
'शत्रुञ्जये' जिनाधीशं, भवपञ्जरभञ्जनम् । २०
कृत्वा श्वेताम्बरायत्तं, यात्रां प्रावर्तयन्नृपः ॥ ५८ ॥
कालान्तरे तत्र पुरे, **रङ्को** नामाभवद् वणिक् ।
तस्य कार्पटिको हट्टे, न्यासीचक्रे महारसम् ॥ ५९ ॥
रसेन तेन स्पृष्टस्य, लोहस्य [4]तपनीयताम् ।
स दृष्ट्वा हट्टसदन–परावर्तं चकार [5]च ॥ ६० ॥ २५

---

१ क-ख–'प्रत्योरिदं पद्यं नास्ति' । २ 'मांदो' इति भाषायाम् । ३ क-ख-घ–'देशान्' । ४ सुवर्णताम् । ५ क–'सः' ।

वञ्चयित्वा कार्पटिकं, रङ्कः सोऽभून्महाधनः ।
तत्पुत्र्या राजपुत्र्याश्च, सख्यमासीत् परस्परम् ॥ ६१ ॥
[1]हैमीं कङ्कतिकामेकां, दिव्यरत्नविभूषिताम् ।
रङ्कपुत्रीकरे दृष्ट्वा, याचते स्म नृपात्मजा ॥ ६२ ॥
५ तां न दत्ते पुना[2] रङ्को, राजा तं याचते बलात् ।
तेनैव मत्सरेणासौ, म्लेच्छसैन्यमुपानयत् ॥ ६३ ॥
भग्ना पूर्'वलभी' तेन, सञ्जातमसमञ्जसम् ।
शिलादित्यः क्षयं नीतो, वणिजा स्फीतऋद्धिना ॥ ६४ ॥
ततोऽथाकृष्य वणिजा, प्रक्षिप्ताश्च[3] रणे शकाः ।
१० तृ[4]ष्णया ते स्वयं मम्रु–र्ह(य?)तो व्याधिर्महानयम् ॥ ६५ ॥
विक्रमादित्यभूपालात्, पञ्चर्षित्रिक(५७३)वत्सरे ।
जातोऽयं 'वलभी'भङ्गो, ज्ञानिनः प्रथमं ययुः ॥ ६६ ॥
स्ववर्त्मना गतान्यर्हद्–बिम्बानि विषयान्तरम् ।
देवताधिष्ठितानां हि, चेष्टा सम्भाविनी तथा ॥ ६७ ॥
१५ एतच्च प्रथमं ज्ञात्वा, मल्लवादी महामुनिः ।
सहितः परिवारेण, 'पञ्चासर'पुरीमगात् ॥ ६८ ॥
'नागेन्द्र'गच्छसत्केषु, धर्मस्थानेष्वभूत् प्रभुः ।
श्री'स्तम्भनक'तीर्थेऽपि, सङ्घस्तस्येशतामधात् ॥ ६९ ॥

श्रीमल्लवादिचरितं जिनशासनीय–
२० तेजःसमुन्नतिपवित्रमिदं निशम्य ।
भव्याः! कवित्ववचनादिविचित्रलब्धि–
[5]व्रातैः प्रभावयत शासनमार्हतं भोः ॥ ७० ॥[6]

इति श्रीमल्लवादिचरित्रम् ॥ ७ ॥



१ ग–'हैमीकङ्कनीका०:'। २ घ--'पुरा'। ३ ग--'क्षरिणे'। ४ ग--'तृष्णाया ते स्वय मृत्वा, हतो'। ५ ख--'भ्रात्था'। ६ वसन्त०।

[८]

## ॥ अथ श्रीहरिभद्रसूरिप्रबन्धः ॥

श्री[1]चित्रकूटे हरिभद्रो विप्रश्चतुर्दशविद्यास्थानज्ञः । दृश्यां पादुकाः, पञ्चमदूरीकृतदर्शनान्यानि पञ्चममाघ इति कृत्वा; उदरे पट्टः, उदर विद्यया स्फुटतीति कृत्वा । जालं कुद्दालो[3] निःश्रेणी सह चलन्ति । यत्पठितमहं न जानामि तस्य शिष्यो भवामीति प्रतिज्ञा । एकदा चतुष्पथासन्नभूमिं व्रजता[4] गाथामेकां पठयमाना[5] याकिनी नाम साध्वी श्रुता[6] । तया

"[7]चक्किदुगं हरिपणगं, पणगं चक्कीण केसवो चक्की ।
केसव चक्की केसव-दुचक्किकेसी य चक्की य ॥ १ ॥"[8] १०

इति गाथा पेठे । न च तेन बुद्धा । अग्रे गत्वोक्तम्—मातः ! खेरं[9] चिकचिकापितम् । साध्व्योक्तम्— नवं लिप्तम् । अहो अनयाऽहमुत्तरेणापि जितः । इति तां ववन्दे । त्वच्छिष्योऽस्मि । गाथार्थं ब्रूहि मातः ! । सा प्राह स्म— मम गुरवः सन्ति । हरिभद्रः प्राह— क्व ते ? । अत्र सन्ति । ततः केनापि श्रावकेण[10] १५ स चैत्यं नीतः । जिनदर्शनं तत्प्रथमम् । हर्षः ।

"[11]वपुरेव तवाचष्टे, भगवन् ! वीतरागताम् ।
न हि कोटरसंस्थेऽग्नौ, तरुर्भवति शाड्वल ॥ १ ॥"

---

१ "षडङ्गमिश्रिता वेदा, धर्मशास्त्रं पुराणकम् ।
मीमांसा तर्कमपि च, एता विद्याश्चतुर्दश ॥"

२ ग्र 'दृपादुकामदूरीकृतं दर्श०'। ३ 'कोदाली' इति भाषायाम् । ४ क-ख-घ-'व्रजन्'। ५ ग-पुस्तके 'गाथामेकां पठयमाना' एतदधिकम् । ६ ग-पुस्तके 'श्रुता' एतदधिकम् ।
७ छाया— चक्रिद्विकं हरिपञ्चकं पञ्चकं चक्रिणां केशवश्चक्री ।
केशवश्चक्री केशवद्विचक्रिकेशिनौ च चक्री च ॥
८ आर्या । ९ ख-'खरं' । १० 'अत्र सन्ति । ततः केनापि श्रावकेण' इत्यधिके ग-पाठः । ११ अनुष्टुप् ।

'जं दिट्ठी करुणातरंगियपुडा एयस्स सोमं मुहं
आयारो पसमायरो परियरो संतो पसन्ना तणू ।
त नूणं जरजम्ममच्चुहरणो देवाहिदेवो इमो
देवाणं अवराण दीसइ जओ नेयं सरूवं जए ॥ २ ॥'[1][2]

५ इत्यादि नवीननमस्काराः। ततो **जिनभट्टाचार्यदर्शनम्** । प्रतिपत्तिः। चारित्रम्। सूरिपदवी। **आवश्यके** 'चक्की'त्यादिदुष्करत्वा**दावश्यकं**[3] तेनैव विवृत्तम् । 'कलिकालसर्वज्ञ' इति बिरुदम् । रहस्य-पुस्तका देवताभ्यो लब्धाः । ते चादरेण जितदिक्पटाचार्योच्छिन्न-८४मठप्रतिबद्ध८४नामकप्रासादस्तम्भे विविधौषधनिष्पन्ने जलज्वल-
१० नाद्यसाध्ये क्षिप्ताः ।

एकदा भागिनेयौ **हंस-परमहंसौ** पाठयति प्रभुः । निष्पन्नौ, पर बौद्धतर्कास्तन्मुखेन पिपठिषतः । गुरुणा[4] ज्ञानिना वार्यमाणावपि तत्पार्श्वं गतौ । जरतीगृहे उत्तारकः[5] । बौद्धाचार्यान्तिके तद्वेषस्थौ पठतः । कपलिकायां रहस्यानि लिखतः । प्रतिलेखनादिसंस्कारवशाद्
१५ दयालू इव[6] ज्ञात्वा गुरुणाऽचिन्ति—ध्रुवं श्वेताम्बरावेतौ । द्वितीयाहे सोपानश्रेणौ खट्याऽर्हद्बिम्बमालिलिखे । तदासन्नायातौ तौ पादौ[7] तत्र[8] न दत्तः। रेखात्रयाङ्कस्तत्कण्ठश्चक्रे। बुद्धोऽयं जात इति कृत्वा उपरि पादो दत्तः । उपरि चटितौ । गुरुणा दृष्टौ । गुरोः समक्ष निषण्णौ । तौ गुर्वास्यच्छायापरावर्तं दृष्ट्वा तत्कैतवं तत्कृतमेव मत्वा
२० जठरपीडामिषेण ततो निरक्रामताम् । कपलिकां छात्वा गतौ तौ चिरान्नायातौ । विलोकापितौ न स्तः । राजाग्रे कथितम्—

---

१ छाया—यद् दृष्टिः करुणातरङ्गितपुटा एतस्य सौम्यं मुखं
आचारः प्रशमाकरः परिकरः शान्तः प्रसन्ना तनुः ।
तद् नूनं जराजन्ममृत्युहरणो देवाधिदेवोऽयं
देवानामपरेषां दृश्यते यतो नेदं स्वरूपं जगति ॥

२ शार्दूल० । ३ 'दुष्करत्वादावश्यकं' इत्यधिको ग—पाठः । ४ ग-'तौ गुरुणा' । ५ 'उतारो' इति भाषायाम् । ६ घ-'दयालव इव'। ७ क-'पादं'। ८ ग-पुस्तके 'तत्र' एतदधिकं समस्ति ।

सितपटावुत्कटकपटौ तत्त्वं ज्ञात्वा यातः । कपालिकामानायथ । पृष्ठे सैन्यमल्पं गतम् । दृष्टिदृष्टिः । द्वावपि सहस्रयोधौ तौ । ताभ्यां निहतं राजसैन्यम् । उद्धृतनष्टैरुपराज गत्वा कथितं तत्तेजः। पुनर्बहु- सैन्यं प्रैपि । दृष्टिमेलापकः। युद्धमेकः करोति। अपरः कपारि(लि?) कापाणिर्नष्टः । हंसस्य शिरश्छित्त्वा राज्ञे दर्शितं तैः । तेनापि गुरवे दत्तम् । गुरुराह—किमनेन ? । कपरि(लि?)कामानायथ । गता भटाः । रात्रौ ' चित्रकूटे ' प्राकारकपाटयोर्दत्तयोस्तदासन्ने सुप्तस्य परमहंसस्य शिरश्छित्त्वा तैस्तत्रार्पितम् । तेषां बौद्धाना तत्सूरेश्च सन्तोषः। प्रातः श्रीहरिभद्रसूरिभिः शिष्यकबन्धो दृष्टः। कोपः । तैलकटाहाः कारिताः । अग्निना तापितं तैलम् ।१४४० बौद्धा होतुं [1] आकृष्टाः [1]शकुनिकारूपेण पतन्ति । गुरुभिर्वृत्तान्तो [2]ज्ञातः । [3]प्रतिबोधाय साधू प्रहितौ । ताभ्यां गाथा दत्ताः—

" [4]गुणसेण-अग्गिसमा सीहा-ऽऽणंदा य तह पिया-पुत्ता ।
सिहि-जालिणि माइ-सुया धण-धणसिरिमो य पइ-भज्जा॥१॥[5]
[6]जय-विजया य सहोयर धरणो लच्छी य तह पई भज्जा ।
[7]सेण-विसेणा पित्तिय-उत्ता जम्ममि सत्तमए ॥ २ ॥
[8]गुणचंद-[9]वाणवंतर समराइच्च गिरिसेणपाणो उ ।
एगस्स तओ मुक्खो-ऽणंतो बीयस्स ससारो ॥ ३ ॥

१ ङ–पुस्तके ' शकुनिकारूपेण पतन्ति ' एतदधिकं विद्यते । २ घ– 'ज्ञापित ।
३ ग–पुस्तके 'प्रतिबोधाय' एतदधिकं वर्तते ।
४ छाया—गुणसेना-ऽग्निशर्माणौ सिंहा-ऽऽनन्दौ च तथा पितापुत्रौ ।
शिखि-जालिन्यौ मातासुते धन-धनश्रियौ च पतिभार्ये ॥
५ अस्य पद्यस्यानन्तरीयस्य च पद्यत्रितयस्य छन्द 'आर्या' वर्तते।
६ आर्या—जय-विजयौ च सहोदरौ धरणो लक्ष्मीश्च तथा पतिभार्या ।
सेन-विषेणौ पितृव्यपुत्रौ जन्मनि सप्तमे ॥
७ ङ–'सेणविसेणा पत्तियं' ।
८ छाया—गुणचन्द्र-वानव्यन्तरौ समरादित्यो गिरिषेणप्राणः (मातङ्गः) तु ।
एकस्य ततो मोक्षोऽनन्तो द्वितीयस्य ससार ॥
९ ङ–'वाणमंतर' ।

जह जलइ जलउ लोए, कुसत्थपवणाहओ कसायग्गी ।
तं चुज्जं जं जिणवयणअमियसित्तो वि पज्जलइ ॥ ४ ॥"

बोधः । शान्तिः । १४४० ग्रन्थाः प्रायश्चित्तपदे कृताः । 'चित्रकूट'तलहट्टिकास्थेन तैलवणिजा प्रतयः कारिताः । तत्प्रथमं
५ याकिनीधर्मसूनुरिति हारिभद्रग्रन्थेष्वतोऽभूत् । १४४० पुनर्भव-विरहान्तता । 'गुणसेण-अग्गिसम्मा'इत्यादिगाथात्रयप्रतिबद्धं समरादित्यचरित्रं नव्यं शास्त्रं क्षमावल्लीबीजं कृतम् । १०० शतक-पञ्चाशत्-षोडशक-अष्टक-पञ्चलिङ्गी-अनेकान्तजय-पताका-न्यायावतारवृत्ति-पञ्चवस्तुक-पञ्चसूत्रक-श्रावकप्रज्ञप्ति
१० -नाणायत्तकप्रभृतीनि हारिभद्राणि ।

अत्रान्तरे 'श्रीमाल'पुरे कोऽपि धनी श्रेष्ठी जैनश्चतुर्मासके सपरिकरो देवतायतनं व्रजन् सिद्धाख्यं राजपुत्रं द्यूतकारं युवानं देयकनकपदे निर्दयैर्द्यूतकारैर्गर्तायां निक्षिप्तं कृपया तद्देयं दत्त्वाऽमोचयत् । गृह-मानीयाभोजयत् । अपाठयत् । सर्वकार्याध्यक्षमकरोत् । पर्यणाययत् ।
१५ माता प्रागप्यासीत् । पृथग् गृहेऽस्थात् । मात्रा प्रियया च समं स गृहमण्डनिका । श्रेष्ठिप्रसादाद् धन बभूव । सिद्धो रात्रौ अतिकाले एति, लेख्यकलेखलेखनपरवशत्वात् । श्वश्रू-स्नुषे अतिनिर्विण्णे, अतिजागरणात् । वध्वा श्वश्रूरुक्ता— मातः ! पुत्रं तथा बोधय यथा निशि सकाले एति । मात्रा उक्तः सः— वत्स ! निशि शीघ्रमेहि,
२० यः कालज्ञः स सर्वज्ञः । सिद्धः प्राह—मातः ! येन स्वामिनाऽहं सर्वस्वदानेन जीवितव्यदानेन च समुद्धृतस्तदादेशं कथं न कुर्वे ? । तौष्णीक्येन स्थिता माता । अन्यदाऽऽलोचितं श्वश्रू-स्नुषाभ्याम्—

---

१ छाया—यथा ज्वलति ज्वलन लोके कुशास्त्रपवनाहतः कषायाग्निः ।
तच्चोद्यं यज्जिनवचनामृतसिक्तोऽपि प्रज्वलति ॥

२ ग-'ष्वन्तेऽभूत् । ३ एतत्प्राप्तिरधुना दुर्लभा । ४ न ज्ञायते एतदुपलब्धिः । ५ क-'श्चतुर्मासे' । ६ ग-पुस्तके 'गृहे' अस्यानन्तरं 'अस्थात् । मात्रा प्रियया च समं सः' एतदधिकं वर्तते । ७ ग-पुस्तके 'बभूव' एतदधिकमस्ति ।

अस्य चिरादागतस्य निशि द्वारं नोद्घाटयिष्यावः। द्वितीयरात्रावति-
[1]चिराद् द्वारमागतः स कटकं [2]खटपटापयति। ते तु न श्रूतः।
तेन क्रुद्धेन गदितम्— किमिति द्वारं नोद्घाटयेथे?। ताभ्यां
मन्त्रितपूर्विणीभ्यामुक्तम्—यत्रेदानीं द्वाराणि उद्घाटितानि भवन्ति तत्र
व्रज। तच्छ्रुत्वा क्रुद्धश्चतुष्पथं गतः। तत्रोद्घाटे हट्टे उपविष्टान् ५
सूरिमन्त्रस्मरणपरान् श्रीहरिभद्रान् दृष्टवान्। सान्द्रचन्द्रिके नभसि
देशना। बोधः। व्रतं जगृहे। सर्वविद्यता दिव्यं कवित्वम्।
हंस-परमहंसवद् विशेषतर्का[3]ञ् जिघृक्षुर्बौद्धान्तिकं जिगमिषु-
र्गुरुमवादीत्— प्रेषयत बौद्धपार्श्वे। गुरुभिर्गदितम्—तत्र मा
गाः, मनःपरावर्तो भावी। स ऊचे— युगान्तेऽपि नैवं स्यात्। १०
पुनर्गुरवः प्रोचुः— तत्र गतः परावर्त्यसे चेत् तदा अस्मद्दत्तं
वेषमत्रागत्यास्मभ्य ददीथाः। ऊरीचक्रे सः। गतस्तत्र, पठितुं
लग्नः। सुघटितैस्तत्कुतर्कैः परावर्तितं मनः। तद्दीक्षां ललौ। वेषं
दातुमुपश्रीहरिभद्रं ययौ। तैरप्यागच्छन्[4]नावर्जितो वादं कुर्वन् वादेन
जितः। बौद्धाचार्यस्य बौद्धवेष दातु गतः। तेनापि बोधितः। १५
पुनरागत उपश्रीहरिभद्र श्वेताम्बरवेषं दातुम्। पुनर्वादेन जितः।[5]
एवं वेषद्वयप्रदानेन एहिरेयाहिराः २१ कृता[6]। द्वाविंशवेलायां
गुरुभिश्चिन्तितम्— माऽस्य वराकस्य आयुःक्षयेण मिथ्यादृष्टित्वे
मृतस्य दीर्घभवभ्रमणं भूयात्। पुराऽपि २१ वारान् वादे जितो-
ऽसौ। अधुना वादेनालम्। ललितविस्तराख्या चैत्यवन्दना- २०
वृत्तिः सतर्का कृता। तदागमे पुस्तिकां पादपीठे मुक्त्वा गुरवो
बहिरगुः। तत्पुस्तिकापरामर्शाद् [7]बोधः समजनि। ततस्तुष्टो
निश्चलमनाः प्राह—

१ क- 'चिरेण'। २ ख- 'खटापयति', क -'घटपटापयति। ३ घ- 'तर्कानाजि०'। ४ क-ख- गच्छन(?) जटित.'। ५ ग-पुस्तके 'वाद इत्यारभ्य 'पुनर्वादेन जितः' एतत्पर्यन्तमधिक विद्यते। ६ घ-' वारं वादैर्जितो'। ७ क-'बोध्या सम्यक्'।

[1]नमोऽस्तु हरिभद्राय, तस्मै प्रवरसूरये ।
मदर्थं निर्मिता येन, वृत्तिर्ललितविस्तरा ॥ १ ॥[2]

ततो मिथ्यात्वनिर्विण्णेन [3]सिद्धर्षिणा [4]१६ सहस्रा उपमिति-भवप्रपञ्चा कथाऽरचि 'श्रीमाले' [5]सिद्धिमण्डपे । सा च
५ सरस्वत्या साध्व्याऽशोधि । समये श्रीहरिभद्रसूरयोऽपि सोऽपि अनशनेन सुरलोकमवापन् ॥ इति चरित्रम् ।

इति श्रीहरिभद्रसूरिप्रबन्धः ॥ ८ ॥



१ सन्तुलयता श्रीउपमितिभवप्रपञ्चकथाप्रशस्तिगतं निम्नलिखितं पद्यम्–
"अनागतं परिज्ञाय, चैत्यवन्दनसंश्रया ।
मदर्थेव कृता येन, वृत्तिर्ललितविस्तरा ॥ १७ ॥"
२ अनुष्टुप् । ३ ख-घ–'सिद्धिऋषिणा'। ४ ग–'१८'। ५ ख-घ–'षिसि(?)मण्डपे' ।

[ ९ ]

## ॥ अथ श्रीबप्पभट्टिसूरिप्रबन्धः ॥

'गूर्जर'देशे 'पाडलीपुर'नगरे जितशत्रू राजा राज्यं करोति स्म। तत्र श्रीसिद्धसेननामा सूरीश्वरोऽस्ति स्म। स 'मोढेर'पुरे महास्थाने श्रीमहावीरनमस्करणाय गतः। महावीरं नत्वा तीर्थोपवासं कृत्वा रात्रावात्मारामरतो योगनिद्रया स्थितः सन् स्वप्नं ददर्श, यथा— केसरिकिशोरको देवगृहोपरि क्रीडति। स्वप्नं लब्ध्वाऽजागरीत्। माङ्गल्यस्तवनान्यपाठीत्। प्रातश्चैत्यं गतः। तत्र षड्वार्षिको बाल एको बालांशुमालिसमद्युतिराजगाम। सूरिणा पृष्टः— भो अर्भक! कस्त्वम्? कुत आगतः? । तेनोक्तम् —'पञ्चाल'देशे 'डुबाउधी' ग्रामे बप्पाख्यः क्षत्रियः। तस्य भट्टिर्नाम सधर्मचारिणी। तयोः सूरपालनामपुत्रोऽहम्। मत्तातस्य बहवो भुजबलगर्विताः प्रचुरपरिच्छदाः शत्रवः सन्ति। तान् सर्वान् हन्तुमहं सन्नह्य चलन्नासम्। पित्रा निषिद्धः—वत्स! बालस्त्वम्, नास्मै कर्मणे प्रगल्भसे; अलमुद्योगेन। ततोऽहं क्रुद्धः—किमनेन निरभिमानेन पित्राऽपि यः स्वयमरीन् न हन्ति मामपि घ्नन्तं निवारयति? । अपमानेन मातापितरावनापृच्छ्यात्र समागतः। सूरिणा चिन्तितम्— अहो दिव्य रत्नम्! न मानवमात्रोऽयम्; तेजसां हि न वयः समीक्ष्यते। इति विमृश्य बाल आलेपे— वत्सक! अस्माकं पार्श्वे तिष्ठ निजगृहाधिकसुखेन। बालेनोक्तम्— महान् प्रसादः। स्वस्थानमानीतः। सङ्घो हृष्टस्तद्रूपविलोकनेन। हृदयस्तृप्तिं न मन्वते। पाठयित्वा विलोकितः। एकाहेन श्लोकसहस्रमभ्यणीष्ट। गुरवस्तुष्टुवुः। रत्नानि पुण्यप्रचय-

---

१ घ-प्रतौ प्रबन्धोऽयं 'आमप्रबन्ध'प्रान्ते समस्ति। २ ग-'बप्पभट्टसूरि०'। ३ ग-'पाडलापुर०', घ-'पाडलापुर०'। ४ क-'अत्र'। ५ ग-'श्रीमहा०'। ६ ग-'डूंबा०'। ७ ग-'तन्वते'।

प्राप्याणि। धन्या वयम्। तेन बालेनाप्यल्पदिनैर्लक्षण-तर्क-साहित्यादीनि भूयांसि शास्त्राणि पर्यशीलिषत। ततो गुरवो '[1]डुंबाउधी'ग्रामं जग्मुः। बालस्य पितरौ वन्दितुमागतौ। गुरुभिरालापितौ—पुत्रा भवन्ति भूयांसोऽपि; किं तैः संसारावकरकृमिभिः?। अयं तु युवयोः पुत्रो व्रतमीहते। दीयतां नः। गृह्यतां धर्मः। नष्टं मृतं सहन्ते हि पितरो निजतनयम्। श्लाघ्योऽयं भव निस्तितीर्षुः। पितृभ्यामुक्तम्—भगवन्! अयमेक एव नः कुलतन्तुः कथं दातुं शक्यते?। तावता सविधस्थेन सूरपालेन गदितम्—अहं चारित्रं गृह्णाम्येव। यतः—

सा बुद्धिर्विलयं प्रयातु कुलिशं तत्र श्रुते पात्यतां
वल्गन्तः प्रविशन्तु ते हुतभुजि ज्वालाकराले गुणाः।
यैः सर्वैः शरदिन्दुकुन्दविशदैः प्राप्तैरपि प्राप्यते
भूयोऽप्यत्र पुरन्ध्रिरन्ध्रनरकक्रोडाधिवासव्यथा ॥ १ ॥[2]

ततो [3]ज्ञाततन्निश्चयाभ्यां तन्मातरापितृभ्यां जल्पितम्— भगवन्! गृहाण पात्रमेतत्। परं बप्पभ[4]ट्टिरिति नामास्य कर्तव्यम्। गुरुभिर्भणितम्—एवमस्तु। कोऽत्र दोषः?। पुण्यवन्तौ युवां ययोरयं लाभः सम्पन्नः। बप्प-भट्टी आपृच्छ्य सूरपालं गृहीत्वा सिद्धसेनाचार्या 'मोढेरकं' गताः।

शताष्टके वत्सराणां, गते विक्रमकालतः।
सप्ताधिके राधशुक्ल—तृतीयादिवसे गुरौ ॥ १ ॥[5]

दीक्षा दत्ता। बप्पभट्टिरिति नाम विश्ववल्लभं जुघुषे। सङ्घप्रार्थनया तत्र चतुर्मासकं कृतम्। अन्यदा बहिर्भूमिं गतस्य बप्पभट्टेर्महतीं वृष्टिमतनिष्ट घनः। क्वापि देवकुले स्थितः सः। तत्र देवकुले महाबुधः को पि पुमान् समागतः। तत्र देवकुले प्रशस्तिकाव्यानि रसाढ्यानि गम्भीरार्थानि तेन बप्पभट्टिपार्श्वाद् व्याख्या-

---

१ घ-'डुबा०'। २ शार्दूल०। ३ घ-'ज्ञातनिश्चया०'। ४ ख-'भट्टि०'। ५ अनुष्टुप्। ६ ख-'बोधः'।

पितानि । ततः स बप्पभट्टिना समं वसतिमायातः । गुरुभिराशीर्भिरभिनन्दितः । आम्नायं स पृष्टः । ततोऽसौ जगाद—भगवन् ! 'कन्यकुब्ज'देशे 'गोपालगिरि'दुर्गनगरे यशोधर्म[1]नृपतेः [2]सुयशादेवीकुक्षिजन्मा नन्दनोऽहं यौवनेन निरर्गलं धनं लीलया व्ययन् पित्रा कुपितेन शिक्षितः—वत्स ! धनार्जकस्य कृच्छ्रमरथानव्ययी पुत्रो न वेत्ति तातस्य, मितव्ययो भव । ततोऽहं कोपादिहागमम् । गुरवोऽप्यूचुः—किं ते नाम ? । तेनापि खटिकया भुवि लिखित्वा दर्शितं आम इति । महाजनाचार[3]परम्परेदृशी—'स्वनाम नामाददते न साधवः' । तस्यौन्नत्येन गुरवो हृष्टाः । चिन्तितं च तैः—

पूर्वं श्रीरामसैन्ये [4]ग्रामे दृष्टोऽसौ षाण्मासिकः शिशुः ।

पीलुवृक्षमहाजाल्यां, [5]वस्त्रदोलकमास्थितः ।

[6]अचलच्छायया च, पुण्यपुरुषो निर्णितः ॥[7]

ततस्तज्जननी वन्यफलानि विचिन्वानाऽस्माभिर्भणिता—वत्से ! का त्वम् ? । [8]किञ्च ते कुलम् ? । साऽवादीत् निजं कुलम्—अहं राजपुत्री 'कन्यकुब्जे'श[9]यशोधर्मपत्नी सुयशा नाम । अहमस्मिन् सुते गर्भस्थे सति दृढकार्मणवशीकृतधवया यत्कृतप्रमाणया कृत्ययेव क्रूरया सपत्न्या मिथ्या परपुरुषदोषमारोप्य गृहान्निष्कासिता । अभिमानेन श्वशुरकुल-पितृकुले हित्वा भ्रमन्तीह समागता वन्यवृत्त्या जीवामि । बालं च पालयामि । इदं श्रुत्वाऽस्माभिर्सा उक्ता—वत्से ! अस्मच्चैत्यं समागच्छ स्वं वत्सं [10]प्रवर्धय । तया तथा कृतम् । सपत्न्यपि बहुसपत्नीकृतमारणप्र[11]योगेण ममार । ततो विशिष्टपुरुषैः 'कन्यकुब्जे'शो यशोधर्मा विज्ञप्तः— देव ! सुयशा राज्ञी निर्दोषाऽपि तदा देवेन सपत्नीवचसा निष्कासिता सा प्रत्या-

(५) (१०) (१५) (२०)

१ ग—'वर्म०'। २ क—घ—'सुशाया (?यशा)०', ग—पुस्तके तु 'सुयशो०'। ३ घ—'पद परेदृशी'। ४ घ—'ग्रामेऽसौ दृष्टः षाण्मासिकः शिशुः'। ५ ख—'वस्त्रान्दोल०'। ६ सप्ताक्षरात्मक चरणमिदम्। ७ अनुष्टुप् (?)। ८ घ—'किंवा ते'। ९ ग—'यशोधर्म०'। १० ख-ग—'वर्धय'। ११ क—'प्रयोगैर्ममार'।

नीयते । राज्ञा सा स्वसौधमानायिता सपुत्रा गौरविता च ।

अन्यदा विहरन्तो वयं तस्या देशं गताः । तया पूर्वप्रतिपन्नं स्मरन्त्या वयं वन्दिताः पूजिताः । अनेन आमनाम्ना तत्सुतेन भाव्यम् । एवं चिरं विभाव्य सूरयस्तमूचुः— वत्स ! वस
५ निश्चिन्तो निजेन सुहृदा बप्पभट्टिनाम्ना सममस्मत्सन्निधौ । त्व गृहाण कलाः । कास्ताः ?—लिखितम् १ गणितम् २ गीतम् ३ नृत्यम् ४ वाद्यम् ५ पठितम् ६ व्याकरणम् ७ छन्दो ८ ज्योतिषम् ९ शिक्षा १० निरुक्तम् ११ कात्यायनम् १२ निघण्टुः १३ पत्रच्छेद्यम् १४ नखच्छेद्यम् १५ रत्नपरीक्षा १६
१० आयुधाभ्यासः[1] १७ गजारोहणम् १८ तुरगारोहणम् १९ तयोः शिक्षा २० मन्त्रवादः २१ यन्त्रवादः २२ रसवादः २३ खन्य-वादः २४ रसायनम् २५ विज्ञानम् २६ तर्कवादः २७ सिद्धान्तः २८ विषवादः २९ गारुडम् ३० शाकुनम् ३१ वैद्यकम् ३२ आचार्यविद्या ३३ आगमः ३४ प्रासादलक्षणम्
१५ ३५ सामुद्रिकम् ३६ स्मृतिः ३७ पुराणम् ३८ इतिहासः ३९ वेदः ४० विधिः ४१ विद्यानुवादः ४२ दर्शनसंस्कारः ४३ खेचरीकला ४४ अमरीकला ४५ इन्द्रजालम् ४६ पाताल-सिद्धिः ४७ धूर्तशम्बलम्[2] ४८ गन्धवादः ४९ वृक्षचिकित्सा ५० कृत्रिममणिकर्म ५१ सर्वकरणी ५२ वश्यकर्म[3] ५३ पणकर्म
२० ५४ चित्रकर्म ५५ काष्ठघटनम् ५६ पाषाणकर्म ५७ लेपकर्म ५८ चर्मकर्म ५९ यन्त्रकरसवती ६० काव्यम् ६१ अलङ्कारः ६२ हसितम् ६३ संस्कृतम् ६४ प्राकृतम् ६५ पैशाचिकम् ६६ अपभ्रंशम् ६७ कपटम् ६८ देशभाषा ६९ [4]धातुकर्म ७० प्रयोगोपायः[5] ७१ [6]केवलीविधिः ७२ । एताः सकलाः कलाः
२५ शिक्षितवान् । लक्षण-तर्कादिग्रन्थान् परिचितवान् । बप्पभट्टिना

---

१ ग–'भ्यासम्' । २ घ–'शम्बलु' । ३ ख–'वशाकर्म' । ४ घ–प्रतौ एषा कला नोल्लिखिता । ५ ग–' पायम् ' । ६ घ–' केवली ७१ विधिः ७२ ' ।

साक'मस्थिमज्ज'न्यायेन प्रीतिं बद्धवान् । यतः—
[1]'आरम्भगुर्वी क्षयिणी क्रमेण, ह्रस्वा पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्द्धपरार्द्धभिन्ना, छायेव मैत्री खल-सज्जनानाम् ॥१॥'[2]
कियत्यपि गते काले **यशोधर्मनृपेणा**साध्यव्याधितेन पट्टाभिषेकार्थ**माम**कुमाराकारणाय प्रधानपुरुषाः प्रेषिताः । अनिच्छन्नपि तैस्तत्र नीतः । [3]पितुर्मेलितः । पित्राऽऽलिङ्गितः सबाष्पगद्गदमुपालब्धश्च—

धिग् वृत्तवृत्तमुचितां शुचितां धिगेतां
धिक् कुन्दसुन्दरगुणग्रहणाग्रहित्वम् ।
चक्रेऽङ्कसीम्नि तव मौक्तिक ! येन वृद्धि-
र्वार्द्धेन तस्य कथमप्युपयुज्यसे यत् ? ॥ १ ॥[4]

अभिषिक्तः[5] स्वराज्ये । शिक्षितश्च प्रजापालनादौ । एतत् कृत्वा **यशोधर्मा** अर्हन्तं त्रिधा शुद्ध्या शरणं श्रयन् द्यां गतः । **आम**राजा पितुरौर्ध्वदेहिकं कृतवान् । द्विजादिदीनलोकाय वित्तं दत्तवान् । लक्षद्वितयमश्वानां हस्तिनां रथानां च प्रत्येकं चतुर्दशशती एका कोटी पदातीनां । एवं राज्यश्रीः श्री**आम**स्य न्यायरामस्य । तथापि **बप्पभट्टि**मित्रं विना सर्वं पलालपूलप्रायं मन्यते स्म सः । ततो मित्रानयनाय प्रधानपुरुषान् प्रैषीत् । तैस्तत्र गत्वा विज्ञसम् — हे श्री**बप्पभट्टे** ! **आम**राजः समुत्कण्ठयाऽऽह्वयति, आगम्यताम् । **बप्पभट्टिना** गुरूणां वदनकमलमवलोकितम् । तैः सङ्घानुमत्या गीतार्थयतिभिः समं **बप्पभट्टि**मुनिः प्रहितः । **आम**स्य पुरं 'गोपालगिरिं' प्राप । राजा सबलवाहनः सम्मुखमगात्, प्रवेशमहमकार्षीत्, सौधमानैषीत् । अवोचत च—भगवन् ! अर्धराज्यं गृहाण । तेनोक्तम्—अस्माकं निर्ग्रन्थानां सावद्येन राज्येन किं कार्यम् ? । यतः—

---

१ घ-'आपातगुर्वी' । २ उपजातिः । ३ घ--'पितुर्मिलित.' । ४ वसन्त० । ५ ख–घ--'षिक्तश्च राज्ये' ।

अनेकयोनिसम्पाता–ऽनन्तबाधाविधायिनी ।
अभिमानफलैवेयं, राज्यश्रीः साऽपि नश्वरी ॥ १ ॥[1]

ततो राज्ञाऽसौ तुङ्गधवलगृहे स्थापितः। प्रातः सभामागताय बप्पभट्टये नृपेण सिंहासनं मण्डापितम्। तेन गदितम्—उर्वीपते! आचार्यपदं विना सिंहासनं न युक्तम्। गुर्वाशातना भवेत्। ततो राज्ञा बप्पभट्टिः प्रधानसचिवैः सह गुर्वन्तिके प्रहितः। विज्ञप्तिका च दत्ता—यदि मम प्राणैः कार्यं तदा प्रसद्य सद्योऽयं महर्षिः सूरिपदे स्थाप्यः। 'योग्यं सुतं च शिष्यं च, नयन्ति गुरवः श्रियम्।' स्थापितमात्रश्चात्र शीघ्रं प्रेषणीयः। अन्यथाऽहं न भवामि। मा विलम्ब्यतामिति। अखण्डप्रयाणै[2]र्मोढेरकं प्राप्तो बप्पभट्टिः। सचिवैः सूरयो विज्ञप्ताः— प्रभो! राजविज्ञप्त्यर्थोऽनुसार्यः; उचितज्ञा हि भवादृशाः।

अथ श्रीसिद्धसेनाचार्यैर्बप्पभट्टिः सूरिपदे स्थापितः। तदङ्गे श्रीः साक्षादिव सङ्क्रामन्ती दृष्टा। रहश्च शिक्षा दत्ता— वत्स! तव राजसत्कारो भृशं भावी। ततश्च लक्ष्मीः प्रवर्त्स्यति। तत इन्द्रियजयो दुष्करः। त्वं महाब्रह्मचारी भवेः[3]।

"[4]विकारहेतौ सति विक्रियन्ते, येषां न चेतांसि त एव [5]धीराः" अनेन महाव्रतेन महत्तरः स्फुरिष्यसि।

एकादशाधिके तत्र, जाते वर्षशताष्टके।
विक्रमात् सोऽभवत् सूरिः, कृष्णचैत्राष्टमीदिने ॥१॥[6]

गुरुणा आमराजसमीपे प्रेषितः। तत्र प्राप्तः। 'गोपगिरेः' प्रासुकवनोद्देशे स्थितः। राजा अभ्यागत्य महामहेन तं पुरीं प्रावीविशत्। श्रीबप्पभट्टिसूरिणा तत्र देशना क्लेशनाशिनी दत्ता—

श्रीरियं प्रायशः पुंसा–मुपस्कारैककारणम्।
तामुपस्कुर्वते ये तु, रत्नसूस्तैरसौ रसा ॥ १ ॥[7]

---

१ अनुष्टुप्। २ ग-'याणकैर्मोढेरक'। ३ क–'भव'। ४ कुमारसम्भवे (स. १, श्लो. ५९)। ५ ग–वीरा.। ६-७ अनुष्टुप्।

आमेन गुरूपदेशादेकोत्तरशतहस्तप्रमाणः[1] प्रासादः कारयामासे 'गोपगिरौ'। अष्टादशभारप्रमाणं श्रीवर्धमानबिम्बं तत्र निवेशयाम्बभूवे। प्रतिष्ठा विधापयाञ्चक्रे। तत्र चैत्ये मूलमण्डपः सपादलक्षेण सौवर्णटङ्ककैर्निष्पन्न इति वृद्धाः[2] प्राहुः। आमः कुञ्जरारूढः [3]सर्वर्द्ध्या चैत्यवन्दनाय याति। मिथ्यादृशां दृशौ सैन्धवेन पूर्येते, सम्यग् दृशां त्वमृतेनेव। एवं प्रभावना। प्रातर्नृपो [4]मौलमनर्घ्यं स्वं सिंहासनं सूरये निवेशापयति। तद् दृष्ट्वा विप्रैः क्रुधा ज्वलितैर्भूपो विज्ञप्तः—देव! श्वेताम्बरा अमी शूद्राः। एभ्यः सिंहासनं किम्? अथास्तां तत्। परं [5]ह्रस्वीयो भवतु, न महत्। मुहुर्मुहुस्तैरित्थं विज्ञप्त्या कदर्थ्यमानः पार्थिवो मौलसिंहासनं कोशगं कारयित्वाऽन्यल्लघ्वारूरुपत्। प्रत्यूषे सूरीन्द्रेण तद् दृष्ट्वा रुषेनेव राज्ञोऽग्रे पठितम्—

मर्दय मानमतङ्गजदर्पं, विनयशरीरविनाशनसर्पम्।
क्षीणो दर्पाद् दशवदनोऽपि, यस्य न तुल्यो भुवने कोऽपि ॥१॥[6]

इदं श्रुत्वा राज्ञा ह्रीणेन [7]सदा भूयो मूलसिंहासनमनुज्ञातम्। अपराधः क्षमितः। एकदा सपादकोटी हेम्नां दत्ता गुरुभ्यः। तैर्निरीहैः सा जीर्णोद्धारे ऋद्धियुक्तश्रावकपार्श्वाद् व्ययिता। अन्यदा शुद्धान्ते प्रम्लानवदनां वल्लभां दृष्ट्वा प्रभोः पुरो गाथार्द्धं राजाऽऽह—

[8]अज्ज वि सा परितप्पइ, कमलमुही अत्तणो पमाएण।

समस्येयम्। अथ प्रभुः स्माह—

[9]पढमविबुद्धेण तए, जीसे पच्छाइयं अंग ॥ १ ॥[10]

राजा आत्मसवादाच्चमत्कृतः।

अन्यदा प्रियां पदे पदे मन्द मन्द सञ्चरन्ती दृष्ट्वा गाथार्द्धं राजा जगाद—

---

१ क–'हस्तशत०'। २ ग–'बुधाः'। ३ घ-'सर्वध्या'। ४ क-ख-'मूलम०'। ५ क ख–'ह्रसीयो भवतु'। ६ पादकुलकम्। ७ क-ख- 'तदा'।

८-९ छाया—अद्यापि सा परितपति कमलमुखी आत्मनः प्रमादेन।
प्रथमविबुद्धेन त्वया यस्याः प्रच्छादितमङ्गम् ॥ १० आर्या।

'बाला चंकमंती पए पए कीस कुणइ मुहभंगं ? ।

सूरिराह—

नूणं रमणपएसे मेहलया छिवइ नहपंति ॥ १ ॥[4]

इदं श्रुत्वा राजा मुखं निश्वासहतदर्पणसमं दध्रे। अमी मदन्तः-
५ पुरे कृतविप्लवा इति धिया । तच्चाचार्यैः क्षणार्धेनावगतं चिन्तितं
च—अहो विद्यागुणोऽपि दोषतां गतः ।

जलधेरपि कल्लोला—श्चापलानि कपेरपि ।
शक्यन्ते यत्नतो रोद्धुं, न पुनः प्रभुचेतसः ॥ १ ॥[5]

रात्रौ सूरिः सङ्घमनापृच्छ्य राजद्वारकपाटसम्पुटतटे काव्यमेकं
१० लिखित्वा पुराद् बहिर्ययौ । तद्यथा—

यामः स्वस्ति तवास्तु रोहिणगिरे ! मत्तः स्थितिप्रच्युता
वर्तिष्यन्त इमे कथं कथमिति स्वप्नेऽपि मैवं कृथाः ।
श्रीमंस्ते मणयो वयं यदि भवल्लब्धप्रतिष्ठास्तदा
ते शृङ्गारपरायणाः क्षितिभुजो मौलौ करिष्यन्ति नः ॥ १ ॥[6]
१५ अस्मान् विचित्रवपुषश्चिरपृष्ठलग्नान्
किंवा विमुञ्चसि विभो ! यदि वा विमुञ्च ।
हा हन्त ! केकिवर ! हानिरियं तवैव
भूपालमूर्द्धनि पुनर्भविता स्थितिर्नः ॥ २ ॥[8]

दिनैः कतिपयै'गौड'देशान्तर्विहरन् 'लक्षणावती'नामायाः पुरो
२० वहिरारामे समवासार्षीत् ।

---

१-२ छाया—बाला चङ्क्राम्यन्ती पदे पदे कुतः कुरुते मुखभङ्गम् ? ।
नूनं रमणप्रदेशे मेखलया स्पृश्यते नखपङ्क्तिः ॥
३ गुह्यभागे । ४ आर्या । ५ अनुष्टुप् । ६ शार्दूल० । ७ ग-पुस्तके इदं पद्यमधिकं विद्यते, एतदपि—
ह(हं)म जिहिं गय तिहिं गया महिमंडणा हवंति ।
छेहु तांइ सरोवरह ज हंसे मुचंति ॥ ३ ॥
परन्तु प्रक्षिप्तमिदमिति प्रतिभाति, उत्तरत्र तद्दर्शनात् । ८ वसन्त० । ९ ग-'नगर्याः'।

तत्र पुरे धर्मो नाम राजा। स च गुणज्ञः। तस्य सभायां वाक्पति-
नामा कविराजोऽस्ति । तेन सूरीणामागमनं लोकादवगतम्।
ज्ञापितश्च राज्ञा। राज्ञा प्रवेशमहः कारितः। पूर्मध्ये सौधोपान्ते
गुरुस्तुङ्गगृहे स्थापितः। राजा नित्यं वन्दते। कवयो जिता रञ्जि-
ताश्च। प्रभावना प्रैधते स्म। यशश्च कुन्दशुभ्रम्। [1]राजा प्रोचे— ५

अदृष्टे दर्शनोत्कण्ठा, दृष्टे विरहभीरुता।
दृष्टेनाप्यदृष्टेन, भवता नाप्यते सुखम्॥ १॥[2]

निर्बन्धे सूरिराह—आमश्चेत् स्वयमायास्यति तदा वयं यास्यामः,
नान्यथा। इति प्रतिज्ञाय स्थापिताः पुण्यलाभं कुर्वन्ति।

इतश्च यदा बप्पभट्टिः कृतविहारः प्रातः श्रीआमपार्श्वं नायात- १०
स्तदा तेन सर्वत्रावलोकितो न लब्धः। जातो विलक्षः। 'यामः
स्वस्ति तवास्तु' इत्यादि [3]काव्यानि दृष्टानि। अक्षराण्युपलक्षितानि।
ध्रुवं स मां मुक्त्वा क्वापि गत एवेति निर्णीतम्।

अन्यदा बहिर्गतेन राज्ञा महाभुजङ्गमो दृष्टः। तं मुखे धृत्वा
वाससाऽऽच्छाद्य सौधं गतः। कविवृन्दाय समस्यामर्पितवान्— १५

शस्त्रं शास्त्रं कृषिर्विद्या, अन्यो यो येन जीवति।

इति। पूरिता सर्वैरपि। न तु नृपश्चमच्चकार हृदयाभिप्रायाकथ-
नात्। तदा बप्पभट्टिं बाढं स्मृतवान्। सा हृदयसंवादिनी गीस्तत्रैव।
अथ स पटहमवीवदत्। तत्रेदमजूघुषत्— यो मम हृद्गतां समस्यां
पूरयति तस्मै [4]हैमटङ्कलक्षं ददामि। तदा 'गोपगिरी'यो द्यूतकारः २०
कश्चिद् 'गौड'देशं गतः। स बप्पभट्टिसूरीणामग्रे तत् समस्या-
पदद्वयं कथितवान्। सूरिणा पश्चार्द्धं पेठे—

सुगृहीतं च कर्तव्यं, कृष्णसर्पमुखं यथा॥१॥[5]

इति। स हि भगवान् [6]षड्विकृतित्यागी सिद्धसारस्वतो गगन-
गमनशक्त्या विविधतीर्थवन्दनशक्तियुक्तस्तस्य कियदेतत्?। स द्यूत- २५

---

१ ग-पुस्तके 'राजा० कुर्वन्ति' एतदधिकम्। २ अनुष्टुप्। ३ ख--'काव्यं दृष्टम्'।
४ ग-'हेम०'। ५ अनुष्टुप्। ६ दुग्ध-घृत-दधि-तैल-गुड-पक्वान्नेति षड् विकृतयः।

कारस्तत्पादद्वय 'गोपगिरौ' श्रीआमाग्रे निवेदितवान् । राजा दध्वान--अहो सुघटितत्वमर्थस्य ! । तं पप्रच्छ-केन क्वेयं पूरिता समस्या ? । द्यूतकृदाह--'लक्षणावत्यां बप्पभट्टिसूरिणा ज्ञानपू(भू)-रिणा तस्योचितं दानं चक्रे ।

५ अन्यदा राजा नगर्या बहिर्ययौ । न्यग्रोधद्रुमाधः पान्थं मृतं ददर्श । शाखायां लम्बमानं करपत्रकमेक विप्रुषां व्यूहं स्रवन्तं गाथार्द्धं च विशिष्टग्राणि लिखितं कठिन्या[1] (खटिन्या?) अपश्यत् ।

तइया मह निग्गमणे पियाइ थोरंसुएहिं जं रुण्णं ।[2]

तदपि समस्यापादद्वयं राज्ञा कविभ्यः कथितम् । न केनापि सुष्ठु १० पूरितम् । राजा चिन्तयति स्म—

वेश्यानामिव विद्यानां, मुखं कैः कैर्न चुम्बितम् ? ।
हृदयग्राहिणस्तासां[3], द्वित्रा सन्ति न सन्ति वा ॥१॥[4]

हृदयग्राही स एव मम मित्रं सूरिवरः । स एव दौरोदरिको नृपे-णोपसूरि प्रैपि । सूरिणाऽक्षिनिमेषमात्रेण पूरिता समस्या--

१५ करव(प?)त्तयबिंदूअनिवडणेण तं मज्झ संभरियं ॥ १ ॥[5][6]

तत् पुनर्द्यूतकाराच्छ्रुत्वा राज्ञा हृष्टेनोत्कण्ठितेन सूरेराह्वनाय वाग्मिनः सचिवाः प्रस्थापिताः । उपालम्भसहिता विज्ञप्तिश्च ददे । प्राप्तास्ते तत्र । दृष्टास्तैस्तत्र सूरयः । उपलक्ष्य वन्दिताः । राज-विज्ञप्तिर्दत्ता । तत्र लिखितं वाचितं गुरुभिः--

२० न गङ्गा गाङ्गेयं सुयुवतिकपोलस्थलगतं
न वा शुक्तिं मुक्तामणिरुरसिजस्पर्शरसिकः ।
न कोटीरारूढः स्मरति च सवित्रीं मणिचय-
स्ततो मन्ये विश्वं स्वसुखनिरतं स्नेहविरतम् ॥१॥[7]

---

१ क-ख-'क(का)ठिन्यात्' ।
२ छाया—तदा मम निर्गमने प्रियया स्थो(स्थू)राश्रुभिर्यद् रुदितम् ।
३ ग-'स्तेपां' । ४ अनुष्टुप् ।
५ छाया—करपत्रकबिन्दुकनिपतनेन तत् मया स्मृतम् । ६ आर्या । ७ शिखरिणी ।

छायाकारिणि[2] सिरि धरिय पंचवि[3] भूमि पडंति।
पत्तहं[4] इहु पत्तत्तणउं तरुअर काइं करंति? ॥ २ ॥[5]

सचिवा अप्यूचुः—स्वामिन्! आमराजो निर्व्याजप्रीतिर्विज्ञ(ज्ञा?)-पयते(ति?)— शीघ्रमागत्याऽयं देशो वसन्तात्रतसितोद्यानलीलां लम्भनीयः। भवद्वागूरसलुब्धानामस्माकमितरकविवाग् न रोचते। ५

कथासु ये लब्धरसाः कवीनां
ते नानुरज्यन्ति कथान्तरेषु।
न[7] गन्धिपर्णप्रणयाश्चरन्ति[8]
कस्तूरिकागन्धमृगास्तृणेषु ॥१॥[9]

तदाकर्ण्य लेखं दत्त्वा सूरिभिः सचिवाः प्रोचिरे—श्रीआमो गीष्पति- १० समप्रज्ञ एवं भापणीयः——

अस्माभिर्यदि वः कार्यं, तदा धर्मस्य भूपतेः।
सभायां छन्नमागम्य, स्वयमापृच्छ्यतां द्रुतम् ॥१॥[10]

अस्माकमिति हि प्रतिज्ञाऽऽस्ते धर्मेण राज्ञा सह—स्वयमामः समेत्य त्वत्समक्षं यदाऽस्मानाकारयति किल तदा तत्र यामः, नान्य- १५ थेति। प्रतिज्ञालोपश्च नोचितः सत्यवादिनां प्रतिष्ठावताम्। ततो मन्त्रिण उप'कन्यकुब्जे'शमाजग्मुः। सूरीणामुक्तमुक्त[11] लेखश्चादर्शि। तत्र लिखित यथा——

[12]'विंझेण विणा वि गया, नरिंदभवणेसु हुंति गारविया।
विंझो न होइ वझो, गएहिं बहुएहिं वि गएहि ॥१॥[13]　　२०

---

१ छाया—छायाकारणाच्छिरसि धृतानि प्रत्युत भूमौ पतन्ति।
पत्राणामेतत् पात्रत्वं (पत्रत्व) तरुवराः किं कुर्वन्ति? ॥

२ घ--'कारिणी'। ३ घ--'पञ्चिवि'। ४ ग-'पहुपत्त०'। ५ एतच्छन्दोनाम न ज्ञायते। ६ ख--'भवद्वाक्यरस०'। ७ घ--'निर्ग्रन्थिमुरुमांश(?)पर्णं०'। ८ क-ख-'ग्रन्थि०'। ९ उपजातिः। १० अनुष्टुप्। ११ ख--घ--'सूरीणा तदुक्त०'।

१२ छाया—विन्ध्येन विनाऽपि गजा नरेन्द्रभवनेषु भवन्ति गौरविताः।
विन्ध्यो न भवति वन्ध्यो गतेषु बहुकेष्वपि गजेषु ॥

१३ अतःपर दशमपर्यन्तानां पद्याना छन्द आर्या।

माणसरहिएहिं सुहाइं जह न लब्भंति रायहंसेहिं ।
तह तस्स वि तेहिं विणा, तीरुच्छंगा न सोहंति ॥२॥
परिसेसियहंसउलं, पि माणसं माणसं न संदेहो ।
अन्नत्थ वि जत्थ गया, हंसा वि बया न भन्नंति ॥३॥
५ हंसा जहिं गया तहिं, गया महीमंडणा हवंति ।
छेहउ ताहं महासर–हं जे हंसेहिं मुच्चंति ॥४॥
मलओ सचंदणु च्चिय, नइमुहहीरंतचंदणदुमोहो ।
पब्भट्ठं पि हु मलया–उ चंदण जायइ महग्घं ॥५॥
अग्घायंति महुयरा, विमुक्ककमलायरा वि मयरंदं ।
१० कमलायरो वि दिट्ठो, सुओ वि किं महुयरविहुणो ? ॥६॥
इक्केण कुच्छुहेणं, विणा वि रयणायरु च्चिय समुद्दो ।
कुच्छुहरयणं पि उरे जस्स ठियं सो वि हु महग्घो ॥७॥

---

१ छाया—मानसरहितैः सुखानि यथा न लभ्यन्ते राजहंसैः ।
तथा तस्यापि तेन विना तीरोत्सङ्गा न शोभन्ते ॥

२ ख–'माणसरएहिएहिं' । ३ घ–'निरु०' ।

४ छाया— परिशेषितहंसकुलमपि मानसं मानसं न सन्देहः ।
अन्यत्रापि यत्र (कुत्र) गता हंसा अपि बका न भण्यन्ते ॥
हंसा यत्र गतास्तत्र गता महीमण्डना भवन्ति ।
विरहस्तेषां महासरसां यानि हंसैर्मुच्यन्ते ॥

५ ख–'नयं' । ६ ग–'जिगय(?) महिमडणा' ।

७-८ छाया—मलयः सचन्दन एव नदीमुखह्रियमाणचन्दनद्रुमौघः ।
प्रभ्रष्टमपि खलु मलयात् चन्दन जायते महार्घम् ॥
आजिघ्रन्ति मधुकरा विमुक्तकमलाकरा अपि मकरन्दम् ।
कमलाकरोऽपि दृष्टः श्रुतोऽपि किं मधुकरविहीनः ? ॥

९ घ–'मुहुयरा०', ग–'महुयश(?)' ।

१० छाया—एकेन कौस्तुभेन विनाऽपि रत्नाकर एव समुद्रः ।
कौस्तुभरत्नमप्युरसि यस्य स्थितं सोऽपि खलु महार्घः ॥

११ ग–'कन्थु०' ।

पंइं मुक्काण वि तरुवर! फिट्टइ पत्तत्तणं न पत्ताणं ।
तुह पुणच्छाया जइ होइ कहवि ता तेहिं पत्तेहिं ॥८॥
जे केवि पहू महिमंडलंमि ते [2]उच्छुदंडसारिच्छा ।
सरसा जडाण मज्झे विरसा पत्तेसु दीसंति ॥९॥
संपइ पहुणो पहुणो पहुत्तण किं चिरंतणपहूणं ? । ५
दोसगुणा गुणदोसा एहिं कया न हु कया तेहिं ॥१०॥

एतद् वाचयित्वा सोत्कण्ठं नृपः सारकतिपयपुरुषवृत्तोऽचालीत् । 'गोदावरी'तीरग्राममेकमगमत् । तत्र खण्डदेवकुले वासमकार्षीत् । देवकुलाधिष्ठात्री व्यन्तरी सौभाग्यमोहिता गङ्गेव भरतं तं भेजे । प्रभाते करभमारुह्य तां देवीमापृच्छ्य प्रभुपादान्तं प्राप । गाथार्धं १० पपाठ—

[3]अज्ज वि सा सुमरिज्जइ, को नेहो एगराईए ? ।

सूरीन्द्रः प्राह—

[4]'गोदा'नईइ तीरे, सुन्नउले जंसि वीसमिओ ॥ १ ॥[5]

इति । अन्योन्यं गाढमालिलिङ्गतुरुभौ । तत आम आह स्म— १५

अद्य मे सफला प्रीति–रद्य मे सफला रतिः ।
अद्य मे सफलं जन्म, अद्य मे सफलं [6]कुलम् ॥ १ ॥[7]

रात्रौ इष्टा गोष्ठी च ववृते मधुमधुरा । ततः प्रभाते सूरिर्धर्म-नृपास्थानमगमत् । आमनृपोऽपि प्रधानैः स्वैः पुरुषैः सह

---

१छाया—त्वया मुक्तानामपि तरुवर! भ्रश्यति पत्रत्व (पात्रत्वं) न पत्राणाम् ।
तव पुनश्छाया यदि भवति कथमपि तर्हि तैः पत्रैः ? ॥
ये केऽपि प्रभवो महीमण्डले ते इक्षुदण्डसदृशाः ।
सरसा जटानां (जडानां) मध्ये विरसाः पत्रेषु (पात्रेषु) दृश्यन्ते ।
सम्प्रति प्रभवः प्रभवः प्रभुत्वं किं चिरन्तनप्रभूणाम्? ।
दोषगुणा गुणदोषा एभिः कृता न खलु कृतस्तैः॥ २घ-'उच्छदंड०'

३ छाया- अद्यापि सा स्मर्यते कः स्नेह एकरात्र्या ? ।
गोदा(वरी)नद्यास्तीरे शून्य(देव)कुले यदसि विश्रमितः ॥

४ ग-'गोदानईय०' । ५आर्या । ६ क-ख-'फलम्'। ७ अनुष्टुप् ।

स्थगीधरो भूत्वाऽऽगच्छत् । आम आवउ[1] इति ब्रुवाणैः सूरिभिर्धर्माय **आमस्य** विशिष्टपुरुषा दर्शिताः । एते **आमनृपनराः**[2] किलास्मानाह्वातुमायाता इति । **धर्मेण** राज्ञा पृष्टं विशिष्टजनपार्श्वे— भो **आम**प्रधाननराः ! स भवतां स्वामी कीदृशरूपः ? । तैर्निगदितम्—

५ यादृगयं स्थगीधरस्तादृगास्ति । प्रथमं मातुलिङ्गं करे[3] धारयित्वा **आम** आनीतोऽस्ति । सूरिभिः पृष्टम्— भो स्थगीधर ! तव करे किमेतत् ? । स्थगीधरीभूतेन श्री**आमे**नोक्तम्— बीजउरा[4] इति । क्षणार्धेन वार्त्तामध्ये सूरिभिः सूक्तमवतारितम्—

[5]तत्तीसीयली मेलावा केहा धण उत्तावली[6] पिउ मंदसणेहा[7] ।

१० विरहि माणुसु जो मरइ[8] तसु कवण निहोरा कन्निपवित्तडी[9] जणु जाणइ दोरा ॥ १ ॥

[10]इति । गुरुणा कथितम्—आम आवउ, आम आवउ । **धर्मेण** राज्ञा तुंअरिछोडं[11] दृष्ट्वा पृष्टम्— अहो स्थगीधर ! किमिदम् ? । तेनोक्तम्— तू अरि, तवारीत्यर्थः । इत्यादि गोष्ठ्यां वर्तमानायां

१५ शनैः शनैः श्री**आम**राजश्चिद्रूपो[12] मेलापकान्निसृत्य पुराद् बहिः स्थाने स्थाने रथापितैर्वाहनैः कियतीमपि भूमिमत्यक्राम्यत्[13] । तावता सूरीश्वरो विलम्बाय प्रहरद्वयं कामपि कथामचीकथत् । रसावतारः स कोऽपि जातो यो **रम्भा-तिलोत्तमा**प्रेक्षणीयकेऽपि

---

१ अत्रागम्यताम्, पक्षान्तरे, आम ! आगम्यताम् । २ क-'आमनृपनराः' । ३ घ- 'करेण' । ४ बीजपूरकम्, पक्षान्तरे द्वितीयो राजा ।

५ एतत्पद्यस्य अष्टोत्तर शतमर्था व्याख्याताः श्रीबप्पभट्टिसूरिभिः, परन्त्वधुना तु श्रीप्रभावकचरित्रे प्रदर्शितमर्थचतुष्टयमेवोपलभ्यते ज्ञायते च ।

६ घ-'ह धणउत्ताव[णी] ली प्रियमंद०' । ७ ग-'धणि उतावली' । ८ ग-'विरह जे, माणुस मरइ', घ-'विरह माणुसु जइ मरइ तणु' । ९ख-'कवणु नहोरा कर्णपवि०,' घ-'कवणु निहोरा किन्नपवि०' । १० 'इति' इत्यारभ्य 'तवारीत्यर्थः' इति पर्यन्तमधिकं दृश्यते ग-पुस्तके । ११ 'तुंअर'रोपम् । १२ ग-'राजश्चिद्रुपमेलापक०' । १३ ख-'भवत्य(?) अत्यक्रामत्', घ-'भुवं अतिक्रामत्' ।

दुर्लभः। **आमो** राजाऽमूल्यं कङ्कणं ग्रहणके मुक्त्वा वेश्यागृहे उषित आसीत्। सा तु 'लक्षणावती'पतेर्वारस्त्री। एकं कङ्कणं **आमो** राजद्वारे मुञ्चन्नगात्। अपराह्णे राज्ञः पार्श्वाद् **बप्पभट्टि**-सूरिभिर्मुत्कलापितम्— देव! 'गोपगिरौ' **आमपार्श्वे** यामः, अनुज्ञा दीयताम्। **धर्मेण** भणितम्—भवतामपि वाणी विघटते? ५
भवद्भिर्भणितमभूत्—यदा तव दृष्टौ **आमः** समेत्यास्मानाह्वयति तदा यामः, नार्वाक्; तत् किं विस्मृतम्? जिह्वे किं वो द्वे स्तः?। आचार्या जगदुः—श्री**धर्म**देव! मम प्रतिज्ञा पूर्णा। राजाऽऽह —कथम्?। सूरिर्वदति— [1]'**आम**राजोऽत्र स्वयमागतस्तव दृष्टौ?। राजाऽऽह—कथं ज्ञायते?। सूरिः—यदा भवद्भिः १०
पृष्टं भवतां स्वामी कीदृशः विशिष्टैस्तदा भणितम्—स्थगिका-धररूपः, तथा, 'बीजउरा' शब्दोऽपि विमृश्यताम्। 'दोरो'-शब्दोऽपि यो मयोक्तोऽभूत्। तस्मात् प्रतिज्ञा पूर्णा मे। अत्रान्तरे केनापि राजद्वाराद् **आम**कङ्कणं [3]**धर्म**नृपहस्ते दत्तं **आम**नामाङ्कितम्। द्वितीयं वेश्यया दत्तम्। तद् दृष्ट्वा नष्टसर्वस्व- १५
स्तद्वन इव **धर्मः** शुशोच— धिग् मां यन्मया शत्रुः स्वगृहमायातो नार्चितः, न च साधितः। **धर्मेण** मुत्कलिताः सूरयः पुरः क्वापि स्थितेन**आमे**न सह जग्मुः। मार्गे गच्छता **आमे**न पुलिन्द एको जलाशयमध्ये जलं छगलवन्मुखेन पिबन् दृष्टः। **आम**राजेन सूरीणामग्रे एत्योक्तम्— २०

[4]'पसु जेम पुलिंदउ पउ पिअइ [5]'पंथिअ कवणिण कारणिण।

सूरिभिरभाणि—

[6]'कर बे वि करंबिय कज्जलिणमुद्धहअंसुनिवारणिण ॥१॥

---

१ ग-'आमो राजाऽत्र'। २ 'दोराशब्दोऽपि विमृश्यताम्' इत्यधिकः ख-पाठः।
३ ग--'नृपधर्महस्ते'।
४ छाया—पशुरिव पुलिन्दः पयः पिबति पथिकः केनापि कारणेन। ५ ग-'पथिउ'।
६ छाया— करौ द्वावपि करम्बितौ कज्जलेन उद्वहदश्रुनिवारयतः।

राज्ञा प्रत्ययार्थं स समाकार्य पृष्टः । तेनोक्तम्—सत्यं सूरिवचः ।
हस्तौ दर्शितौ । राजा तेन वाक्संवादेन प्रीतः । 'अज्ज वि सा
परितप्पइ' इत्यादि तदुक्तं सर्वं सारस्वतविलसितमिति निरवैषीत् ।
शीघ्रशीघ्रं 'गोपालगिरिं' गतः । पताकातोरणमञ्चप्रतिमञ्चादिमहा-
५ स्तत्रासुः । दिवसाः कत्यप्यतिक्रान्ताः । ततः श्री**सिद्धसेन**सूरयो
वार्धकेन पीडिता अनशनं ग्रहीतुकामाः श्री**बप्पभट्टि**सूरीणामा-
कारणाय गीतार्थमुनियुगलं प्रैषिर्षुः[1] । ते तद् गुरोर्लेखमदीदृशन् ।
तत्र लिखितं यथा—

[2]अध्यापितोऽसि पदवीमधिरोपितोऽसि
१० तत् किञ्चनापि कुरु वत्सक! **बप्पभट्टे**! ।
प्रायोपवेशनरथे विनिवेश्य येन
सम्प्रेषयस्यमरधाम नितान्तमस्मान् ॥१॥[3]

तद् दृष्ट्वा **आम**भूपतिमापृच्छ्य 'मोढेरक'पुरं **ब्रह्मशान्ति**स्था-
पित**वीर**जिनमहोत्सवाढ्यं प्रापुस्ते । गुरून् ववन्दिरे । गुरवोऽपि
१५ तान् बाढमालिङ्ग्यालापिषुः । वत्स! गाढमुत्कण्ठितमस्माकं हृदयम् ।
मुखकमलकमपि ते विस्मृतम् । राजानुगमनं तेऽस्माकं दुःखाया-
सीत् । कारय साधनाम् । अनृणो भव । ततोऽन्त्याराधना-चतुः-
शरणगमन-दुष्कृतगर्हा-सुकृतानुमोदन-तीर्थमालावन्दनादिका विधि-
ना विधापिता । गुरवो देवलोकललनानयनत्रिभागपात्रत्व-
२० मानञ्चुः । शोक उच्छलितः । ततो **बप्पभट्टिः** श्रीमद्**गोविन्द**-
सूरये श्री**नन्न**सूरये च गच्छभारं समर्प्य श्री**आम**पार्श्वमा[4]गतः ।
पूर्ववत् समस्यादिगोष्ठ्यः स्फुरन्ति ।

एकदा सूरिर्नृपसभायां चिरं पुस्तकाक्षरदत्तदृक् तस्थौ । तत्रैका
नर्तकी नृत्यन्ती आसीद् रूपदासीकृताप्सराः । सूरिर्दृग्नीलिनि-
२५ वारणाय तस्याः शुकपिच्छनीलवर्णायां नीलकञ्चुलिकायां दृशं

---

१ ख-'प्रैषिष्ट' । २ क-'अध्यापितोऽपि' । ३ वसन्त० । ४ ग-'आगमन्' ।

निवेशयामास । आमस्तद् दृष्ट्वा मनसि पपाठ—

[2]सिद्धंततत्तपारं–गयाण जोगीण जोगजुत्ताणं ।
जइ ताणं पि मयच्छी, मणंमि ता तच्चिय पमाणं ॥१॥[3]

आमो रात्रौ पुंवेषां तां नर्तकीं सूरिवसतौ प्रैषीत् । तया सूरीणां विश्रामणाऽऽरब्धा । करस्पर्शेन ज्ञाता युवतिः सूरिणाऽभिहिता सा–का त्वम्? । कस्मादिहागता? । अस्मासु ब्रह्मव्रतनिविडेषु वराकि! भवत्याः कोऽवकाशः? । वात्याभिर्न चलति काञ्चनाचलः । तयोक्तम्–भवद्भ्य उपदेष्टुमागता— 5

राज्ये सारं वसुधा, वसुधायामपि पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे, वराङ्गनाऽनङ्गसर्वस्वम् ॥१॥[5] 10

इति । किञ्च—

प्रियादर्शनमेवास्तु, किमन्यैर्दर्शनान्तरैः? ।
प्राप्यते येन निर्वाणं, सरागेणापि चेतसा ॥२॥[6]

श्रीआमेन प्रेषिताऽहं प्राणवल्लभा भवतां शुश्रूषार्थम् । ततः सूरिशक्रो वदति स्म– अस्माकं ज्ञानदृक्प्रपातदृष्टद्रष्टव्यानां नैव व्यामोहाय प्रगल्भसे । 15

मलमूत्रादिपात्रेषु, गात्रेषु मृगचक्षुषाम् ।
रतिं करोति को नाम, सुधीर्वर्चोगृहेष्विव? ॥१॥[7]

साऽपि निर्विकारं सूरिवरं निश्चित्य ध्वनच्चेताः प्रातर्नृपतिसमीपं गता । पृच्छते राज्ञे रात्रीयः सूरिवृत्तान्तः सम्यक् कथितस्तया– पाषाणघटित इव तव गुरुः; नवनीतपिण्डमयः शेषो लोकः । यावन्तः कूटप्रपञ्चा हावभाव-कटाक्ष-भुजाक्षेप-चुम्बन- 20

---

१ घ-'स्तथा' ।
२ छाया— सिद्धान्ततत्त्वपारङ्गतानां योगिनां योगयुक्तानाम् ।
यदि तेषामपि मृगाक्षी मनसि तर्हि तदेव प्रमाणम् ॥
३ आर्या । ४ ख–'वराङ्गनानां सर्व०' । ५ आर्या । ६–७ अनुष्टुप् । ८ क-ख-'वराको' ।

[1]नख-दन्तक्षतादिविलासास्ते सर्वे आजन्मशिक्षितास्तत्र प्रयुक्ताः। पुनास्तिलतुषत्रिभागमात्रमपि मनोऽस्य नाचालीत्। अनुराग-बलात्कार-पूत्कार-भीदर्शन-हत्यादानादिबिभीषिकाभिरपि नाक्षुभत्। तदेष मन्ये महाव्रजमयो न देवकन्याभिर्न विद्याधरीभिर्न नागाङ्गनाभि-
५ श्चाल्यते; मानुषीणां तु का कथा ?। अस्मिन् सूरेर्धर्मस्थैर्ये श्रुते नृपो विस्मयानन्दाभ्यां कन्दम्बमुकुलस्थूलरोमाञ्चकञ्चुकितगात्रः संवृत्तः। दध्यौ च गुरुं ध्यानप्रत्यक्षं कृत्वा—

न्युञ्छने यामि वाक्यानां, दृशोर्याम्यवतारणे।
बलिः क्रियेऽहं[2] सौहार्द-हृद्याय हृदयाय ते ॥१॥[3]

१० प्रातर्गुरवः समागुः। राजा [4]ह्रीणो न वदति किञ्चित्। सूरिभिर्भणितम्—राजन्! मा लज्जिष्ठाः; महर्षीणां दूषणभूषणान्वेषणं राज्ञा कार्यम्, न दोपः। राज्ञोक्तम्— अलमतीतवृत्तान्तचर्चया। एतदहमुत्तम्भितभुजो ब्रुवे युष्मान् ब्रह्मधनानवलोक्य—

धन्यास्त एव धवलायतलोचनानां[5]
१५ तारुण्यदर्पघनपीनपयोधराणाम्।
क्षामोदरोपरिलसत्त्रिवलीलतानां
दृष्ट्वाऽऽकृतिं विकृतिमेति मनो न येषाम्॥ १ ॥[6]

इत्युक्त्वा दण्डप्रणामेन प्रणनाम श्रीआमः।

अन्येद्यू राजा राजपथेन सञ्चरमाणो[7] हालिकप्रियां एरण्डबृहत्पत्र-
२० संवृतस्तनविस्तरां एरण्डपत्राणि विचिन्वानां गृहपाश्चात्यभागे दृष्ट्वा गाथार्द्धं योजितवान्—-

[8]व(त ?)इ वि वरनिग्गयदलो एरंडो सोहइ व्व तरुणाणं।

---

१ ख-'नखरदन्ताक्षता०'। २ क-'क्रयेऽहं'। ३ अनुष्टुप्। ४ ख-'हृणो'। ५ क-'तरलायत०'। ६ वसन्त०। ७ ग-'सत्तरमाणो'।
८ छाया— तथापि वरनिर्गतदल एरण्डः शोभत एव तरूणाम्।

तत् तु सूरीणां पुरः समस्यात्वेन समर्पितवान् । सूरय ऊचुः—

'इत्थ घरे हलियवहू ईंदहमित्तत्थणी वसइ ॥ १ ॥'

राजा विस्मितः । अहो सारं सारस्वतम् ! ।

अन्यदा सायं प्रोपितभर्तृकां वासभवनं यान्तीं वक्रग्रीवां दीपकरां ददर्श । गाथार्द्धं चोच्चैः सूर्यग्रे पपाठ— ५

"दिज्झइ वंकग्गीवा–इ दीवओ पहियजायाए ।

सूरिर्गाथापूर्वार्द्धमुवाच—

"पियसंभरणपलुट्टं–तअंसुधारानिवायभीयाए ॥ २ ॥"

इति । सूरि-भूपौ सुखेन कालं गमयतो धर्मपरौ ।

अन्यदा धर्मनृपेण आमनृपस्य पार्श्वे दूतः प्रहितः । एत्या- १० वोचत्—राजन्! तव विचक्षणतया धर्मनृपः सन्तुष्टः । पुनः स आह— भवद्भिर्वयं छलिताः । यतो भवद्भ्यो गृहमागतेभ्यो नास्माभिर्महानल्पोऽपि कोऽपि सत्कारः कृतः । अधुना शृणु— अस्मद्राज्ये वर्धनकुञ्जरो नाम महावादी बौद्धदर्शनी विदेशादाग- तोऽस्ति । स वादं जिघृक्षुः । यः कोऽपि वो राज्ये वादी भवति १५ स आनीयताम् । अस्माकं भवद्भिः सह चिरन्तनं वैरम् । यः कोऽ- पि वादी विजयी भविष्यति तत्प्रभुरपरस्य राज्यं ग्रहिष्यति । मम वादिना यदा जितं तदा त्वदीयं राज्यं मया ग्राह्यम् । यदा तव वादिना जितं तदा मदीयं राज्यं त्वया ग्राह्यम् । अयं पणः । वाग्युद्धमेवास्तु । किं मानवकदर्थनेन ? । आमेनोक्तम्—दूत ! २० त्वया यदुक्तं तद् धर्मेण कथापितमथवा त्वया स्वतुण्डकण्डूतिमात्रे-

---

१ छाया—अत्र गृहे हालिकवधूरेतावन्मात्रस्तना वसति ।

२ घ—'इदहमिहछणी' । ३ ग—'अत्थि' । ४ आर्या । ५ ख—'भुवन' ।

६-७ छाया— दृश्यते वक्रग्रीवया दीपकः पथिकजायया ।
प्रियस्मरणप्रलुठदश्रुधारानिपातभीत्या ॥ ८ आर्या ।

९ ख—'यदि' ।

णोक्तम् ?। यदि तव प्रभुः सप्ताङ्गं[1] राज्यं वादे जिते समर्पयिष्यति मे इति सत्यं तदा वयं वादिनमादायागच्छामः[2]। दूतेनोक्तम्—कारणवशाद् युधिष्ठिरेणापि 'द्रोण'पर्वण्यसत्यं भाषितम्; मत्प्रभुस्तु कारणेऽपि न मिथ्या भाषते। आमेन दूतः प्रैषि। उक्तदिनो-
५ परि च[3] बप्पभट्टिं गृहीत्वाऽर्द्धपथे उक्तस्थाने आमोऽगमत्[4]। धर्मभूपतिरपि वर्धनकुञ्जर वादीन्द्रमादाय तत्राजगाम[5]। 'परमार'-वश्यं[6] नरेन्द्रं महाकविं वाक्पतिनामानं स्वसेवकं सहादाय समाययौ[7]। उचितप्रदेशे आवासान् दापयामास। तौ वादि-प्रतिवादिनौ पक्षप्रतिपक्षपरिग्रहेण वादमारेभेते। सभ्याः कौतुकाक्षिप्ताः
१० पश्यन्ति। द्वावप्यसामान्यप्रतिभौ। वादे षण्मासा गताः। द्वयोः कोऽपि न हारयति, न जयति। आमेन सूरयः प्रोक्ताः सायम्—राजकार्याणां प्रत्यूहः स्यात्, निर्जीयतामसौ शीघ्रम्। सूरिणा भणितम्—प्रातर्निग्रहीष्यामि[8], मा स्म वो भ्रान्तिर्भूयात्। रात्रौ सूरीश्वरेण मन्त्रशक्त्या मण्डले हारार्द्धहारमणिकुण्डल-
१५ मण्डिताङ्गी दिव्याऽङ्गरागवसना दिव्यकुसुमपरिमलवासितभुवनोदरा[9] भगवती भारती साक्षादानीता। चतुर्दशभिः काव्यैः सद्यस्कैर्दिव्यैः स्तुता। देव्योक्तम्—वत्स ! केन कारणेन स्मृता ?। सूरिवीरेण भणितम्—षण्मासा वादे लग्नाः; तथा कुरु यथा वादे निरुत्तरीभवति सः। देव्या गदितम्—वत्स ! अहमनेन
२० प्राक् सप्तभवानाराधिता। मयाऽत्र भवेऽस्मै अक्षयवचना गुटिका दत्ताऽस्ति। तत्प्रभावाच्चक्रिनिधिधनमिव नास्य वचो हीयते। सूरिणोक्तम्—त्वं देवि ! किं जैनशासनविरोधिनी येन मे जयश्रियं न दत्से ?। भारती ऊचे—वत्स ! जयोपायं ब्रुवे, त्वया वादारम्भे प्रातः सर्वे वदनशौचं काराप्याः पार्षद्याः। गण्डूषं

---

१ "स्वाम्य-ऽमात्य-सुहृत्-कोश-राष्ट्र-दुर्ग-बलानि च" इत्यमरकोशे। २ ग-'गच्छाम इति'। ३ क-'भट्टिं च'। ४ घ-'आमो [अन]गतः'। ५ घ-'तत्र जगाम'। ६ ख-'वशं'। ७ क-ख-घ-'समानिन्ये'। ८ घ-'प्रभाते नि०'। ९ घ-'लुलितभुव०'।

कुर्वतस्तस्य वदनाद् गुटिका ममेच्छया पतिष्यति[1] तदा त्वया जेष्यते, एकं तु याचे—मत्स्तुतेश्चतुर्दशकाव्यं कस्याप्यग्रे न प्रकाश्यम् । तत्पठने हि मया ध्रुवं ध्रुवं प्रत्यक्षया भाव्यम् । कियतां प्रत्यक्षा भवामि ? । क्लेशेनालम् । एवमुक्त्वा देवी विद्युज्झात्कारलीलयाऽन्तर्दधे । सूरिभिर्निशि परमाप्तः शिष्य एको **वाक्पति**राजसमीपं प्रहित्याख्यापितम्, यथा सूरयो वदन्ति—राजन् ! त्वं विद्यानिधिरस्माकं[2] 'लक्षणावती'पुरीपरिचितचरः । तदाऽवादीः—भगवन् ! निरीहा भवन्तः, कां भवद्भ्यो भक्तिं दर्शयामि ? ।" तदा वयमवोचाम—अवसरे कामपि भक्तिं कारयिष्यामः[3] । भवद्भिर्भणितम्—तथाऽस्तु । इदानीं सोऽवसरोऽत्र समायातः । **वाक्पति**ना शिष्यः पृष्टः— सूरयः किं मे समादिशन्ति ? आदिष्टं कुर्वे ध्रुवम् । शिष्यो न्यवेदयत्—राजन् ! गुरव आदिशन्ति[4]—प्रातर्**धर्मा-ऽऽम**योः सदःस्थयोः सतोस्त्वया वाच्यं यथा वदनशौचं विना **भारती** न प्रसीदति । तस्माद् वादिप्रतिवादिसभ्यसभेशाः[5] सर्वे शौचं कुर्वन्तु । एतावति कृते भवता नः सर्वः स्नेहः कृत एव । **वाक्पति**ना तदङ्गीकृतम् । शिष्येणोपगुरु गत्वा तत् तत्प्रतिज्ञातं कथितम् । तुष्टा गुरवः । प्रत्यूषे उदयति भगवति [6]गभस्तिमालिनि लाक्षालिप्त इव प्राचीमुखे राजानौ सभायामागाताम् । **वाक्पति**ना वदनशौचं सर्वे कारिताः, बौद्धवादीन्द्रोऽपि । तस्य वदनकमलाद् विगलिता गुटिका पतद्ग्रहे । **बप्पभट्टि**शिष्यैः पतद्ग्रहो जनैर्दूरे कारापितः । गुटिका सूरीन्द्रसाज्जाता । बौद्धो गुटिकाहीनः सूरिणा **पार्थे**न **कर्ण** इव दिव्यशक्तिमुक्तो निःशङ्कं वाक्पृषत्कैर्हतः । निरुत्तरीकृतः राहुग्रस्तश्चन्द्र इव, हिमानीविलुप्तरतरुखण्ड इव बाढं निस्तेजतां भेजे । तदा श्रीबप्पभट्टिर्निर्विवाद 'वादिकुञ्जरकेसरी'ति विरुदं स्वैः परैश्च

---

१ ग–'ध्रुवं प्रत्यक्ष०' । २ ख–'रस्मान्' । ३ ख–'कारापयिष्यामः' । ४ क–'आदिशन्तु' । ५ घ–'सभ्येशाः' । ६ सूर्ये ।

दत्तम् । धर्मेण सप्ताङ्ग राज्यं आमाय दत्तम् । लाहीदम् । धर्माद्धि राज्यं लभ्यते । काऽत्र चर्चा ? । आमेन गृहीतम् । तदा सूरिणा आमः प्रोक्तः—राजन् ! पुना राज्यं धर्माय देहि । महादानमिदम् ! शोभते च ते । राजस्थापनाचार्याश्च पारम्पर्येण
५ यूयम् । पूर्वं श्रीरामेण वनस्थेनापि सुग्रीव-बिभीषणौ राजीकृतौ । त्वमप्येवं युगीननृपेषु तत्तुल्यः[1] । एतद्वचनसमकालमेव आमेन गाम्भीर्यौदार्यधाम्ना धर्माय तद्राज्यं प्रत्यर्प्य[2] स धर्मः परिधापितः । स्वे मत्ताः करिणः शतं, सहस्रं तुङ्गास्तु रङ्गाः, सहस्रं सवरूथा रथाः[3], शतं वादित्राणि प्रादायिषत । स्वं स्वं स्थानं गताः सर्वे ।
१० सूरि-भूपौ यशोधवलितसप्तभुवनौ 'गोपगिरौ' श्रीमहावीरमवन्दिषाताम् । तदा सूरिकृत श्रीवीरस्य स्तवनम्— "शान्तो वेषः शमसुखफला" इत्यादि काव्यैकादशकमयमद्यापि सङ्घे पठ्यते । सङ्घेन प्रभुर्ववन्दे । तुष्टुवे च—

रवेरेवोदयः श्लाघ्यः कोऽन्येषामुदयग्रहः ? ।
१५ न तमांसि न तेजांसि, यस्मिन्नभ्युदिते सति[4] ॥ १ ॥[5]

अन्यदा स्वपरसमयसूक्तैः प्रबोध्य राजा प्रभुभिर्मद्यमांसादिसप्तव्यसन[6]नियमं कारितः[7] । सम्यक्त्वमूलैकादशव्रत[8]निरतश्च श्रावकः कृतः । द्वादशं व्रतं त्वतिथिसंविभागरूपं प्रथमचरमाजिननृपाणां निषिद्धं सिद्धान्ते ।

---

१ ग— 'तुल्यः' । २ क—'प्रत्यार्पि' । ३ घ—'वधाः' । ४ घ—"नभ्युदये सति' । ५ अनुष्टुप् ।

६ " द्यूत मांसं सुरा वेश्या, पापर्द्धिश्चौरिका तथा ।
परस्त्रीगमन चेति, सप्तैव व्यसनानि हि ॥ ४ ॥ "

इति श्रीसोमप्रभसूरिसूत्रिते सप्तव्यसनकथासमुच्चये ।

७ क—'ग्राहितः' । ८ स्थूलप्राणातिपातविरमण-स्थूल-मृषावादविरमण-स्थूलादत्तादानविरमण-परदारगमनविरमण-स्थूलपरिग्रहविरमण-दिग्व्रत-भोगोपभोगविरमणाऽनर्थदण्डविरमण-सामायिक-देशावकाशिक-पौषधेतिव्रतैकादशकम् ।

एकदा 'लक्षणावत्यां' बौद्धो वर्धनकुञ्जरो धर्मनृपमाह सगद्गदम्— अह बप्पभट्टिना जितस्तन्मे न दूषणम् । बप्पभट्टिर्हि भारती नररूपा, प्रज्ञामयः पिण्डः, गीष्पुत्रः, न च दुनोति । एतत् तु दुनोति यत् तव भृत्येनापि वाक्पतिराजेन सूरिक्षत-भेदान्मम मुखशौचोपायेन गुटीं हारयामहे । एतावदभिधाय स　५ तारं तारं रुरोद । स निवारितः क्ष्मापेन रोदनात् । उक्तश्च—किं क्रियते ? । अय नश्चिरसेवकोऽनेकसमराङ्गणलब्धजयप्रतिष्ठः प्रबन्धकविः पराभवितुं न रोचते । क्षमस्वेदमस्यागः । ततो बौद्धो जोप स्थितः । अपरेद्युर्यशोधर्मनाम्ना समीपदेशस्थेन बलवता भूपेन 'लक्षणावती'मेत्य रणे धर्मनृपो व्यापादितः । १० राज्यं जगृहे । वाक्पतिरपि बन्दीकृतः । तेन कारास्थेन 'गौडवध'-सञ्ज्ञकं प्राकृतं महाकाव्यं रचयित्वा यशोधर्माय राजेन्द्राय दर्शितम् । तेन गुणविशेषविदा ससत्कारं बन्देर्मुक्तः क्षमितश्च । "विद्वान् सर्वत्र पूज्यते" । ततो वाक्पतिर्बप्पभट्टेः समीपं गतः । द्वयोस्तयोर्मैत्री पूर्वमप्यासीत्, तदानीं विशेषतोऽवृधत् । १५ तेन वाक्पतिना 'महामहविजया'ख्यं प्राकृतं महाकाव्यं बद्धम् । आमाय दर्शितम् । आमो हेमटङ्ककलक्ष्यमस्मै व्यशिश्रणत् ।

> कियती पञ्च सहस्री, कियती लक्ष्या च कोटिरपि ? ।
> औदार्योन्नतमनसां, रत्नवती वसुमती कियती ? ॥ १ ॥[5]

अपरेद्युः प्रभुः श्रीआमेन पृष्टः— भगवन् ! यूयं तावत् तपसा　२० विद्यया च लोके लब्धपरमरेखाः । किमन्यः कोऽपि कश्चाप्यस्ते यो भवत्तुलालेशमवाप्नोति ? । बप्पभट्टिरभाणीत्—अवनिपते! मम गुरुबान्धवौ गोविन्दाचार्य-नन्नसूरी सर्वैर्गुणैर्मदधिकौ 'गूर्जर'-धरायां 'मोढेरक'पुरे स्तः । गुणोत्कण्ठयाऽमितसैन्य आमस्तत्र गतः ।

---

१ ख -'इतरेद्यु०' । २ ग -'राज्ञे' । ३ घ-'महमहविं०' । ४ न चेद मे दृष्टि-पथमागतम् । ५ आर्या ।

तदा नन्नसूरिर्व्याख्यानेऽवसरायातान् वात्स्यायनोक्तान् कामाङ्ग-
भावान् पल्लवयन्नासीत् । राज्ञा श्रुतं तत् सर्वम् । अरुचिरुत्पन्ना ।
अहो वयं कामिनोऽपि नैतान् भावान् विद्मः; अयं तु वेत्ति सम्यक्;
तस्मादवश्यं नित्यं योषित्सङ्गी, किमस्य प्रणामेन ? । इत्यकृतन-
५ तिरेवोत्थायाशु 'गोपगिरि'मागात् । चिराद् दृष्टः क्ष्माप इति रण-
रणकाक्रान्तस्वान्ताः प्रभवो वन्दापयितुमैयरुः । राजा निरादरो न
वन्दते तथा । एवं दिनानि कतिपयानि गतानि ।

एकदा गुरुभिः पप्रच्छे[2]– राजन्! यथा पुरा भक्तोऽभूस्तथेदानीं
भक्तो नासि । किमस्माकं दोषः कोपि ? । राजा स्माह–सूरिवर !
१० भवादृशा अपि कुपात्रश्लाघा कुर्वते, किमुच्यते ? । सूरिभिरूचे[3]–
कथम् ? । आमः प्राह–यौ भवद्भिः त्वौ गुरुबान्धवौ स्तुतौ तत्र
गत्वा एको नन्नसूरिनामा दृष्टः शृङ्गारकथाव्याख्यानलम्पटस्तपो-
हीनो लोहतरण्डतुल्यो मज्जति मज्जयति च भवाम्बुधौ । तस्मान्न
किञ्चिदेतत् । सूरयो मसिमलिनवदनाः स्ववसतिमगुः । तत्रोप-
१५ विश्य द्वौ साधू 'मोढेरक'पुरं प्रहितौ । तत्पार्श्वात् तत्र कथापितम्–
आमोऽकृतप्रणामो भवत्पार्श्वादागतः । एवमेवं युवां निन्दति ।
तत् कर्तव्यं येनासौ भवत्स्वन्येष्वपि श्रमणेषु अवज्ञावान् न भवति[4] ।
सर्वं तत्रत्यं ज्ञात्वा तौ द्वावपि गुटिकया वर्णस्वरपरावर्तं कृत्वा
नटवेषधरौ 'गोपगिरि'मीयतुः । श्रीवृषभध्वजचरित्रं नाटकत्वेन
२० बबन्धतुः । नटान् शिक्षयामासतुः । आमराजमवसरं ययाचतुः ।
राज्ञाऽवसरो दत्तः । मिलिताः सामाजिकाः तत्तद्रसभावज्ञाः ।
ताभ्यां नाटकं दर्शयितुमारेभे । भरत-बाहुबलिसमरावसरोऽभि-
नीयते । यदा व्यूहरचना-शस्त्ररणरणत्कारवीरवर्णना-भट्टकोला-
हलाश्वोत्थापनघर्घरिका-झणझणत्कारादि ताभ्यां वर्णयितुमारब्धम्,
२५ धारारूढश्च रसोऽवातारीत् तदा श्रीआमस्तद्भटाश्च 'कालिन्दी'-

[1] ख–'ख्यानावसरा०' । २ क–'पप्रच्छंते'। ३ ख–'सूरिरूचे' । ४ घ–'भवेत्' ।
५ इदं नाटकं न दृष्टं मया । ६ ग–'शस्त्रझलत्कार०' । ७ ख–'हलात्थापन०' ।
८ ग–'क्रणक्रणत्कारादि' ।

अत्रान्तरे नन्नसूरि-गोविन्दाचार्यौ स्वरूपमुद्रे प्रकाश्याहतुः– हत हत इति भाषन्ते स्म। राजन्! राजन्! भटा! भटाः! शृणुत शृणुत कथायुधमिदम्, न तु साक्षात्। अलं सम्भ्रमेण। इत्युक्त्वा लज्जिता विस्मिताश्च ते राजाद्याः संवृत्याकारमस्थुः। तदा गोविन्दाचार्य-नन्नसूरिभ्यां भूपोऽभाणि– किल शृङ्गारानुभाविनो वयमिति तं सम्यग् व्याख्यातुं विज्ञाः, किमु समराजिरमपि भवद्वत्प्रविष्टाः स्मः? कुरङ्गा इव शस्त्रे दृष्टेऽपि बिभिमः। आबाल्याद् गृहीतव्रताः पापभीरवः स्मः, परं भारतीप्रभावप्रभव-वचनशक्त्या रसान् सर्वान् जीवद्रूपानिव दर्शयामः। राजन्! 'मोढेरके' यैस्ते वात्स्यायनभावा व्याख्यातास्ते वयं नन्नसूरय 10 इमे च गोविन्दाचार्याः। भवतां तदा मृषा विकल्पः समजनि। राजा सद्यो ललज्जे। तौ सूरी क्षमयामास आनर्च्च बप्पभट्टिं च। तौ कतिचिद् दिनानि उपराजं स्थित्वा बप्पभट्टेरनुज्ञया पुन'र्मोढेर'-पुरमगाताम्। गतः समयः कियानपि।

अन्यदा गाथकवृन्दमागतम्। तन्मध्ये बालिकैका तमालनीलो- 15 त्पललोचना मृगाङ्कमुखी किन्नरस्वरा विदुषी गायति। तां दृष्ट्वा मदनशरज्वरजर्जरो गलितविवेको गतप्रायशौचधर्माभिनिवेशः 'कन्य-कुब्जे'शः पद्यद्वयं प्रभुप्रत्यक्षमपाठीत्–

वक्त्रं पूर्णशशी सुधाधरलता दन्ता मणिश्रेणयः
कान्तिः श्रीर्गमनं गजः परिमलस्ते पारिजातद्रुमाः। 20
वाणी कामदुघा कटाक्षलहरी सा कालकूटच्छटा
तत् किं चन्द्रमुखि! त्वदर्थममरैरामन्थि दुग्धोदधिः?॥१॥[7]

जन्मस्थानं न खलु विमलं वर्णनीयो न वर्णो
दूरे शोभा वपुषि निहिता पङ्कशङ्कां तनोति।

---

१ घ–'हनहनेति'। २ ग–'कचायुद्धमिद'। ३ क–'प्रतिष्ठाः'। ४ क–ख–'निग्धा'। ५ ख–घ–'सनालनीलो०'। ६ ग–'मदनज्वर०'। ७ शार्दूल०।

विश्वप्रार्थ्यः सकलसुरभिर्द्रव्यदर्पापहारी
नो जानीमः परिमलगुणः कस्तु कस्तूरिकायाः ॥२॥

सूरिभिश्चिन्तितम्—अहो महतामपि कीदृग् मतिविपर्यासः ! ।

भस्त्रा काचन भूरिरन्ध्रविगलत्तत्तन्मलक्लेदिनी
५ सा संस्कारशतैः क्षणार्धमधुरां बाह्यामुपैति द्युतिम् ।
अन्तस्तत्त्वरसोर्मिधौतमतयोऽप्येतां नु कान्ताधिया
श्लिष्यन्ति स्तुवते नमन्ति च पुरः कस्यात्र पूत्कुर्महे ? ॥३॥[३]

उत्थिता सभा । त्रिभिर्दिनैर्भूपेन पूर्बहिः सौधं कारितम्[४], मातङ्गी-सहितोऽत्र वत्स्यामीति धिया । तदवगत श्रीबप्पभट्टिसूरिभिः ।
१० ध्यानप्रत्यक्षं हि तेषां जगद्वृत्तम् । ततो माऽसौ नरकं[५] यासीदिति कृपया तैर्निष्पाद्यमानसौधभारपट्टे निशि खटिकया बोधदानि पद्यानि लिखितानि । यथा—

शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भजन्त्यशुचयस्त्वत्सङ्गतोऽन्ये यतः ।
१५ [६]किञ्चातः परमस्ति ते स्तुतिपदं त्वं जीवितं देहिनां
त्व चेन्नीचपथेन गच्छसि पयः ! कस्त्वां निरोद्धुं क्षमः ? ॥१॥[७]

सद्वृत्तसद्गुणमहार्हमहार्घकान्त—
कान्ताघनस्तनतटोचितचारुमूर्ते ! ।
आः पामरीकठिनकण्ठविलग्नभग्न !
२० हा हार ! हारितमहो भवता गुणित्वम् ॥२॥[८]

[९]जीयं जलबिंदुसमं, संपत्तीओ तरंगलोलाओ ।
सुमिणयसमं च पिम्मं, जं जाणसि तं करिज्जासि ॥३॥[१०]

---

१ घ–'कायाम्'। २ स्रग्धरा। ३ शार्दूल०। ४ घ–'कारापितम्'।
५ क–'नरकमया०'। ६ ग–'किवाऽतः'। ७ शार्दूल०। ८ वसन्त०।
९ छाया—जीवितं जलबिन्दुसमं सम्पत्तयस्तरङ्गलोलाः ।
स्वप्नसमं च प्रेम यज्जानासि तत् कुर्याः । १० आर्या ।

लज्जिज्जइ[1] जेण जणे, मइलिज्जइ निअकुलक्कमो जेण ।
कंठट्ठिए वि जीए, तं न कुलीणेहिं कायव्वं ॥४॥[2]

प्रातरमूनि पद्यानि स्वयमामो ददर्श । वर्णान् कवित्वगतिं च उपलक्षयामास । अहो गुरूणां मयि कृपा ! । अहोतमां मम पापाभिमुखता इति ललज्जे । दध्यौ च–साङ्कलिपकमिदं जैनङ्कर्मासङ्गमपापं मयाऽऽचरितम् । भारितोऽहं क्व यामि ? किं करोमि ? कथं गुरोर्मुखं दर्शयामि ? किं तपः समाचरामि ? किं तीर्थं सेवे ? । ऊर्ध्वं मुखं गृहीत्वा गच्छामि ? । कूपे पतामि ? । शस्त्रेणात्मानं घातयामि ? । अथवा ज्ञातम्–सर्वजनसमक्षं पापमुद्गीर्य काष्ठानि भक्षयामि । एवं टलवलायमानो[4]ऽनुचरानादिदेश– अग्निं प्रगुणयत । प्रगुणितस्तैरग्निः । समागताः श्रीबप्पभट्टिसूरयः । मेलितं चातुर्वर्ण्यम् । उक्तं तदघम् । यावत् सहसा[5] कृशानुं[6] प्रवेक्ष्यति आमस्तावत् सूरिभिर्बाहौ धृत्वोक्तः राजन्! शुद्धोऽसि । मा स्म खिद्यथाः । त्वया हि सङ्कल्पमात्रेण तत् पापं कृतं, न साक्षात्; सङ्कल्पेनाग्निमपि प्रविष्टोऽसि । चिरं धर्मं कुरु ।

मनसा मानसं कर्म, वचसा वाचिकं तथा ।
कायेन कायिकं कर्म निस्तरन्ति मनीषिणः ॥१॥[7]

इति वचनाद् विसृष्टोऽग्निः । जीवितो राजा । तुष्टो लोकः । प्रीतः सूरिः ।

समयान्तरे वाक्पतिराजो 'मथुरां' ययौ । तत्र श्रीपादलिदण्डी जज्ञे सः । तल्लोकादवगम्य आमः सूरीन् बभाषे– भवद्भिरहमपि श्रावकः कृतः । दिव्या वाणी वः प्रसन्नैव । जानामि वः शक्तिपरमरेखां यदि वाक्पतिमप्यार्हतदीक्षां ग्राहयथ । आचार्येन्द्रैः[8]

१ छाया—लज्ज्यते येन जने मलिनीक्रियते निजकुलक्रमो येन । कण्ठस्थितेऽपि जीवे तत् न कुलीनैः कर्तव्यम् ॥ २ आर्या । ३ चाण्डाली० । ४ 'टळवळतो' इति भाषायाम् । ५ ग–'सहसाऽग्निं' । ६ अग्निम । ७ अनुष्टुप् । ८ ग–'आचार्यैः' ।

प्रतिज्ञा चक्रे– तदा विद्या मे प्रमाणं यदि **वाक्पतिं** स्वशिष्यं श्वेताम्बरं कुर्वे । **वाक्पतिस्तु** क्वास्ति इति उच्यताम् ? । राज्ञोक्तम्– 'मथुरा'यां विद्यते । सूरयो 'मथुरा'यां गता बहुभिः श्रीआमासनरैः सह । 'वराहमन्दिरा'ख्ये प्रासादे ध्यानस्थं **वाक्-**
५ **पतिं** गत्वाऽद्राक्षुः । तत्पृष्ठस्थैः सूरिभिस्तारस्वरेण आशीर्वादाः पठितुमारब्धाः—

सन्ध्यां यत् प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचसे
धत्से यच्च परां[1] विलज्ज ! शिरसा तच्चापि सोढं मया ।
श्रीर्जाताऽमृतमन्थनाद्[2] यदि **हरेः** कस्माद् विषं भक्षितं ?
१० मा स्त्रीलम्पट ! मा[3] स्पृशेत्यभिहितो **गौर्यो हरः** पातु वः ॥१॥[4]

एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः
**पार्वत्या** विपुले नितम्बफलके शृङ्गारभारालसम् ।
अन्यद् दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
**शम्भोर्भिन्नरस** समाधिसमये नेत्रत्रयं पातु वः ॥२॥[5]

१५ **रामो** नाम बभूव हुं तदबला **सीतेति** हुं तां पितु–
र्वाचा 'पञ्चवटी'वने विचरतस्तस्याहरद् **रावणः** ।
निद्रार्थं जननीकथामिति **हरेर्हुङ्कारिणः** शृण्वतः
पूर्वस्मर्तुरवन्तु कोपकुटिला भ्रूभङ्गुरा दृष्टयः ॥३॥[6]

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
२० धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः ।
सद्यस्तत्कायकान्तिद्विगुणितसुरतप्रीतिना[7] **सौ(शौ)रिणा**[8] वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु **लक्ष्म्याः** पुनातु ॥४॥[9]

एवं बहु पेठे । अथ **वाक्पतिर्ध्यानं** विसृज्य सम्मुखीभूय सूरीनाह– हे **बप्पभट्टिमिश्रा** ! यूयं किमस्मत्पुरतः शृङ्गाररौद्राङ्ग
२५ पद्यपाठं कुरुध्वे ? । **बप्पभट्टयः** प्राहुः– भवन्तः साङ्ख्याः ।

---

१ ग–'नदीं' । २ ग–'मन्थनं' । ३ माम् । ४ ६ शार्दूल० । ७ ग–'सुरते प्रीतिना०' । ८ विष्णुना । ९ स्रग्धरा ।

साङ्ख्या निरीश्वराः केचित्, केचिदीश्वरदेवताः ।
सर्वेषामपि तेषां स्यात्, तत्त्वानां पञ्चविंशतिः ॥१॥[1]

इति ज्ञात्वा भवदभिमतदेवाशिषः पठन्तः स्मः । यथारुचि हि श्रोतुः पुरः पठनीयं समयज्ञैः । **वाक्पति**राह– यद्यप्येवं तथापि मुमुक्षवो वयमासन्ननिधनं ज्ञात्वा इह परब्रह्म ध्यातुमायाताः स्मः । ५
**बप्पभट्टय**यो जगदुः– किं तर्हि **रुद्रादयो** मुक्तिदातारो न भवन्तीति मनुध्वे[2] । **वाक्पतिः** प्राह– एवं सम्भाव्यते । **बप्पभट्टयो** बभाषिरे– तर्हि यो मुक्तिदानक्षमस्तं शृणु । पठामि । स जिन एव ।

"मदेन मानेन मनोभवेन, क्रोधेन लोभेन ससम्मदेन । १०
पराजितानां प्रसभं सुराणां, वृथैव साम्राज्यरुजा परेषाम्" ॥१॥[3]
[4]जं दिट्ठी करुणातरंगियपुडा एयस्स सोमं मुहं
आयारो पसमायरो परियरो संतो पसन्ना तणू ।
तं मन्ने जरजम्ममच्चुहरणो देवाहिदेवो [5]जिणो
देवाणं अवराण दीसइ जओ नेयं सरूवं जए ॥२॥[6] १५

इत्यादि बहु पेठे । **वाक्पतिः** प्राह– स जिनः क्वास्ते[7] । सूरिः– स्वरूपतो मुक्तौ, मूर्तितस्तु जिनायतने । **वाक्पति**र्ब्रूते– प्रभो ! दर्शय तम् । प्रभुरपि **आम**नरेन्द्रकारिते प्रासादे तं निनाय । स्वय प्रतिष्ठितवरं श्री**पार्श्व**नाथमदीदृशत् । शान्त कान्त निरञ्जन रूपं दृष्ट्वा प्रबुद्धो बभाण– अयं निरञ्जनो देव आकारेणैव लक्ष्यते । २०
तदा **बप्पभट्टि**सूरिभिर्देवगुरुधर्मतत्त्वान्युक्तानि । रञ्जितः सः । मिथ्यात्ववेषमुत्सृज्य जैन ऋषिः श्वेताम्बरोऽभूत् । जिनमवन्दिष्ट अपाठीच्च—

१ अनुष्टुप् । २ कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिविरचितायामयोगव्यवच्छेदिकायां पञ्चविंशतितमं पद्यमिदम् । ३ उपजातिः । ४ छायार्थिना प्रेक्ष्यता पञ्चाशत्तमं पृष्ठम् । ५ ग घ– 'इमो' । ६ शार्दूल० । ७ ख–'त्र भावे' ।

मेयनाहिसुरहिए-णं इमिणा किंकरफलं णलाडेणं ।
इच्छामि अह जिणवर!, पणाम किंण कलुसियं काउं ? ॥१॥[2]
[3]दो त्रि गिंहि(ह)त्था धडहड वच्चइं, को किर कस्य विपत्त भाणिज्जइं ?।
सारंभो सारंभं पुज्जइ, कद्दमु कद्दमेण किम(मु) सुज्ज(ज्झ)इ ?॥२॥[4]

५ [5]अत्यासन्ने आयुषि 'मथुरा'चातुर्वर्ण्यस्य आम[6]नृपसचिवलोकस्य च प्रत्यक्षं अष्टादशपापस्थानानि त्याजितः । नमस्कारं पञ्चपरमेष्ठिमयं श्रावितः । जीवेषु क्षामणां[7] कारितो वाक्पतिः सुखेन त्यक्ततनुर्दिवमगमत् । तत् सर्वं प्रधानैरन्यैरपि प्रथमं ज्ञापितो नृपः । पश्चाद् बप्पभट्टि'गोपगिरिं' गतः । राजा तुष्टस्तुष्टुवे सूरिशक्रम्-

१० आलोकवन्तः सन्त्येव, भूयांसो भास्करादयः ।
कलावानेव तु ग्राव-द्रावकर्माणि कर्मठः ॥१॥[8]

एकदा राज्ञा सूरिः पृष्टः- किं कारणं येनाहं ज्ञातजैनतत्त्वोऽपि अन्तराऽन्तरा तापसधर्मे रतिं बध्नामि ? । सूरिराह- प्रातर्वक्ष्यामः । प्रातरायाताः प्रोचुः-राजन्! अस्माभिर्भारतीवचसा तव प्राग्भवो

१५ ज्ञातः । त्वं 'कालिञ्जर'गिरेस्तीरे शालनामा तपस्वी शालद्रुमाधोभागे द्व्युपवासान्तरितभोजनस्तपो बहूनि वर्षाण्यतपथाः । स मृत्वा त्वमुत्पन्नः । तस्यातिदीर्घा जटास्तत्रैव[9] लतान्तरिता अद्यापि[10] सन्ति । तदाकर्ण्य आप्तनरास्तत्र राज्ञा प्रहिताः । तैर्जटा आनीताः[11] । सूरिवाक्संवादो दृष्टः । भूपतिः सूरीणां पदोर्विलग्य तस्थौ । पर-

२० मार्हतो बभूव ।

---

१ ख-'मयताए' सुर०', ग- 'मेयनाए' ।
२ छाया— मृगनाभिसुरभितेनानेन किङ्करफलं ललाटेन ।
इच्छाम्यह जिनवर! प्रणाम किं कलुषित कर्तुम् ? ।।
३ छाया—द्वावपि गृहस्थौ शीघ्रं शीघ्रं व्रजतः कः किल कस्य विपत्तिं भणेत् ? ।
सारम्भः सारम्भ पूजयति कर्दमः कर्दमेन किमु शुध्यति ? ॥
४ एतच्छन्दोनाम नावगम्यते ५ घ- 'प्रत्यासन्ने' । ६ ग- 'भूप०' ।
७ क-ख-'क्षमणां' । ८ अनुष्टुप् । ९ ग-'जटा तत्रैव' । १० ग-अद्याप्यस्ति । ११ ग-'आनीता ।

अन्यदा सौधोपरितलस्थेन **आमेन** क्वापि गृहे भिक्षार्थं प्रविष्टो मुनिर्दृष्टः । तत्र युवतिरेका कामार्ता गृहागतं मुनिं परब्रह्मैकचित्त रिरमयिषुः कपाटसम्पुटं ददौ । मुनिर्नेच्छति ताम् । तया मुनये पादतलप्रहारे दीयमाने नूपुरं मुनिवरचरणे प्रविष्टं 'काकतालीय' न्यायेन 'अन्धवर्तकी'न्यायाच्च । राजा तद् दृष्ट्वा सूरये ५ समस्यां ददौ—

कवाडमासज्ज वरंगणाए [2]अब्भत्थिओ [3]जुव्वणगव्वियाए ।

सूरिः प्राह—

[4]न मन्नियं तेण जिइंदिएण सनेउरो पव्वइअस्स पाओ ॥१॥[5]

[6]अन्यदिने प्रोषितभर्तृकाया गृहे भिक्षुः कश्चिद् भिक्षार्थी प्र- १० विष्टः । राज्ञा सौधाग्रस्थेन दृष्टः । तया भिक्षोः पारणायान्नमानीतम् । उपरि काकैर्भक्षितम् । मुनिकस्य दृष्टिस्तस्या नाभौ [7]स्थिता । तस्यास्तु दृष्टिस्तन्मुखकमले । **आमः** सूरये समस्यामार्पिपत् । यथा—

[8]भिक्खयरो पिच्छइ नाभिमंडलं सा वि तस्स मुहकमलं । १५

सूरिराह—

[9]दुण्हं पि कवालं चडुयं पि काया विलुंपंति ॥२॥[10]

इति **आमः** श्रुत्वा चमत्कृतः । अहो सर्वज्ञपुत्रका एते ! ।

अन्यदा कोऽपि चित्रकृद् भूपरूपं लिखित्वा उपभूपं गतः । **बप्पभट्टिना** श्लाघिता तत्कला । नृपात् तेन टङ्कलक्षं लेभे । २०

---

१ घ-'तम्' ।

२ छाया—कपाटमासाद्य वराङ्गनयाऽभ्यर्थितो यौवनगर्वितया ।

३ ग-'अब्भुत्थिओ' ।

४ छाया—न मतं तेन जितेन्द्रियेण सनूपुरः प्रव्रजितस्य पादः ॥

५ उपजातिः । ६ ग-'अन्यदा' । ७ ग-'पतिता' ।

८-९ छाया—भिक्षाचरः पश्यति नाभिमण्डलं साऽपि तस्य मुखकमलम् ।
द्वयोरपि कपालं चाटुकमपि काका विलुम्पयन्ति ॥ १० आर्या ।

लेप्यमयबिम्बचतुष्टयं च कारितम्– एकं 'मथुरा'याम्, एकं 'मोढेरवसहिका'या'मणहिल्लपुरे', एक 'गोपगिरौ' एकं 'सतारका-क्ष'पुरे । तत्र तत्र प्रतिष्ठाः प्रभावनाश्च कारिताः । अन्यदपि वहुकारि ।

५ अथ **आम**गृहे पुत्रो जातः सुलक्षणः । सोत्सवं तस्य **दुन्दुक** इति नाम प्रतिष्ठितम् । सोऽपि युवत्वे तैस्तैर्गुणैः पितृवत् पप्रथे । एकदा **समुद्रसेन**भूपाधिष्ठितं 'राजगिरि'नामदुर्गं **आमो** रुरोध । अमितं सैन्यं कुद्दालादिसामग्री भैरवादयो यन्त्रभेदाः कल्पिताः । प्राकारोऽतिबलेन प्रपातयितुमारेभे । नापतत् ।
१० **आमः** खिन्नः । तेन सूरयः पृष्टाः– अयमभ्रंलिहः प्राकारः कदाऽस्माभिर्ग्राहिष्यते ? । सूरिभिर्बभाषे– तव पुत्रपुत्रो **भोज**-नामाऽमुं प्राकारं दृक्पातमात्रेण पातयिष्यति, अन्यो नैव । **आम**-स्त्यक्तारम्भः प्राकाराद् वहिर्द्वादशाब्दीमस्थात् । शत्रुदेशमात्मसाच्चक्रे । **दुन्दक**गृहे पुत्रो जातः । तस्य '**भोज**'नाम ददे । सञ्जातमात्रः
१५ पर्यङ्किकान्यस्तो दुर्गद्वाराग्रमानीतः प्रधानैः । तद्दृक्प्रपातमात्रेण प्राकारः खण्डशो विशीर्णः । **समुद्रसेन**भूपो धर्मद्वारे निःसृतः । **आमो** 'राजगिरि'मविक्षत् । प्रजाभारो न कृतः । अक्रूरा हि जैना महर्षयः राजर्षयश्च दयापरास्ते । रात्रौ **आमाय** 'राजगिर्य'-धिष्ठात्रा भणितम्– राजन्! यदि त्वमत्र स्थास्यसि तदा तव लोकं
२० हनिष्यामि । **आमः** प्रत्यूचे– लोकेन हतेन किं ते फलम् ? । यदि हनिष्यसि तदा मामेव घातय । एतन्निर्भय**माम**वचः श्रुत्वा तुष्टो व्यन्तर उवाच– प्रीतोऽस्मि ते सत्त्वेन, याचस्व किञ्चित् । राज्ञोचे– न किमपि न्यूनं मे, केवलं कदा मे मृत्युः ब्रूहीदम् । व्यन्तर उवाच– षण्मासावशेषे आयुषि स्वयमेत्य वक्ष्यामि ।

---

१ 'तारकाख्यपुरे' । २ क-ख-घ 'कृसाः' । ३ ग-'सूरिभिर्बभणं' । ४ ग-'पातयिष्यते' । ५ क-'धर्मद्वारेण' ।

षण्मासावशेषे आयुषि पुनरागतः सः । राज्ञोक्तम्– कियन्मे आयु-रिति ? । व्यन्तरो वदति– देव !

'गङ्गा'ऽन्त'र्मागधे' तीर्थे, नावाऽवतरतः सतः ।
मकाराद्यक्षरग्रामोप–कण्ठे मृत्युरस्ति ते ॥१॥[3]

षण्मासान्ते इति विद्याः । पानीयान्निर्गच्छन्त धूमं यदा द्रक्ष्यसि तदा मृत्युर्ज्ञातव्यः । साधना च कार्या पारलौकिकी । इति गदित्वा गतो देवजातीयः । राजा प्रातः सूरिपार्श्वं गतः । सूरिरुवाच– राजन् ! यद् व्यन्तरेण वोऽग्रे कथितं आयुःप्रमाणं तत् तथैव । धर्म-पाथेयं गृह्णीथाः । तदाकर्ण्य भूपस्तुतोष विसिष्मिये च । अहो ज्ञानम् ! अथवा विस्मय एव कः ? । सूरस्तेजस्वी, इन्दुराल्हादकः, 'गङ्गा'ऽम्भः पावनम्, जैना ज्ञानिन इति । दिनद्वये गते सूरिः श्री**आम**स्य पुरः प्रसङ्गेन श्री**नेमि**नाथस्याशीर्वाद पपाठ । यथा–

लावण्यामृतसारसारणिसमा सा 'भोज'भूः स्नेहला
सा लक्ष्मीः स नवोद्गमस्तरुणिमा सा 'द्वारिका' तद् बलम् ।
ते **गोविन्द-शिवा-समुद्रविजय**प्रायाः [5]प्रियाप्रेरकाः
यो जीवेषु कृपानिधिर्व्यधित नोद्वाह स **नेमिः** श्रिये ॥२॥[6]

भूयोऽपि—

मग्नैः कुटुम्बजम्बाले, यैर्मिथ्याकार्यजर्जरैः ।
'नोज्जयन्ते' नतो **नेमि**–स्ते चेज्जीवन्ति के मृताः ? ॥२॥[8]

तथा 'रैवतक'तीर्थमहिमा सूरिभिर्व्याख्याय पल्लवितः । यथा भूमिमाहत्योत्थाय परिकर बद्ध्वा सरभसं भूपः प्रतिशुश्राव–'रैव-तके' **नेमि**मवन्दित्वा मया न भोक्तव्यमिति । लोकैर्निषिद्धः– राजन् ! मा, मा; दूरे 'रैवतिको' गिरिः; मृदवो भवादृशाः ।

---

१ घ-'आयु' । २ क–'मगधे' । ३ अनुष्टुप् । ४ ग–'आयुष्प्रमाणं' । ५ ख–'प्रियाः प्रेरका' । ६ शार्दूल० । ७ घ–'काम०' । ८ अनुष्टुप् ।

राजाऽऽह– प्रतिज्ञातं मे न चलति । ततः सह सूरिणा **आमो**[1] लक्षमेकं पृष्ठवाहा वृषभाः करभसहस्र २० हस्तिशत ७ अश्वलक्षमेकं पदातिलक्षत्रयं श्राद्धकुटुम्बसहस्र २० सारसैन्यैर्द्वात्रिंशदुपवासैः 'रैवतका'याचालीत् । 'स्तम्भन'तीर्थं यावद् गतः । तत्र
५ क्षुत्तापेन व्याकुलितोऽपि प्राणसन्देहं प्राप्तोऽपि नाहारमग्रहीत् । भीतो लोकः । खिन्नः सूरिः मन्त्रशक्त्या **कूष्माण्डी**देवीं साक्षादानिनाय । तदग्रे कथयामास– तत् कुरु येन राजा [2]जेमति जीवति च । तद्वचनात् **कूष्माण्डी** बिम्बमेकं महच्छिरसा बिभ्रती गगनेन **आम**सविधं गता ऊचे च– वत्स ! **साऽहमम्बिका** । तव
१० सत्त्वेन तुष्टा । गगने आगच्छन्तीं मां त्वं साक्षादद्राक्षीः । मयेदं 'रैवतै'कदेशभूतादवलोकनाशिखरान्**नेमि**नाथबिम्बमानीतम् । इदं वन्दस्व । अस्मिन् वन्दिते मूल**नेमि**र्वन्दित एव । कुरु पारणकम् । सूरिभिरपि तत् [3]समर्थितम् । लोकेनापि स्थापितम् । तद् बिम्बं वन्दित्वा राज्ञा ग्रासग्रहणं चक्रे । अद्यापि तद् बिम्बं 'स्तम्भ'तीर्थे
१५ पूज्यते । 'उज्जयन्त' इति प्रसिद्धं तत् तीर्थम् । इह्यातोद्यानि ध्वानयन्नामो 'विमलगिरौ' **वृषभध्वजं** सोत्सवं वन्दित्वा यावद् 'रैवता'द्रिं गतः [4]तावत् तत् तीर्थं दिगम्बरै रुद्धम्, श्वेताम्बरसङ्घः प्रवेष्टुं न लभते । **आमेन** तज्ज्ञातम् । ज्ञात्वोचे– युद्धं कृत्वा निपेद्धॄन् [5]हत्वा श्री**नेमिं** नंस्यामि । तावत् तत्र दिगम्बरभक्ता एकादश राजा-
२० नो मिलिताः । सर्वे युद्धैकतानाः । तदा **बप्पभट्टिना** भणित **आमः**– [6]राजेन्द्र ! धर्मकार्ये पापारम्भः कथं क्रियते ? । लीलयैव तीर्थमिदमात्मसात्करिष्ये । भवद्भिः स्थिरैः स्थेयम् । एवं भूपं प्रबोध्य **बप्पभट्टि**रुपदिगम्बरमुपेतद्भक्तं भूपं च नरं प्रहित्याबभाणत्– इदं तीर्थं यस्याऽ**म्बिका** दत्ते तस्य पक्षस्य सत्कमिति मन्यध्वे । तैरु-

---

१ ख-घ-'आमः सारसैन्यै रैवतका०'। २ 'जमे' इति भाषायाम्। ३ क-ख-'समर्पितम्'। ४ ग- 'तावता'। ५ घ-'हत्वा नेमिं'। ६ घ-'राजन्!'। ७ घ- 'तद्भक्तभूपं'।

क्तम्—युक्तमेतत् । ततो बप्पभट्टिना 'सुराष्ट्र'वास्तव्यानां श्वेताम्बरीयाणां दिगम्बरीयाणां च श्रावकाणां शतशः कन्यकाः पञ्चसप्तवार्षिक्यो [1]मेलिताः । मिलिताः सभ्याः । बप्पभट्टिना अम्बादेवीपार्श्वात् कथापितम्— यदि सर्वाः [2]श्वेताम्बरश्रावककन्यकाः—

[3]"'उज्जित'सेलसिहरे दिक्खा नाणं निस्सी(सी?)हिया जस्स । ५
तं धम्मचक्कवट्टिं अरिट्ठनेमिं नमंसामि "॥१॥[4]

इति गाथां पठिष्यन्ति तदा श्वेताम्बरीयं तीर्थम्, पक्षान्तरे तु दिगम्बरीयं तीर्थमिति । तत आनीता मुग्धबालिकाः । सर्वाभिः श्वेताम्बरपक्षश्रावकबालिकाभिः पठिता सा गाथा । अपरासु तु नैकयाऽपि । ततो जातं श्वेताम्बरसाद् 'रैवत'तीर्थम् । अम्बिकया १० स्वःस्थया पुष्पवृष्टिः श्वेताम्बरेषु कृता । ततो [5]नष्टा दिक्पटा 'महाराष्ट्र'दिदक्षिणदेशानगमन् । राज्ञाऽन्यैरपि सर्वसङ्घैश्चिरात् तत्र मिलितैर्नेमिर्नेमे । वित्त ददे । 'प्रभासे' चन्द्रप्रभः प्रणेमे । बन्दिमोक्षः सर्वत्रापि कारितः । आमस्य भुक्तौ 'गूर्जरा'दिदेशास्तदा तीर्थानां चिरं पूजोपयोगिनो हट्टाद्या याः(?) प्रकृताः । एवं कार्याणि १५ कृत्वा ससूरिर्नृपो 'गोपगिरिं' प्राविशत् । सङ्घपूजादिमहास्तत्र नवनवाः । [6]प्राप्तप्राये काले दुन्दुको राज्ये प्रतिष्ठितः । आपृष्टः सः । लोकोऽपि क्षमितः । अनृणो देशः कृतः । सह सूरिणा नावाऽऽरूढो 'गङ्गा'सरित्तीरे तीर्थे 'मागधं' गतः । तत्र जले धूमं दृष्टवान् । तदा सूरीन्द्रमक्षमयत् । संसारमसार विदन् अनशनमगृह्णात् । २० समाधिस्थः श्रीविक्रमकालात् अष्टशतवर्षेषु नवत्याधिकेषु व्यतीतेषु भाद्रपदे शुक्लपञ्चम्यां पञ्च परमेष्ठिनः स्मरन् राजा दिवमध्यष्ठात् । सूरयस्तत्त्वज्ञा अपि रुरुदुः । चिरप्रीतिमोहो दुर्जय एव । सेव-

---

१ ख--'मिलिताः' । २ 'श्वेताम्बरकन्यका.' ।

३ छाया—'उज्जयन्त'शैलशिखरे दीक्षा ज्ञानं निषेधिका यस्य ।
तं धर्मचक्रवर्तिनमरिष्टनेमिं नमस्यामि ॥

४ आर्या । ५ ग--'नष्टा' । ६ ग-प्राप्तकाले । ७ घ--'गङ्गां सह तीरे' ।

कास्तु चक्रन्दुः–हा शरणागतरक्षावज्रकुमार ! हा राजस्थापन-
दाशरथे ! हा अश्वदमननल ! हा सत्यवागयुधिष्ठिर ! हा हेम-
दानकर्ण ! हा मज्जाजैनत्वश्रेणिक ! हा सूरिसेवासम्प्रते ! हा
अनृणीकरणविक्रमादित्य ! हा वीरविद्याशातवाहन ! अस्मान्
५ विहाय क्व गतोऽसि ?। दर्शयैकदाऽस्मभ्यमात्मानम् । मैकाकिनो
मुञ्च । एवं विलपन्तस्ते सूरिभिः [1]प्रतिबोधिताः— भो भो सत्यं
दैवेन पापेन ।

[2]आलब्धा कामधेनुः सरसकिशलयश्चन्दनश्चूर्णितो हा
छिन्नो मन्दारशाखी फलकुसुमभृतः खण्डितः कल्पवृक्षः ।
१० दग्धः कर्पूरखण्डो घनहतिदलिता मेघमाणिक्यमाला
भग्नः कुम्भः सुधायाः कमलकुवलयैः केलिहोमः कृतोऽयम् ॥१॥[3]

तथापि मा शोचत मा शोचत, यतः—

पूर्वाह्णे प्रतिबोध्य पङ्कजवनान्युत्सार्य [4]नैशं तमः
कृत्वा चन्द्रमसं प्रकाशरहितं निस्तेजसं तेजसा ।
१५ मध्याह्ने सरितां जलं [5]प्रविसृतैरापीय दीप्तैः करैः
सायाह्ने रविरस्तमेति विवशः किं नाम शोच्यं भवेत्?॥१॥[6]

इति लोकं निःशोकं कृत्वा लोकेन सह सूरि'गोपगिरि'मगात् ।
सूरिभिर्दुन्दुको राजा आमेन आमशोकेन जात्यमुक्ताफलस्थूलानि
अश्रूण्युद्गिरन् हिमम्लानपद्मदीनवदनश्चिन्ताचान्तस्वान्तो बभाषे–
२० राजन् ! कोऽयं महतस्तव पितृशोकः ? । स हि चतुर्वर्गं संसाध्य
कृतकृत्यो बभूव । यशोमयेन देहेन चाचन्द्रं जीवन्नेवास्ते । पुण्य-
लक्ष्मीः कीर्तिलक्ष्मीश्चेति द्वे नरस्योपकारिण्यौ वल्लभे ।

पुण्यलक्ष्म्याश्च कीर्तेश्च, विचारयत चारुताम् ।
स्वामिना सह यात्येका, परा तिष्ठति पृष्ठतः ॥१॥[7]

२५ अन्योऽप्येवंविधः कोऽपि भवतु । इत्येवंविधाभिर्वाग्भिर्दुन्दुक-

---

१ क-'प्रबोधिताः'। २ ख-'आलब्धा'। ३ स्रग्धरा। ४ रात्रिसम्बन्धि। ५ ग-'प्रविशतैः०'। ६ शार्दूल०। ७ अनुष्टुप्।

राजं सूरिराजो निःशोकमकार्षीत् । दुन्दुकः शनैः शनैः परमार्हतोऽभूत् । राजकार्याणि अकार्षीत् । त्रिवर्गं स समसेविष्ट ।

एवं वर्तमाने काले एकदा दुन्दुकश्चतुष्पथे गच्छन् कण्टिकां नाम गणिकामुदाररूपां चिद्रूपां युवजनमृगवागुरां मदनमायामयीमालोकिष्ट । तां शुद्धान्तस्त्रीमकार्षीत् । तया दुन्दुकस्तथा वशीकृतो यथा— यदेव सा वदति तत् सत्यम्, यदेव सा करोति तदेव हितं मनुते । सा तु कार्मणकारिणी वाक्पटुः सर्वं राज्यं ग्रसते हिमानीव [1]चित्रम्, भोजमातरं पद्मां नाम अन्या अपि राज्ञीरन्वयवतीर्विनयवतीर्लावण्यवतीस्तृणाय मनुते ।

एकदा कलाकेलिर्नाम ज्योतिषिको निशि विसृष्टे सेवकलोके दुन्दुकराजं विजनं दृष्ट्वाऽवादीत्—देव ! वयं भवत्सेवकत्वेन सुखिनः ख्याताः श्रीशाश्च । ततो [2]यथातथ ब्रूमः । अथ ते भोजनामा तनयो भाग्याधिकस्त्वां हत्वा तव राज्ये निवेक्ष्यते । यथार्हं स्वयं कुर्वीथाः । राजा तदवधार्य वज्राहत इव क्षणं मौनी तस्थौ । ज्योतिषिकं विससर्ज । सा वार्ता भोजजननीसहचर्या दास्यैकया विपुलस्तम्भान्तरितया श्रुता । भोजमात्रे चोक्ता । सा पुत्रमरणाद् बिभाय । राजाऽपि कण्टिकागृहमगात् । साऽपि राजानं सचिन्तमालोक्यालापीत्—देव ! अद्य कथं म्लानवदनः ? । राजाऽऽह स्म— किं क्रियते ? । विधिः कुपितः । पुत्रान्मे मृत्युर्ज्ञानिना [3]दृष्टप्रत्ययशतेन कथितः । कण्टिका वदति स्म— का चिन्ता ? । मारय पुत्रम् । सुतमपि निर्दलयन्ति राज्यलुब्धाः । सुतो न सुतः । सुतरूपेण शत्रुरेव सः । तद्वचनाद् दुन्दुकः सुतं जिघांसामास । यावता घातयिष्यति तावता भोजमात्रा [4]पाडलीपुत्रे स्वभ्रातॄणां [5]शूराणां राज्यश्रीस्वयंवरमण्डपानां स्नेहलानां धर्मज्ञानामग्रे प्रच्छन्नलेखेन ज्ञापितम्, यथा— एवमेवं भवतां [6]भागिनेयो विनंक्ष्यति । [7]रुष्टो राजा । आगत्य

---

१ अशोकवृक्षम् । २ क–'तथ तथ'। ३ क–'दृष्टिप्रत्यय०' । ४ ख-ग-'पाडलीपुरे' । ५ ख–'सूराणां' । ६ ख-घ–'भागिनेयः' । ७ घ--'राजा रुष्टः' ।

एनं गृहीत्वा गच्छत । रक्षत[1] जीववत् । मा स्माहं भवत्सु सत्सु निष्पुत्रोऽभूवम् इति । तेऽप्यागच्छन्, दुन्दुकमनमन् । उत्सवमिषेण भागिनेयं[2] भोजं गृहीत्वा 'पाडलीपुत्र'[3]मगमन् । तत्र समपीपठन् । अलीललन्[4] । शास्त्राभ्यासमचीकरन् । जीववदमंसत । तत्र तस्य पञ्चाब्दी दिनैः कतिभिरप्यूनाऽतिक्रामति स्म । कण्टिका दुन्दुकाग्रे कथयति स्म— देव ! पुत्ररूपस्ते शत्रुर्मातृशाले[5] वर्धते । नखच्छेद्यं परशुच्छेद्यं मा कुरु । अत्रानीय च्छन्नं यमसदनं नय । राजाऽऽह— सत्यमेतत् । ततो दूतमुखेन दुन्दुको भोजं तन्मातुलपार्श्वेऽयाचीत्[6]। ते भोजं नार्पयन्ति । पुनः पुनः स्वान् दूतान् दुन्दुकः प्रहिणोति । भोजमातुलाः प्राहुः— राजन्! वयं तव भावं विद्म, नार्पयाम एवैनम् । धर्मपात्रमसौ । अन्योऽपि शरणागतो रक्ष्यः क्षत्रियैः, किं पुनरीदृक् भगिनीपुत्रः ? । बलात्कारं ब्रूषे चेद् युद्धाय प्रगुणीभूयागच्छेः । भगिनीपतये चमत्कारं दर्शयिष्यामः । तद् दूतैरागत्योक्तम् । दुन्दुकः कुपितोऽपि तान् हन्तुं न क्षमः । भोजोऽपि तैः पितुर्दुष्टत्वं ज्ञापितः कवचहर उपपितृनेति । ततो दुन्दुकेन बप्पभट्टिसूरयः प्रार्थिताः—यूयं गत्वा भोजं सुतमनुनीयानयत मानयत माम्[7] । अनिच्छन्तोऽपि तत्सैनिकैः सह 'पाडलीपुत्रं'[8] चेलुः । अर्धमार्गे सम्प्राप्तैः स्थित्वा विमृष्टं ज्ञानदृशा[9]— भोजस्तावन्मम वचसा नृपसमीपं नैष्यति । आनीयते वा यथा तथा तदाऽऽनीतोऽपि पित्रा हन्यते । वागुल्लङ्घने राजाऽपि क्रुद्धो मां हन्ति । तस्मादितो व्याघ्र इतो दुस्तटी इति न्यायः प्राप्तः । समाप्तं च ममायुः, दिवसद्वयमवशिष्यते, तस्मादनशनं शरणम् । इति विमृश्यासन्नस्थयतयो भाषिताः— नन्नसूरि-गोविन्दाचार्यौ

---

१ ग-'रक्षति' । २ ख--घ--'भाग्नेय' । ३ ग—घ-'पाटली०' । ४ क-ख-'अलीलपन्' । ५ 'मोसाळ' इति भाषायाम् । ६ ग-'तन्मातुलेभ्योऽयाचीत्' । ७ ग-'मनुनीयानयततमाम्' । ८ ग-'घ--''पाटली० । ९ ग-'दृष्टया' ।

प्रति हिता भवेत । श्रावकेभ्यो मिथ्या दुष्कृतं ब्रूयात् । परस्परम-
मत्सरतामाद्रियध्वम् । क्रियां पालयेत । आबालवृद्धान् लालयेत ।
नो वयं युष्मदीयाः, न यूयमस्मदीयाः, सम्बन्धाः कृत्रिमाः सर्वे ।
इति शिक्षयित्वाऽनशनस्थाः समतां प्रपन्नाः ।

अर्हतस्त्रिजगद्वन्द्यान्, सिद्धान् विध्वस्तबन्धनान् । ५
साधूंश्च जैनधर्मं च, प्रपद्ये शरणं त्रिधा ॥१॥
महाव्रतानि पञ्चैव, षष्ठकं रात्रिभोजनम् ।
विराधितानि यत् तत्र, मिथ्या दुष्कृतमस्तु मे ॥२॥

इति ब्रुवाणा आसीना अदीनाः कालमकार्षुः । श्रीबप्पभट्टिसूरीणां
श्रीविक्रमादित्यादष्टशतवर्षेषु गतेषु भाद्रपदे शुक्लतृतीयायां रवि- १०
दिने हस्तार्के जन्म, पञ्चनवत्यधिकेषु गतेषु स्वर्गारोहणम् । तदैव
'मोढेरे' नन्नसूरीणामग्रे भारत्योक्तम्—भवद्गुरव 'ईशान'देवलोकं
गताः । तत्र बाढं शोकः प्रससार ।

शास्त्रज्ञाः सुवचास्विनो बहुजनस्याधारतामागताः
सद्वृत्ताः स्वपरोपकारनिरता दाक्षिण्यरत्नाकराः । १५
सर्वस्याभिमता गुणैः परिवृता भूमण्डनाः सज्जना
धातः ! किं न कृतास्त्वया गतधिया कल्पान्तदीर्घायुषः ॥१॥

वृद्धैस्तु प्रबोधो दत्तः—

हित्वा जीर्णमयं देहं, लभते भो पुनर्नवम् ।
कृतपुण्यस्य मर्त्यस्य, मृत्युरेव रसायनम् ॥२॥ २०

इति । दुन्दुकेन सूरिभिः सह प्रहिता ये सैनिकास्ते निवृत्य
दुन्दुकपार्श्वं गताः । सोऽपि पश्चात्तापानलेन दन्दह्यते स्म ।
भोजेनाऽपि समातुलेन सूरिशिष्याणामन्येषामपि लोकानां सुखा-
दवगतम्, यथा—सूरय एवं मम्रुः, तव पार्श्वं नाजग्मुः । मा स्माय-

१ ख–'प्रतिहता भवेत् (?)' । २ क–'बालवृद्धान्' । ३ क–'नो' । ४-५ अनुष्टुप् ६ पञ्चत्व प्राप्ताः । ७ ख–'हस्तार्क्षे' । ८ हे ब्रह्मन् ! । ९ शार्दूल० । १० ख-ग–'कृत्यपुण्य०' । ११ अनुष्टुप् ।

मस्मदुपरोधसङ्कटे पतितः पितुः पार्श्वे गतः सन् म्रियेत इति कृपां दध्रुः । तदेतदाकर्ण्य भोजस्तथा पीडितो यथा वज्रपातेनापि न पीड्यते । पितुरन्तिकं नागादसौ ।

एकदा मालिकः[2] कोऽपि पूर्वमामराजभृत्यो विदेशं[3] भ्रमित्वा भोजान्तिकमागतः 'पाटलीपुरे' । तेनोक्तम्– देव ! त्वं मत्स्वामि-कुल[4]दीपः । मया विदेशे सद्‌गुरोर्मुखाद् विद्यैका लब्धा 'मातु-लिङ्गी' नाम ययाऽभिमन्त्रितेन मातुलिङ्गेन हताः [5]करि-हरिप्राया अपि बलिनो म्रियन्ते, मानवानां तु का कथा ? । देव ! गृहाण ताम् । भोजेन सा तस्मादात्ता । प्रमाणिता । सत्या । मालिको दान-मानाभ्यां भोजेन रञ्जितः । मातुलाः सर्वे भोजेन विद्या-शक्तिं प्रकाश्य तोषिताः । ते ऊचुः– यदीयं ते शक्तिस्तदा प्राभृत-मिषेण मातुलिङ्गानि गृहीत्वाऽस्माभिः सह पितुः समीपं व्रज । पितरं निपात्य राज्यं गृहाण । तद् रुरुचे भोजाय । चलितो बहुमातुलिङ्गशोभी सन् गतः पितुर्द्वारं कथापितं च––– तात ! त्वं पूज्योऽहं शिशुः ; त्वत्तो मरणं वा राज्यं वा सर्वं रम्यं मे । राजा सन्तुष्टः–अहो विनीतसुतः । आयातु । इति विमृश्य आहूतो भोजः । शोधितो मध्यमागतः । एकासनस्थौ [6]कण्टिका-राजानौ पृथक् पृथग् मातुलिङ्गेन जघान । सम्यग्विद्या हि नान्यथा । उपविष्टो दुन्दुकराज्ये भोजः । तन्मातुला अतुलं तोषं दधुः । माता पद्मा प्रससाद । दुन्दुकेन [7]धनहरण-ग्रासोद्दालनादिदूनचरा [8]राज-न्यकाः पुनर्जातमात्मानं मेनिरे । महाजनो जिजीव । वर्णाः सर्वे उन्मेदुः । संसारसरोऽम्भोजं भोजं कमला भेजे । दोर्बलात् परि-च्छदबलाच्च जगज्जिगाय । अथ कृतज्ञतया 'मोढेर'पुरे नन्नसूरये विज्ञप्तिं दत्त्वा उत्तमनरान् प्रैषीत् । ते गतास्तत्र । विज्ञप्तिर्दर्शिता

---

१ घ--'मृतेति' । २ 'माळी' इति भाषायाम् । ३ ग–'भ्रान्त्वा'। ४ ग–'प्रदीपः' । ५ 'कुञ्जर-सिंह०' । ६ ख–'कण्टीराजा०' । ७ घ-'धनहरणेन ग्रासे०' । ८ घ-- 'राजकन्यकाः' ।

तैस्तत्र । वाचिता **नन्नसूरि-गोविन्दाचार्यै**र्यथा— 'स्वस्ति श्री-'मोढेरे' परमगुरुश्रीनन्नसूरि-श्रीगोविन्दसूरिपादान् सगच्छान् 'गोपगिरि'दुर्गात् श्री**भोजः** परमजैनो विज्ञपयति यथा— इह तावत् प्रज्ञागङ्गाहि[1]मादयः समाचारनारीसौभाग्यवर्धनमकरध्वजाः क्षिति-पतिसदःकुमुदिनीश्वेतदीधितयो **भारतीधर्मपुत्राः श्रीबप्पभट्टि-**　५ सूरयास्त्रिदिवलोकलोचनलेह्यललितपुण्यलावण्यतामादधिरे । तत्स्थाने सम्प्रति दीर्घायुषो यूयं स्थः । [2]दृष्टविज्ञप्तिकाप्रमाणेनात्र पादोऽव-धार्यः' । तद् दृष्ट्वा भक्तिरहस्यं सूरयः ससङ्घाः सुतरां जहृषुः । सङ्घानुमत्या **गोविन्दाचार्यं** 'मोढेरके' मुक्त्वा श्रीनन्नसूरयो 'गोप-गिरि'मसरन् । **भोजः** पादचारेण ससैन्यः सम्मुखमायातः । गुरोः　१० पादोदकं पपौ । उल्लसत्तृष्णो गिरं शुश्राव । स्थानस्थानमिलित-जनहृदयसङ्घट्टचूँ[3]रितहारमौक्तिकधवलितराजपथं पुरं निनाय । सिंहासने निवेशयामास तान् । मङ्गलं चकार । तदाऽऽज्ञामयो बभूव । तद्भक्तानात्मवद् ददर्श । तदभक्तान् विषवदीक्षाञ्चक्रे । तदुप-देशाज्जिनमण्डितां मेदिनीं विदधौ । दुन्दुकस्य तादृग् मरणं　१५ स्मृत्वा कुपथेषु न रेमे । 'मथुरा'-'शत्रुञ्जया'दिषु [4]यात्रां चकार । एकादश व्रतानुच्चचार । पूर्वराजर्षियशांसि उद्दधार । चिरं राज्यं भेजे । इत्येवं 'गोपगिरौ' **भोजो** धर्मं लालयामास उदियाय च । अन्यैरपि पुण्यपुरुषैरेवं भाव्यम् ॥

॥ इति [5]श्रीबप्पभट्टिचरित्रम् । ग्रन्थाग्रं ६०० ॥



---

१ ग-'हेमा०' । २ क-'दृष्टविज्ञप्तिप्रमाणेन' । ३ ख-'हरितहार०' । ४ घ-'यात्राञ्चकार' । ५ घ-'भट्टिसूरिचरित्रप्रबन्धः' ।

[ १० ]

## ॥ अथ हेमसूरिप्रबन्धः ॥

'पूर्णतल्ल'गच्छे श्रीदत्तसूरिः प्राज्ञः 'वागड'देशे 'वटपद्रं' पुरं गतः । तत्र स्वामी यशोभद्रनामा राणक ऋद्धिमान् । तत्सौधा-
५ न्तिके उपाश्रयः श्राद्धैर्दत्तः । रात्रौ उन्मुद्र[1]चन्द्रातपायां राणकेन ऋषयो दृष्टा उपाश्रये निषण्णाः । श्रावकामात्यपार्श्वे पृष्टम्— के एते ? । अमात्यः प्रोचे— देव ! महामुनयोऽमी विषम-व्रतधारिणः । राणकस्य श्रद्धा बभूव । प्रातर् वन्दितुं गतः । देशना । श्रावकत्वं सुष्ठु सम्पन्नम् । मासकल्पमेकं स्थिताः ।
१० परदेशं गता गुरवः । तावता वर्षाकालः । देवपूजादिधर्मव्यापार-साराण्यहानि गमयति राणः । प्राप्ता शरद् । चरि[2]क्षेत्रा[3]णि द्रष्टुं गतो राणः । तावता बुं[4]ण्ठानि ज्वालयन्ति भृत्याः । तेषु सर्पिण्येका गर्भभारालसा ज्वालादिभिर्दह्यमाना तडफडा[5]यमाना सिमिसिमाय-माना राणेण दृष्टा । दयोत्पन्ना । विरक्तश्च । हा हा संसारं, धिग्
१५ गृहवासं, कस्य कृते पापमिदमाचर्यते ? । राज्यमपि दुष्पालं मायाजालं नरकफलम् । तस्मात् सर्वसङ्गपरित्यागः कार्यः । इति ध्यायन् सौधमायासीत् । निशि श्रावकमन्त्रिणमाकार्य रहोऽप्राक्षीत् मम धर्मगुरवः श्रीदत्तसूरयः क्व विहरन्ति ? । मन्त्र्याह— 'डिण्डुआणके' । विसृष्टो मन्त्री शेषपरिच्छदश्च । राणको मिताश्व-
२० परिवारः सारं हारमेकं सह गृहीत्वा शीघ्रं 'डिण्डुआणकं' प्राप्तः । गुरवो दृष्टा वन्दिताः । भववैराग्याद् रुदितः । पदोर्लगित्वा कथितं स्वपापम् । गुरुभिर्भणितम्— राणक ! चारित्रं विना न छुटन्ति[6] पापेभ्यो जीवाः । राणकेन न्यगादि— सद्यो दीयतां तर्हि तत् । सूरय ओमित्याहुः स्म । राणकेन 'डिंडुआणकीय'-

---

१ चन्द्रप्रभायाम् । २ ख-'चरणक्षेत्रा०' । ३ पशुक्षेत्राणि । ४ अर्धपक्वधान्यकणान् इति प्रतिभाति । ५ 'तडफडती' इति भाषायाम् । ६ 'छूटे छे' इति भाषायाम् ।

श्रावकाः समाकारिताः, हारोऽर्पितः । दिव्यः प्रासादः कार्यता-
मिति । तथाऽऽचरितं तैः । अद्यापि दृश्यते स तत्र । राणकैर्व्रत-
मात्तम्[1] । नन्द्यामेव पङ्विकृतिनियमः, एकान्तरोपवासा
यावज्जीवम् । तस्य राणयशोभद्रस्य गीतार्थत्वात् सूरिपदं जातम् ।
श्रीयशोभद्रसूरिरिति नाम । तदीयपट्टे प्रद्युम्नसूरिर्ग्रन्थकारः । ५
तत्पट्टे श्रीगुणसेनसूरिः । श्रीयशोभद्रसूरिपादास्त्रयोपवासा 'रैवते'
नेमिनाथदृष्टौ कृतानशनाः स्वर्लोकमैयरुः । गुणसेनसूरिपट्टे
श्रीदेवचन्द्रसूरयः [2]ठाणांगवृत्ति-शान्तिनाथचरितादिमहा-
शास्त्रकरणनिर्व्यूढप्रज्ञाप्राग्भाराः । ते विहरन्तो 'धन्धुक्क'[3]पुरं
'गूर्जर'धरा'सुराष्ट्र'सन्धिस्थं गताः । तत्र देशनाविस्तरः । १०

एकदा नेमिनागनामा श्रावकः समुत्थाय श्रीदेवचन्द्रसूरीन्
जगौ— भगवन् ! अयं 'मोढ'ज्ञातीयो मद् भगिनीपाहिणि-
कुक्षिभूः ठक्कुरचाचिगनन्दनश्च(श्चा)ङ्गदेवनामा भगवतां
देशनां श्रुत्वा प्रबुद्धो दीक्षां याचते । अस्मिंश्च गर्भस्थे मम
भगिन्या सहकारतरुः स्वप्ने दृष्टः । स च स्थानान्तरे उप्तस्तत्र महतीं १५
फलस्फातिमायाति स्म । गुरव आहुः—स्थानान्तरगतस्यास्य बालस्य
महिमा प्रैधिष्यते । महत् पात्रमसौ योग्यः सुलक्षणो दीक्षणीयः,
केवलं पित्रोरनुज्ञा ग्राह्या । गतौ मातुल-भागिनेयौ[4] पाहिणि-चाचिगा-
न्तिकम् । उक्ता व्रतवासना । कृतस्ताभ्यां प्रतिषेधः करुण-
वचनशतैः । चाङ्गदेवो दीक्षां ललौ । स हेमसूरिः प्रभुः । तेन १५
यथा श्रीसिद्धराजो रञ्जितः, व्याकरणं कृतम्, वादिनो जितास्तथा
च कुमारपालेन सह प्रतिपन्नम् । कुमारपालोऽपि यथा पञ्चाशद्वर्ष-
देशीयो राज्ये निषण्णः । यथा श्रीहेमसूरयो गुरुत्वेन प्रतिपन्नाः ।
तैरपि यथा देवबोधिः प्रतिपक्षः पराकृतः । राजा सम्यक्त्वं
ग्राहितः श्रावकः कृतः । निर्वीराधनं (?) च मुमोच सः । तत् २०

---

१ क-घ-'मादत्तम्' । २ जैनानां तृतीयमङ्गम् । ३ क-'धुन्धुक्क', ख-धुन्धूक०' ।
४ घ-'मातुल[ग]भागेयौ' ।

प्रबन्धचिन्तामणितो ज्ञेयम्। किं चर्वितचर्वणेन ?। नवीनास्तु केचन प्रबन्धाः प्रकाश्यन्ते---

कुमारपालेन अमारौ प्रारब्धायां आश्विनशु(सु)दिपक्षः समागात्। देवतानां कण्टेश्वरी-प्रमुखाणां[1] अबोटिकैर्नृपो[2] विज्ञप्तः---
५ देव! सप्तम्यां सप्त शतानि पशवः सप्त महिषाः, अष्टम्यां अष्ट महिषा अष्टौ शतानि पशवः, नवम्यां तु नव शतानि पशवो नव महिषा देवीभ्यो राज्ञा देया भवन्ति पूर्वपुरुषक्रमात्। राजा तदाकर्ण्य श्रीहेमान्तिकमगमत्। कथिता सा वार्ता। श्रीप्रभुभिः कर्णे एवमेवमित्युक्तम्। राजोत्थितः। भाषितास्ते---देयं दास्यामः। इत्युक्त्वा
१० वहिका(?)क्रमेण रात्रौ देवीसदने क्षिप्ताः पशवः। तालकानि दृढीकृतानि। उपवेशितास्तेषु प्रभूता आप्तराजपुत्राः। प्रातरायातो नृपेन्द्रः। उद्घाटितानि देवीसदनद्वाराणि। मध्ये दृष्टाः पशवो [3]रोमन्थायमाना निर्वातशय्यासुस्थाः। भूपालो जगाद--- भो अबोटिकाः! एते पशवो मयाऽमूभ्यो दत्ताः। यद्यमूभ्यो रोचिष्यन्ते, ते तदा ग्रसि-
१५ ष्यन्ते, परं न ग्रस्ताः; तस्मान्नामूभ्योऽदः [4]पललं रुचितम्। भवद्भ्य एव रुचितम्। तस्मात् तूष्णीमाध्वम्। नाहं जीवान् घातयामि। स्थितास्ते विलक्षाः। मुक्ताश्छागाः। छागमूल्यसमेन तु धनेन देवेभ्यो नैवेद्यानि दापितानि। अथाश्विनशुक्लदशम्यां कृतोपवासः क्ष्मापो निशि चन्द्रशालायां ध्याने उपविष्टो जपति। बहिर्द्वास्थाः
२० सन्ति। गता बह्वी निशा। स्त्र्येका दिव्या प्रत्यक्षाऽऽसीत्। उक्तस्तया सः--- राजन्! अहं तव कुलदेवी कण्टेश्वरी। [5]ऐषमः किमिति त्वया नास्मद्देयं दत्तम्?। राज्ञोक्तम्--- जैनोऽहं दयालुः पिपीलिकामपि न हन्मि, का कथा पञ्चेन्द्रियाणाम्?। तन्नुत्वा कण्टेश्वरी क्रुद्धा, राजेन्द्रं त्रिशूलेन शिरसि हत्वा
२५ जगमुषी। राजा कुष्ठी जातः। दृष्टं स्ववपुर्विनष्टम्। विषण्णः।

---

१ ख-'कोटेश्वरी-'। २ सेवकैः (?)। ३ उद्गीर्णस्य वाऽवगीर्णस्य रोम कुर्वन्त.। ४ मांसम्। ५ अस्मिन् वर्तमाने वर्षे।

भूत्येन मन्त्रिणमुदयनमाकार्य तत्स्वरूपं निगद्य पप्रच्छ—मन्त्रिन्! देवी पशून् याचति, दीयन्ते न वा?। मन्त्री दाक्षिण्यादाह—देव! राजा यत्नेन रक्ष्य एव। भूपो न्यगादीत्—निःसत्त्वो वणिगसि। यदेव ब्रूषे मम किं कार्यं जीवितेन?। कृतं राज्यम्। लब्धो धर्मः। हताः शत्रवः। केवल काष्ठानि देहि रहः, येन प्रातर्मामीदृशं दृष्ट्वा लोको धर्मे नोड्डाह करोति। उदयनेन चिन्तितम्—अहो महत्कृच्छ्रमापतितम्!। पारवश्यमूलं नियोगं धिक्। मन्त्रिणोक्त सद्यो बुद्धिवशात्—श्रीहेमसूरयो विज्ञप्यन्ते। राज्ञोक्तम्—तथाऽस्तु। गतो मन्त्री उपसूरि। सूरिभिर्जलमभिमन्त्र्यार्पितम्। अनेन राजाऽऽच्छोट्य इति। सचिवेन तथा चक्रे राज्ञः। राजा [1]दोगुन्दुकदेव इव दिव्यरूपः सम्पन्नो भक्तश्च समधिकं श्रीगुरु वन्दितुं ययौ। गुरुर्देशनां [2]दत्ते—

[3]शूराः सन्ति सहस्रशः प्रतिपदं विद्याविदोऽनेकशः
सन्ति श्रीपतयो निरस्तधनदास्तेऽपि क्षितौ भूरिशः।
किन्त्वाकर्ण्य निरीक्ष्य वाऽन्यमनुज दुःखार्दितं यन्मन—
स्तद्रूपं प्रतिपद्यते जगति ते सत्पूरुषाः पञ्चषाः ॥१॥[4]

राजा स्वावासं गतः। राज्य समृद्धं भुनक्ति।

एकदा प्रभुभिर्भरतस्य चक्रिणः साधर्मिकवात्सल्यकथाऽकथि। तां श्रुत्वा भूपः साधर्मिकवात्सल्यं दिव्यभोजन-वसन-कनकदानैः प्रतिग्रामं प्रतिपुरं प्रारेभे। तद् दृष्ट्वा कविश्रीपालपुत्रः सिद्धपालः सूक्तमपाठीत्—

क्षिप्त्वा वारिनिधिस्तले मणिगण रत्नोत्कर 'रोहणो'
रेण्वावृत्य सुवर्णमात्मनि दृढं बद्ध्वा '[5]सुवर्णाचलः'।
क्ष्मामध्ये च धन निधाय धनदो बिभ्यत् परेभ्यः स्थितः
किं स्यात् तैः कृपणैः समोऽयमखिलार्थिभ्यः समर्थं ददत् ॥१॥[6]

१ उपहासम्। २ एतत्स्वरूपार्थं प्रेक्ष्यतां परिशिष्टं। ३ ख-घ-'सुरा'। ४ शार्दूल०। ५ मेरुः। ६ शार्दूल०।

द्रमलक्षदत्तिरत्र। पुनः कदाचित् पठितम्—

श्रीवीरे परमेश्वरेऽपि भगवत्याख्याति धर्मं स्वयं
प्रज्ञावत्यभयेऽपि मन्त्रिणि न यां कर्तुं क्षमः **श्रेणिकः**।
अक्लेशेन **कुमारपाल**नृपतिस्तां जीवरक्षां व्यधाद्
५ यस्यास्वाद्य वचःसुधां स परमः श्री**हेमचन्द्रो** गुरुः॥१॥[2]

अत्रापि लक्षदत्तिः। अन्येद्युः कथाप्रसङ्गे प्रभवः प्राहुः स्म—

पूर्वं श्री**भरतो** राजा 'श्रीमाल'पुरे 'नगर'[3]पुरे 'शत्रुञ्जये' 'सोपारके' 'अष्टापदे' च जीवन्तस्वामिश्री**ऋषभ**प्रतिमावन्दनार्थं च चतुरङ्ग-चमूचक्रोच्छलितरजःपुञ्जश्यामलितदिक्चक्रवालः सङ्घपतिर्भूत्वा
१० ववन्दे। तदाकर्ण्य श्री**चौलुक्यः** स्वयं कारितरथेऽर्हद्बिम्बमारोप्य ससैन्यः 'शत्रुञ्जयो'-'ज्जयन्ता'दियात्रायै चचाल। सङ्घे **उदयन**-सुतो **वाग्भट**श्चतुर्विंशतिमहाप्रासादकारापकः; **नृपनागा**ख्यश्रेष्ठि-भूः श्रीमान् **आभडः**, षड्भाषाकविचक्रवर्ती[4] **श्रीपालः**, तद्भूः **सिद्धपालः**, कवीनां दातॄणां च धुर्यो भाण्डागारिकः **कपर्दी**,
१५ 'परमार'वंश्यः[5] 'कूर्चालसरस्वती' 'प्रह्लादन'[6]पुरनिवेशको राणः **प्रह्लादनः**, राजेन्द्रदौहित्रः **प्रतापमल्लः**, नवतिलक्षहेमस्वामी श्रेष्ठि**छाडाकः**, राज्ञी **भोपलदेवी**, चौलुक्यपुत्री **लील्लूः**, राँण-अम्बड[7]माता **माऊः**, आभडपुत्री **चाम्पल**[8] इत्यादि, कोटीश्वरो लोकः, श्री[9]हेमचन्द्रसूरिपादाः[10], श्रीदेवसूरयः, श्रीधर्मसूरयः, लक्ष-
२० सङ्ख्या मानवाः। स्थाने स्थाने प्रभावना। जिने जिने छत्रचामरा-दिदानम्। पात्राणां इच्छासिद्धिः। प्रथमं 'रैवता'द्रितले साङ्क-लीयालीपंथा दिशि गत्वा स्थितः क्षितिपतिः। नान्दीनिर्घोषः। रात्रौ भारत्या श्रीहेमसूरिभ्य आदिष्टम्— राज्ञा नाद्रावारोढव्यं[11],

---

१ ख–'लक्षं दत्ति'। २ शार्दूल०। ३ ख-घ–'नगरे पुरे'। ४ संस्कृत-प्राकृत-शौरसेनी मागधी पैशाची-अपभ्रंश इति भाषाषट्कम्। ५ घ–'वशः'। ६ 'पालनपुर' इति भाषायाम्। ७ ख–'राजा अम्बड०'। ८ ग–'चाम्पलदे इत्यादि'। ९ घ–'श्रीहेमसूरि०'। १० ख-'पाघा'। ११ क–'नैवाद्रौ आरोढव्य'।

विघ्नसम्भवात् । अत्रैव देवो मदनसूदनो नेमिर्वन्द्यः । तथैव कृतम् । सङ्घस्तु 'रैवत'गिरौ श्रीनेमिस्नानाविलेपनपुष्पफलवस्त्रपूजानैवेद्य-नादमालादिग्रहणैर्भावमपूरि । राजाऽप्यक्षवाटकवस्त्रापथराजीमत्या-दिगुहाप्रायस्थानयात्रया महादानैश्च धनजीवितव्ययोर्लाभमग्रहीत् । 'देवपत्तने' चन्द्रप्रभयात्रा ससङ्घस्यास्यासीत् । ततो व्याघुट्य ५ 'शत्रुञ्जया'द्रिं गतः । आरूढः । [1]मरुदेवादर्शनपूजे । तत्राशीः—

बालो भे वृषभो भरं सुमनसामप्येष किं सासहि-
मन्दं धेहि किरीटमस्य करयोर्मा काङ्कणी भूद् व्यथा ।
गाङ्गेयं कटिसूत्रमत्र तनुकं युक्त बलिष्ठेऽप्यमू- १०
र्नाथे मातृदयागिरः सुरजने हास्यावहाः पान्तु वः ॥१॥[2]

पुरः कपर्दी, तत्र कायोत्सर्गः । आशीस्तु—

रूढिः किलैव वृषभः कपर्दिनं
निषेवतेऽस्मिन् 'विमला'चले पुनः ।
अयं कपर्दी वृषभं शुभाशय- १५
स्तनोतु वः शान्तिकपौष्टिकश्रियम् ॥१॥[3]

पुरो वृषभप्रभुप्रासादः । देवदर्शनं पूजा । आशीर्वादः—

नव्योद्वाहविधौ वधूद्वययुतं पुत्रं सवित्रीरति-
प्रीत्यासन्नमिव [4]स्मरः किल ददौ यं वीक्ष्य सत्याशिषम् ।
कल्पद्रुर्भुवि जङ्गमः किमधुना पत्रद्वयेनोद्गत- २०
[5]स्तत्त्वं स्याः शतशाख इत्यनुदिनं स श्रेयसे नाभिभूः ॥१॥[6]

चैत्यपरिपाट्यां कपर्द्याह—

श्रीचौलुक्य ! स दक्षिणस्तव करः पूर्वं ममासूत्रितः
प्राणिप्राणविघातपातकसखः शुद्धो जिनेन्द्रार्चनात् ।

---

१ घ–'मरुदेवीदर्शन०' । २ शार्दूल० । ३ इन्द्रवंशा (?) । ४ क– 'स्वरं', ख-घ–'स्मर' । ५ ख–'सत्त्वं' । ६ शार्दूल० । ७ क 'मुखः' ।

वामोऽप्येष तथैव पातकसखः शुद्धिं कथं प्राप्नुयात्
न स्पृश्येत करेण चेद् यतिपतेः श्रीहेमचन्द्रप्रभोः ॥२॥[1]

[2]मेरुमहाध्वजावारितान्नदानयाचकसत्काराः प्रवर्तन्ते । मालोद्-
घट्टनप्रस्तावे तादृशी सङ्घे राज्ञि च निषण्णे महं **वाग्भटः** प्रथमं
५ लक्षचतुष्कमवदत् । प्रच्छन्नधार्मिकः कश्चित् कथापयति–लक्षाष्टौ;
एवमन्योन्येष्वीश्वरेषु वर्धयत्सु कश्चित् सपादकोटीं चकार । राजा-
ऽपि चमच्चकार, उवाच च– उत्थाप्यतां स[3] यो गृह्णाति । उत्थितः
सः । यावद् दृश्यते तावद् बादरमलिनवसनो वणिग्रूपः । राज्ञा
**वाग्भटो** भाषितः– द्रम्मसुस्थं[4] कृत्वा देहि । **वाग्भटो** वणिजा
१० सहोत्थाय पादुकान्तिकं गत्वा द्रम्मसुस्थं[5] पप्रच्छ तम् । वणिजा
सपादकोटिमूल्यं माणिक्यं दर्शितम् । मन्त्रिणा पृष्टम्–कुत इदं ते ? ।
वणिगाह— 'महुअक'वास्तव्यो मत्पिता **हंसाख्यः** सौराष्ट्रिकः
प्राग्वाटः । अहं तद्भूर्**जगडः** । माता मे **धारुः**[6] । मम पित्रा निधन-
समयेऽहं भाषितः– वत्स ! चिरं कृताः प्रवहणयात्राः फलिताश्च ।
१५ मेलितं धनम् । तेन च क्रीतं प्रत्येकं सपादकोटिमूल्यं माणिक्य-
पञ्चकम् । अधुना प्रभुऋषभचरणौ शरणं मे । अनशनं प्रतिपन्नम् ।
क्षामिताः[7] सर्वे जीवाः । एकं माणिक्यं श्री**ऋषभाय**, एकं श्री**नेमिनाथाय**
एकं श्री**चन्द्रप्रभाय** दद्याः, माणिक्यद्वयमात्मनोऽन्तर्धनं दध्याः ।
बाह्यधनमपि प्रचुरतरमास्ते । इदानीं माला मया[8] सहानीता **कपर्दि-**
२० **भवने** मुक्ताऽसि । तां जरन्तीं मातर सर्वतीर्थाधिक्ततया पुराणपुरुषै-
र्निवेदितामेतां मालां परिधापयिष्यामि । श्रुत्वा हृष्टो मन्त्री राजा
सङ्घश्च । मातृसम्मुखगमनं सर्वश्रावकाणां मालापरिधापनम् ।
तन्माणिक्यं हेम्ना खचित्वा **ऋषभाय** कण्ठाभरणमनुष्यकिरण-
भरितचैत्यगर्भमासूत्रयामहे । वेलितः[9] सङ्घः, प्राप्त पत्तनम् । प्रवर्तन्ते

---

१ शार्दूल० । २ ख–' मरु० ' । ३ ख-घ-' स गृह्णाति ' । ४ स्थूल० ।
५ घ–'धर्मसुस्थ' । ६ घ–'धारूः' । ७ क-घ–'क्षमिताः' । ८ ग–'मम' ।
९ क-'चलितः' । १० 'वल्यो' इति भाषायाम् ।

सङ्घभोज्यानि प्रतिलाभनाश्च । अमारिस्तु नित्यैव ।

तस्य च कुमारपालदेवस्य भग्नी 'शाकम्भरी'श्वरेण 'चाहमान'-वंश्येन राज्ञा आनाकेन परिणिताऽस्ति । एकदा तौ सारिभिः [1]क्रीडतः । क्रीडता राज्ञा सारिगृहे [2]मुञ्चतोक्तम्— मारय मुण्डिकान् पुनर्मारय मुण्डिकान् । एवं द्वित्रिः । [3]टोपिकारहितशीर्षकत्वान्मुण्डिका 'गूर्जर'लोका विवक्षिताः । अथवा श्वेताम्बरा गूर्जरेन्द्रगुरवो मुण्डिका इति हासगर्भोक्तिः । राज्ञी कुपिता वदति— रे जङ्गडक ! जिह्वामालोच्य नोच्यते ?, किं वक्षि ? । न पश्यसि माम् ? । न जानासि मम भ्रातरं राजराक्षसम् ? । क्रुद्धो राजा तां पदा जघान । साऽप्याह— यदि ते जिह्वां [4]अवटुपथेन [5]कर्षयामि तदा राजपुत्रीं मा-ममस्थाः । इति वदन्त्येव सा ससैन्या निर्विलम्बं 'श्रीपत्तन'मेत्य चौलुक्याय तं परिभवं प्रतिज्ञां च स्वोपज्ञामजिज्ञपत् । चौलुक्यो-ऽभाषत— इत्थमेव करिष्यामः, कौतुकं [6]पश्येः । ततश्चानाकस्तस्यां तत्र गतायां 'गूर्जर'नृपतेजो दुर्धर विदंश्चुक्षोभ । चौलुक्योऽपि बह्वाप्तपरिच्छदं मन्त्रिणमेकं तत्रत्यवृत्तान्तज्ञानाय प्रैषीत् । गतः स तत्र । जग्राह गृहम् । राजासन्नदासीमेकां धनेन रञ्जयित्वा आत्मीय भोगपात्रमकरोत् । नित्यं सा याममात्र्यां रात्र्यामायाति रञ्जयति तम् । एकदा निशीथे साऽऽगात् । मन्त्री कुपितः— आः पापे ! [7]परनुगामिनि ! किमिति विलम्बेन समागताऽसि ? । साऽपि [8]सप्रश्रयं मन्त्रिणमभाषत— स्वामिन् ! मा कुपः । कारणेन स्थिताऽस्मि । मन्त्रिणोचे— किं कारणम् ? । सा जगाद— प्रभो ! अह अमुस्य राज्ञस्ताम्बूलदासी । रात्रेर्याम एकस्मिन् राज्ञा परिच्छदः सर्वो विसृष्टः । अहमपि विसृष्टा । विसृजता चाप्तनर एकोऽभापि— व्याघ्रराजं हक्कारय । अह स्तम्भान्तरिता कौतुकेन स्थिता । को व्याघ्रराजः ? । कथमाहूयते इति । ततो राज्ञाऽऽकारितः स आगतः,

१ ख-घ-'क्रीडता' । २ घ- 'मञ्चतो०' । ३ 'टोपी' इति भाषायाम् । ४ ग-'अवटपथेन' । ५कूपमार्गेण । ६ क-'पश्य' । ७ घ-'परापरनृ०' । ८ सविनयम् ।

कृतप्रणामः सन् राज्ञाऽऽलापि— भो! विजनमस्ति इति भाष्यसे। त्वमस्माकं कुलक्रमागतः सेवकः। सद्यो व्रज। 'गूर्जरे'श्वरघातको भूत्वा व्यापादय। लक्षत्रयं हेम्नां दास्ये। अथ स व्याघ्रराजा-ख्यो बभाषे— देव! हनिष्याम्येव तं राजानम्। मा स्म संशयं
५ कृथाः स्वामिन्!। ततस्तद्वचः श्रुत्वा तुष्टः 'शाकम्भरी'श्वरः सद्यो हेमलक्षत्रयबदरकांस्तद्गृहायाचीचलत्। व्याघ्रराजं चाप्राक्षीत् कदा केनोपायेन तं हनिष्यसि?। व्याघ्रराजोऽवादीत् नाथ! अद्य रविवारो वर्तते। आगन्तुकामे सोमवारे क्वचनावसरं लब्ध्वा हनिष्यामि। उपायस्तु भरटकरूपं करिष्यामि। राजा तु 'कर्ण-
१० मेरु'प्रासादे आयाति सोमवारे ध्रुवम्[1]। देवं नत्वा व्यावर्तमाना-यास्मै बाह्याङ्गणे शेषादानमिषेण पुष्पकलम्बकमुत्पाटयिष्यामि। तत्र धृतया कर्तिकया[2] कङ्कमय्या[3] घातयिष्यामि। अङ्गीकृतसाहसानां न किञ्चिदपि दुष्करम्। अहं हतश्चेत् तत्र तदा मन्मानुषाणामुपरि कृपा करणीया। उद्धृतश्चेदहं तदा जितं जितम्। एवं व्याघ्र-
१५ राजेन निगदिते आनाकेन वीटकं दत्तम्। विसृष्टोऽसौ। तत् सर्वं सावधानतया स्तम्भान्तारितया मया श्रुतम्। राज्ञि शुद्धान्ते गतेऽहं त्वदंह्रिसेवार्थमायाता। तस्मान्मा मनो मयि क्रोधकश्मलितं कार्षीः। एतद्दासीवचः श्रुत्वा चौलुक्यनियोगी चिन्तयति—लब्धं शत्रुगृहमर्म। यतिष्येऽतः कार्यकरणाय। इति परामृशन् दासीम-
२० भाषत— याहि मृषाभाषिणि!। कः स्त्रीवचसि विश्वासः?।

श्रूयते यन्न शास्त्रेषु, तल्लोकेऽपि न दृश्यते।
तत् कल्पयन्ति लोलाक्ष्यो, जल्पन्ति स्थापयन्ति च ॥१॥[4]

इत्यादि भाषित्वा तां व्यसाक्षीत्। स्वयं तु चतुरांश्चतुरो याम-लिकानुपचौलुक्यं प्रास्थापयत्। विज्ञप्त्या चाज्ञापयत्— सावधानैः
२५ स्थेयम्। इत्थं इत्थं स्वामिपादानामुपरि शत्रुकृतं कपटं वर्तते। भरटकश्चिन्तनीयः। चौलुक्यः सावधानस्तस्थौ। सोमवारे गतो

१ ख—घ—'वारे ध्रुवम्'। २ घ— 'कर्तरितया'। ३ पक्षिविशेष०। ४ अनुष्टुप्।

राजा 'कर्णमेरु'म् । प्रकटीभूतः पूर्वोक्तचेष्टया भरटकः । दृष्टमात्र-मेव तं नृपो मल्लैरदीधरत् । कर्तिका च लब्धा । वद्धो व्याघ्र-राजः । जल्पितश्च– रे वराक! जङ्गडकेन प्रेपितोऽसि ? । सेव-कस्त्वम् । सेवकस्य च हिताहितविचारो नास्ति । स्वाम्यादेश-वशावदस्त्व मा भैषीः । मुक्तोऽसि । तमेव हनिष्यामि य एवं द्रोह- ५
माचरति दुर्दुरूढः । इत्युक्त्वा परिधाप्य व्यसृजत् । स्वय तु सौधं[1] गत्वा सामग्रीं यौद्धीं व्यरचत् । पार्ष्णिरक्षां विधिवद् विधाय[2] चलितः । 'सपादलक्षा'न् प्रविष्टः । भट्टेन आनाकनरेन्द्रमालील-पत् । यथा—

अये भेक! च्छेको भव भवतु ते कूपकुहर १०
शरण्य दुर्मत्तः किमु रटसि वाचाट! कटुकम् ? ।
पुरः सर्पो दर्पी विषमविषफूत्कारवदनो[3]
ललज्जिह्वो धावत्यहह भवतो जिग्रसिषया ॥१॥[4]

आनकोऽपि तदुद्दामशौण्डीर्यरिपुदूतवचः श्रुत्वा लक्षत्रयाश्वेन[5] नरलक्षदशकेन पञ्चाशता च मदान्धैर्गन्धगजैरचलत् । 'शाक- १५
म्भरी'तः पञ्चक्रोश्याऽर्वागागतः । दिनत्रयेण युद्ध भविष्यतीति निर्णीतमुभाभ्यां राजेन्द्राभ्याम् । अन्योन्यमक्षान् दीव्यन्ति राजपुत्राः। योधयन्ति मल्लयोध-च्छुरीकार-मेष-वृषभ-महिष-गजान् । स्फोट-यन्ति नालिकेराणि । तावन्तमवकाशं लब्ध्वा 'सपादलक्ष'क्ष्मापालेन निशि द्रव्यबलेन 'नड्डूलीय''केल्हणा'दयो राजकीया'श्चौलुक्य'- २०
भक्ता भेदिताः स्वपक्षे कृताः । सर्वेषामेको मन्त्रः— युद्धाय सन्न-द्धव्यमेव, न तु योद्धव्यम् । राजा चौलुक्य एकाकी मोचनीयः । शत्रुभिर्हन्यताम् । अर्थो हि परावर्त्तयति त्रिभुवनम् ।

दधाति लोभ एवैको, रङ्गाचार्येषु धुर्यताम् ।
आरङ्कशक्रं यन्नाट्य–पात्राणि भुवनत्रयी ॥१॥[6] २५

---

१ ग--'सौधे' । २ क--'विहाय' । ३ क-'फूत्कारिवदनो' । ४ शिखरिणी ।
५ ख–घ – 'त्रयाश्वो नर०' । ६ अनुष्टुप् ।

एतं च तेषां मन्त्रं **चौलुक्यो**ऽद्यापि न वेत्ति । अतः प्राता राजा **कुमारपालः कलहपञ्चाननं** पट्टहस्तिनं महामात्र**श्यामल**पार्श्वात् पुरः प्रेरयामास । तटस्थांस्तु चेष्टितैर्दुष्टान् निरणैषीत् । नृपेण गदितः **श्यामलः**—किमर्थममी उदासीना इव दृश्यन्ते ? । **श्यामलेन**
५ विज्ञप्तम्— देव ! अरिकृतार्थदानादमी त्वयि द्रोहपराः सम्पन्नाः । राजाऽऽह— तर्हि तव का चेष्टा ? । **श्यामलो**ऽप्यालल्लाप— देव ! एको देवः १, अपरोऽहम् २, अन्यस्तु **कलहपञ्चाननो** हस्ती ३; एते त्रयः कदापि न परावर्त्यन्ते । नृपो वदति—तर्हि सम्मुखीने दृश्यमाने शत्रुनृपसुद्गरघट्टे गजं प्रेरय ।

१० साहसजुत्तइ हल वह(चल ?)इ देवह तणइ कपालि ।
खूंटा विणू खीखइ नही खेडिम(डग ?) खूंटा टालि ॥१॥

तदैव चारण एको न्यगादीत्—

**कुमारपाल** ! मंन चिंत करि चिंतिइ किंपि न होइ ।
जिणि तुहु रज्जु समप्पिउं चिंत करिसइ सोइ ॥१॥

१५ तत् तदीयं वचः श्रुत्वा सुशब्दं मन्यमानः पुरस्थे महाघट्टेऽविशत् । नरसहस्रेण सह भञ्जन् घ्नन् गतो गजारूढः **कुमारपाल आनाक**गजान्तिके । आस्फालितो गजो गजेन । लग्नः करः करेण । आस्फालितौ दन्तौ दन्ताभ्याम् । एकदेहत्वमिव द्वयोरिभयोरभूत् । प्रवृत्तं युद्धं नाराचैः । द्वावपि बलिष्ठौ महोत्साहौ राजेभौ । तथापि
२० **कलहपञ्चानन**श्चीत्कारान् मुञ्चन् पुनः पुनः पश्चान्निवर्त्तते । तदा

---

१ साहसयुक्तेन हलं वह(चल)ति दैवस्य कपाले ।
क्षुपान् विना स्तभ्नाति न कर्षक ! क्षुपान् त्यक्त्वा ॥
इति दि. ब. के. ह. ध्रुव इत्येभिः साक्षरवर्यैः सूचिताच्छाया ।
२ घ–'हलु' । ३-४ घ–'खूंडा' । ५ ग–पुस्तके तु एवम्–
'खेडिम खूंटा टालि खूटा विण खींसइ नही ।
देवहतणइ कपालि साहस जुत्तइहलवलइ ॥ १ ॥'
६ छाया—**कुमारपाल** ! मा चिन्तां कुरु चिन्तया किमपि न भवति ।
येन तुभ्यं राज्यं समार्पितं चिन्तां करिष्यति स एव ॥
७ क–'मनि चिंत्य करि'। ८ ग–'रज्ज'। ९ म–'सिइ सोइ' । १० लोहमयवाणैः ।

**चौलुक्येन श्यामल** ऊचे— कथमयं निवर्तते ?। **श्यामलो** गदति स्म— स्वामिन् ! श्रीजयसिंहदेवे विपन्ने ३० दिनानि पादुकाभ्यां राज्यं कृतम् । 'मालवीय'राजपुत्रेण **चाहडकुमारेण** राज्यं प्रधान-पार्श्वे याचितम् । प्रधानैस्तु [1]परवंश्यत्वान्न दत्तम् । ततो रुष्ट्वा **चाहड आनाकसेवकः** सञ्जातः । स **भगदत्त**नृपवन्महामात्रधुर्यः, अतुलबलः । तस्य सिंहनादेन **कलहपञ्चाननः** क्षुभ्यन् पश्चान्नि-वर्तते । किमत्र क्रियते न विद्मः । **चौलुक्य**स्तदाकर्ण्य द्विपटी विदार्य [2]फालिकद्वयेन द्वौ गजकर्णौ पूरयामास । ततश्चाहडसिंह-नादमशृण्वन् **कलहपञ्चाननः** स्थिरतरः स्थितो गिरिवत् । वर्तते [3]षट्त्रिंशदायुधैर्युद्धम् । चमत्कृते द्वे अपि सैन्ये । उदासीनतया [4]प्रथमं स्थिता 'चौलुकीया'श्चकम्पिरे भयेन अहो एकाङ्गमात्रस्यापि **कुमार-देव**स्यासमसमरसम्प[5]ल्लम्पटत्वम् ! । सैन्ययोर्युद्धमपि निवृत्तम् । तावेव युध्येते । अत्रान्तरे **चौलुक्यो** विद्युदुत्क्षिप्त[6]करणं दत्त्वा [7]**आनाक**गजपतिस्कन्धमारूढः । क्षिप्तौ भुजौ राजोपरि । कसण-कानि च्छुरिकया च्छित्त्वा **आनाकं** सर्ढञ्चक च भूमौ पातयित्वा योक्तृबन्धं क्षिप्त्वा हृदि पादं दत्त्वा छुरीं कराग्रे गृहीत्वा अवा-दीत्—रे वाचाट ! मूढ ! निर्धर्मन् ! पिशाच ! स्मरसि मद्भगि-न्यग्रे 'मारय मुण्डिकान्' इति वदिष्यसि । पूरयामि निजभगिनी-प्रतिज्ञाम् । छिनद्मि ते दुर्वाकूपङ्कदूषितां जिह्वाम् । इत्येव वदति कृतान्तदुष्प्रेक्ष्ये **चौलुक्ये** 'सपादलक्षीयः' किञ्चि[9]न्नोचख्यौ, केवलं तरलतारकाभ्यां चक्षुर्भ्यामद्राक्षीत् । **चौलुक्यो**ऽप्युत्पन्नलोकोत्तर-करुणापरिणामः प्राभाणीत्—रे जाल्म ! मुक्तोऽसि, न भगिनीपति-त्वेन, किन्तु कृपापात्रत्वेन । पूर्वं तव देशे टोपी[10]र्बन्धाग्रभागे जिह्विके

---

१ ग–'परवंशत्वान्न'। २ ख–'फालक०'। ३ एतन्नामार्थं दृश्यतां पद्मानन्दमहा-काव्यस्य परिशिष्ट ( पृ. ५८९–५९० )। ४ ग–'प्रथमस्थिता–'। ५ क–घ–'ल्म्पटत्वम्'। ६ क–'किरणं'। ७ क–'आनक०'। ८ 'दांचो' इति भाषायाम्। ९ क–घ–'नाचख्यात्'। १० ग–'बन्धेऽग्र०'।

आसाताम् । कसा(शा ?)या जिह्वेति सञ्ज्ञा । अत.परं जिह्वाबन्धः पश्चात् करणीयः, अवटोर्जिह्वाकर्षणप्रतिज्ञासिद्धिसूचकत्वात् । एवं श्रुते तथेति प्रतिपेदे **आनाकः** । बलवद्भिः सह का विरोधितेति न्यायात् । काष्ठपञ्जरे क्षिप्तः त्रिरात्रं स्वसैन्ये स्थापितः । जयातोद्या-
५ नि घोषितानि । पश्चात् 'शाकम्भरी'[1]पतिर्विहितः । उत्खातप्रति-[2]रोपितव्रताचार्यो हि **तिहुअणपाल**देवनन्दनः । गम्भीरतया स्वभटा नोपालब्धाः । त्यक्तजीवाशास्ते तं सेवन्ते । [3]मेडतकं सप्तवारं भग्नम् । 'पल्लीकोट'स्थाने आर्दकमुप्तम् । ततः पठितं चारणेन—

[4]**कुमारपाल** रणहट्टि वलिउ कुकरि सइव [5]वैहरणु ।
१० इक्कह पल्ली मट्टि वीसलक्खउ(?) झगडउ कियउ ॥

इति चिरं तस्थौ स तत्र । **श्रीहेमचन्द्रसूरयः** सहैव सन्ति । पृष्टास्ते तेन— भगवन् ! 'मालवीया' राजानो 'गूर्जरा'नागताः प्रासादान् पातयन्ति आत्मख्यातये । तदस्माकमकृत्यम् । केनो-पायेनात्मख्यातिं कुर्मः ? । [6]श्रीहेमसूरिपादैः प्रत्यपादि—राजेन्द्र !
१५ पाषाणमयानि तिलपेषणयन्त्राणि भञ्जय, पुण्यकीर्तिलाभात् । भञ्जितास्ते तेन [7]घाणकाः । अद्यापि भग्नाः पतिताः स्थाने दृश्यन्ते । ततो ववले परराष्ट्रमर्दनः **चौलुक्यः** । आयातः 'पत्तन'म् । [8]भग्नी भर्तृकुले प्रगन्तुमतत्वरत् । न तु सा गता अभिमानात् । तपस्तु तेपे । राजा 'स्तम्भन'पुरे यात्रां सूत्रयामास ।
२० तत्पुरं **पार्श्वदेवाय** ददौ । पुनः 'पत्तन'मैत् । गृहीत-'सपादलक्षा' धिपतिर्लञ्चाद्रव्यान् कुसेवकान् निगृह्य निश्चिन्तीभूतः **श्रीकुमारपालः** श्रीहेमसूरिपादान् पर्युपास्ते, सामायिकपौषधादीन्याचरति ।

एकदा पृष्टं राज्ञा— भगवन् ! इदमपि ज्ञायते यदहं पूर्वभवे

---

१ क-'प्रभु' । २ ख-घ-'रोपिताचार्यो' । ३ क-'मेडंत' ।
४ छाया— कुमारपालो रणहट्टे वलितः..... ।
एकस्य पल्ल्याः कृते कलहः कृतः ॥
५ घ-'वहुरणु' । ६ ग-' गुरुभिरुक्तम्' । ७ 'घाणी' इति भाषायाम् । ८ ख-ग-'भगिनी' । ९ 'लाच' इति भाषायाम् ।

कीदृशोऽभूवम्? । गुरुराह– राजन्! निरतिशयः कालोऽयम्, यत' श्रीवीरमोक्षगमनाद् वर्षाणां चतुःषष्ट्या चरमकेवली जम्बूस्वामी सिद्धिं गतः । तेन समं मनःपर्यवज्ञानम्, परमावधिः, पुलाकलब्धिः, आहारकशरीरम्, क्षपणश्रेणिः, उपशमश्रेणिः, जिनकल्पः, परिहारविशुद्धि-सूक्ष्मसम्पराय-यथाख्यातचारित्राणि, केवलज्ञानम्, सिद्धिगमनं च इति द्वादशस्थानानि 'भरत'क्षेत्रे व्युच्छिन्नानि । सप्तत्यधिके वर्षशते गते स्थूलभद्रे स्वर्गस्थे चरमाणि चत्वारि पूर्वाणि समचतुरस्रसंस्थानं वज्रऋषभनाराचसहननं महाप्राणध्यान व्युच्छिन्नम् । आर्यवज्रस्वामिनि दशमं पूर्वं आद्यसंहननचतुष्कं च व्यपगतम् । ततः परं शनैः शनैः सर्वाणि पूर्वाणि प्रलयं गतानि । [1]सम्प्रति अल्पश्रुत वर्तते तथापि देवतादेशात् किमपि ज्ञायते । राज्ञा विज्ञप्तम्– यथातथा पूर्वभवं ज्ञापयत माम् । गुरुभिः प्रतिपन्नम् । ततः 'सिद्ध'पुरे निर्जराप्ततपोधनैः सह 'सरस्वती'तीर गत्वा विजने ध्याने निषण्णाः । द्वौ मुनी दिग्रक्षायां मुक्तौ । दिनत्रयान्ते [2]विद्यादेव्य आजग्मुः । प्रभूणामग्रे ताभिरुक्तम्—यद् भवतां सत्त्वेन तुष्टाः स्मः, याच्यतां किञ्चित् । सूरिभिरभाणि– कुमारपालस्य प्राग्भवं वदत । ता ऊचु.– 'मेदपाट'परिसरे पर्वतश्रेण्यां 'परमार'पल्लीशो जयताको राज्यमकरोदन्यायी । एकदा धनकनकसमृद्धा [3]बलीवर्दश्रेणी तेन गृहीता । बलीवर्दाधिपतिर्नष्टः । जयताकेन सर्वं लुण्टितम् । 'बलीवर्दा'धिपतिस्तु 'मालव'देश गत्वा राज्ञा सह मिलित्वा सेनां गृहीत्वा तस्यां पल्ल्यां वेष्टमकृत । कीटमारिः कृता । जयताको नष्टः । तस्य भार्या(हस्ते) चटिता । तस्या उदरं विदार्य पुत्रं गर्भमुपले आस्फाल्य [4]वाणिज्यारकोऽवधीत् । 'पल्ली'ग्रामादि प्रज्वाल्य पुन-

---

१ 'सम्प्रति' इत्यधिको ग–पाठः । २ एतन्नामार्थमेतासा प्रतिकृत्यर्थं च प्रेक्ष्यतां श्रीबप्पभट्टिसूरिकृतचतुर्विंशतिका मदीय संस्करणम् । ३ 'बळद' इति भाषायाम् । ४ 'वणजारो' इति भाषायाम् ।

'मालव'देशं गतः । राज्ञा हृष्टेन पृष्टः– कथं कथं विग्रहः कृतः ? ।
वाणिज्यारकेणोक्तम्—स्वामिन् ! तत्पुरं प्रज्वालितम्, जयताको
नष्टः, तत्पत्नी चटिता, सगर्भा हता । राज्ञोक्तम्– त्वया न सुष्ठु
कृतम् । हत्याद्वयं गृहीतम् । अद्रष्टव्यमुखस्त्वं ममान्तिकं त्यज ।
५ निष्कासितः । लोकनिन्दोच्छलिता । तपोवनं गत्वा तपस्विदीक्षा
जगृहे । गाढं तपस्तप्त्वा मृत्वा च वाणिज्यारको जयसिंहदेवो
जातः । जयताकस्तु स्थानभ्रंशं दृष्ट्वा देशान्तरं गतः । अटवीं
गच्छतस्तस्य 'षण्डेर'गच्छस्वामिनः श्रीयशोभद्रसूरयो मिलिताः ।
सूरिभिराभिहितम्— यद् भवतोऽधुना सर्वं गतम्, किमर्थमन्यायं
१० करोषि ?। जयताकेनोक्तम्— 'बुभुक्षितः किं न करोति पापम् ?' ।
ततः सर्वमकृत्यं करोमि । सूरिभिरुक्तम्— अधुना [1]शम्बलादिकं
भोजनादि कारयिष्यते । [2]अनयं मा कृथाः । भोजनवस्त्रादिकं
कस्यापि पार्श्वाद् दापितम् । सार्थे हि तदादेशकारिणो बहवः चौर्य-
नियमं यावज्जीवं ग्राहिताः । स [3]तिलङ्गेषु 'उरङ्गल'पुरे ओढर-
१५ वाणिज्यारकगृहे भोजनादिवृत्त्या भृत्योऽस्थात् । तत्र विहरन् यशो-
भद्रसूरयः प्राप्ताः । चतुष्पथे मिलिता जयताकस्य । श्रावकैरुपा-
श्रयो दत्तः । जयताकेन तत्र गत्वा हृदयशुद्ध्या पुनश्चौर्यनियमो
गृहीतः, अन्येऽपि बहवो [4]ग्राहिता नियमाः । उत्सूरे ओढरगृहं
गतः । ओढरेण पृष्टम्— तव क्व वेला [5]लग्ना ? । त्वां विना
२० कार्याणि सीदन्ति । तेनोक्तम्— मम गुरवः समागताः सन्ति
तत्[6]क्रमकमलवन्दनानन्दमन्वभूवम् । नियमानग्रहीषम् । ओढरे-
णापि समुत्पन्नश्रद्धेन व्याकृतम्— वयमपि गुरून् वन्दिष्यामहे ।
जयताकेनोक्तम्– पुण्यात् पुण्यमिदम् । ओढरस्तत्र गतः । गुरून्
वन्दित्वा न्यषदत् । देशना श्रुता । तत्त्वज्ञानमुन्मीलितम् । श्रावकत्वं
२५ गृहीतम् । पश्चाद् गुरुदक्षिणा गृह्यतामिति ओढरेणोक्ते सूरिभि-

---

१ घ-'शम्बलादि भोजनादि' । २ अनीतिम् । ३ ख-घ-'तिलिङ्गेषु तुर०' । ४ ग-'नियमा गृहीताः' । ५ 'लागी' इति भाषायाम् । ६ चरण० ।

रुक्तम्— वयं निर्ममा निष्परिग्रहा धनादि न गृह्णीमः । अथ तवात्याग्रह एव तर्हि महावीरप्रसादकारापणं दक्षिणाऽस्तु । कारितः प्रासादः । ओढरस्य जयताकेन सह सोदरत्वमिवासीत् ।

एकदा पर्युषणे ओढरः सपरिवारश्चलितो जयताकेन समं देवगृहं प्रति । पुष्पाणि गृहीत्वा ओढरेण देवस्य पूजा कृता, जयताको जजल्पे— इमानि पुष्पाणि मे गृहीत्वा पूजां कुरु । जयताको जगाद— पुष्पाणि भवदीयानि, एभिः पूजायां कृतायां किं मे फलम् ? । विष्टिरेवं केवला । केवलं ममापि पञ्च वराटका सन्ति । तत्पुष्पैः पूजयिष्यामि जिनेन्द्रम् । तथैव पूजितः । जयताको पुण्यमगण्यमुपार्जयत् । तत ओढर-जयताकौ गुरून् वन्दितुं जग्मतुः । उपवासः कृतो जयताकेन । द्वितीयदिने मुनिभ्यो दत्त्वा पारणं कृतम् । एवं पुण्याढ्यः सन् मृत्वा श्रीमूलराजवंशे तिहुअणपालदेवगृहे श्रीकुमारपालोऽभूत् । एवमुक्त्वा विरतासु देवीषु प्रभुभिः प्रोक्तम्— कोऽत्र प्रत्ययः ? । पुनर्देव्यः प्राहुः— उपराजं वदेः नवलक्षतिलङ्गशृङ्गारनगरे 'उरङ्गले' मानवान् प्रेषय । अद्यापि ओढरस्य वंशीयाः सन्ति । तेषां दासी स्थिरदेवी जीर्णवृत्तान्तान् जानाति वक्ष्यति च । इदं श्रुत्वा विसृज्य गच्छन्तीभिर्देवीभिस्तत्रत्ये ओढरगृहे लप्स्यमानानि निधानानि कथितानि । विज्ञाय 'पत्तने' राजान्तिकं गता प्रभवः । पृष्ट तत्र राज्ञा । तथैव राज्ञोऽग्रे न्यगादि । नरप्रेषणात् सर्वं ज्ञातम् । जिनधर्मे स्थैर्यं जातम् । सह सिद्धसेनेनापि वैरकारणमुपलब्धम् । पूर्वभवे गर्भघातान्न सिद्धराजस्य पुत्रः । इति कुमारपालपूर्वभवः ॥

॥ इति हेमसूरिप्रबन्धः ॥ १० ॥

---

१ ग–तर्हि श्रीमहा०' । २ ग–'इमानि मे पुष्पाणि' । ३ 'वेठ' इति भाषायाम् । ४ ग–'वेष्ठिरेव' । ५ ख–'नवलक्षनवशृङ्गार०', घ–'नवलक्षतिलिङ्ग०' । ६ 'जूना' इति भाषायाम् । ७ क-ख–'इत्युक्त्वा देव्यो गताः स्वस्वस्थानम् । पत्तने राजान्तिक' । ८ ग–'सह सिद्धसेनापि' । ९ ग–'सन्तानम्' ।

# [११]

## ॥ अथ श्रीहर्षकविप्रबन्धः ॥

पूर्वस्यां दिशि 'वाराणस्यां' पुरि **गोविन्दचन्द्रो** नाम राजा ७५० अन्तःपुरीयौवनरसपरिमलग्राही । तत्पुत्रो **जयन्तचन्द्रः** ।
५ तस्मै राज्यं दत्त्वा पिता योगं प्रपद्य परलोकमसाधयत् । **जयन्तचन्द्रः** सप्तयोजनशतमाना पृथ्वीं जिगाय । **मेघचन्द्रः** कुमारस्तस्य यः सिंहनादेन सिंहानपि भङ्क्तुमलम्, किं पुनर्मदान्धगन्धेभघटाः ? । तस्य राज्ञश्चलतः सैन्यं 'गङ्गा'-'यमुने' विना नाम्भसा तृप्यति । नदीद्वययष्टिग्रहणात् 'पङ्गुलो' राजेति लोके श्रूयते । यस्य **गोमती**-
१० दासी षष्टिसहस्रेषु वाहेषु प्रक्षरां(रं) निवेश्याभिषेणयन्ती परचक्रं त्रासयति । राज्ञः श्रम एव कः ? । तस्य राज्ञो बहवो विद्वांसः । तत्रैको **हीरनामा** विप्रः । तस्य नन्दनः प्राज्ञचक्रवर्ती **श्रीहर्षः** । सोऽद्यापि बालावस्थः । सभायां राजकीयेनैकेन पण्डितेन वादिना **हीरो** राजसमक्षं जित्वा मुद्रितवदनः कृतः । लज्जापङ्के मग्नः । वैरं
१५ बभार धारालम् । मृत्युकाले **श्रीहर्षं** स बभाषे— वत्स ! अमुकेन पण्डितेनाहमाहत्य राजदृष्टौ जितः । तन्मे दुःखम् । यदि सत्पुत्रोऽसि तदा तं जयेः क्ष्मापसदसि । **श्रीहर्षेणोक्तम्**— ओमिति । **हीरो** द्यां गतः । **श्रीहर्षस्तु** कुटुम्बभारमाप्तदायादेष्वारोप्य विदेशं गत्वा विविधाचार्यपार्श्वेऽचिरात् तर्का-ऽलङ्कार-गीत-गणित-चूडा-
२० मणि-मन्त्र-व्याकरणादीः सर्वा विद्याः सस्फुराः प्रजग्राह । 'गङ्गा-तीरे सुगुरुदत्तं 'चिन्तामणि'मन्त्रं वर्षमप्रमत्तः साधयामास । प्रत्यक्षा **त्रिपुरा**ऽभूत् । अमोघादेशत्वादिवराप्तिः । तदादि राजगोष्ठीषु भ्रमति । अलौकिकोल्लेखशिखरितं जल्पं करोति यं कोऽपि न बुध्यते, ततोऽतिविद्ययाऽपि लोकागोचरभूतया खिन्नः । पुन-

---

१ ग–'अथ हर्ष०' । २ घ–'पूर्वस्यां वारा०' । ३ घ–'तृप्यतीति' । ४ तुरङ्गसन्नाहम्, 'पाखर' इति भाषायाम् । ५ खड्गस्य धारावत्, तीव्रम् ।

**भारतीं** प्रत्यक्षीकृत्याभणत्—मातः ! अतिप्रज्ञाऽपि दोषाय मे जाता । बुध्यमानवचनं मां कुरु । ततो देव्योक्तम्— तर्हि मध्यरात्रेऽम्भःक्लिन्ने शिरसि दधि पिब । पश्चात् स्वपिहि । कफांशावताराज्जडतालेशमाप्नुहि । तथैव कृतम् । बोध्यवागासीत् । खण्डनादिग्रन्थान् परःशताञ्जग्रन्थ । कृतकृत्यीभूय 'कासी'मायासीत्[1] । ५
नगरतटे स्थितः **जयन्तचन्द्र**मजिज्ञपत्— अहमधीत्यागतोऽस्मि । राजाऽपि गुणस्नेहलो हीरजेतृपण्डितेन सह सचातुर्वर्ण्यः पुरीपरिसरमसरत । **श्रीहर्षो** नमस्कृतः । तेनापि यथार्हमुचितं लोकाय कृतम् राजानं त्वेवं तुष्टाव—

> **गोविन्द**नन्दनतया च वपुःश्रिया च १०
> माऽस्मिन् नृपे कुरुत कामधियं तरुण्यः ।
> अस्त्रीकरोति जगतां विजये स्मरः स्त्री-
> रस्त्रीजनः पुनरनेन विधीयते स्त्री ॥१॥[2]

व्याचख्यौ च तारस्वरं सरसविस्तरम् । तुष्टा सभा राजा च । पितृवैरिणं तु वादिन दृष्ट्वा सकटाक्षमाचष्टे[3]— १५

> साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
> तर्के वा मयि संविधातरि समं लीलायते **भारती** ।
> शय्या वाऽस्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता
> भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम् ॥१॥[4]

एतच्छ्रुत्वा स वादी प्राह—देव ! वादीन्द्र ! **भारतीसिद्धः** तव २०
समो कोऽपि न, किं पुनरधिकः[5] ! ।

> **हिंस्राः** सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्धता-
> स्तस्यैकस्य पुनः स्तवीमहि महः सिंहस्य[6] विश्वोत्तरम् ।
> केलिः कोलकुलैर्मदो मदकलैः[7] कोलाहलं नाहलैः[8]
> संहर्षो महिषैश्च यस्य मुमुचे साहङ्कृतेर्हुङ्कृतेः ॥१॥[9] २५

---

१ क–'काशीमायासीत्' । २ वसन्त० । ३ घ–'चचक्षे' । ४ शार्दूल० । ५ घ–'न त्वधिकः' । ६ वराह० । ७ मदोन्मत्तगजैः । ८ म्लेच्छविशेषैः । ९ शार्दूल० । चतुर्विंशति० १५

इदं श्रुत्वा **श्रीहर्षो** निष्क्रोध इवासीत् । भूपेनोक्तम्—अत्र **श्रीहर्षे** इदमेव वक्तुमर्हम् । प्रतिवादीनां कोऽर्थः ? । सम्यगवसर-मज्ञासीः । श्रीहीरवैरिन्नित्यर्थः । अन्योन्य गाढालिङ्गनमचीकरद् द्वयोरपि वसुन्धरासुधांशुः । विस्तरेण सौधमानीय माङ्गलि-
५ कानि कारयित्वा गृहं प्रति प्रहितः । लक्षसङ्ख्यानि हेमानि ददिरे । निश्चिन्तीकृत्यैकदा मुदा नृपेणोक्तः कवीशः— वादीन्द्र ! किञ्चित् प्रबन्धरत्नं कुरु । ततो **नैषधं** महाकाव्यं बद्धं दिव्यरसं महागूढव्यङ्ग्यभारसार राज्ञे दर्शितम् । राज्ञोचे— सुष्ठुतममिदम्, परं 'काश्मीर' व्रज । तत्रत्यपण्डितेभ्यो दर्शय । **भारती**हस्ते च
१० मुञ्च । **भारती** च तत्र पीठे स्वय साक्षाद् वसति । असत्यं प्रबन्धं हस्ते न्यस्तमवकरनिकरमिव दूरे क्षिपति, सत्यं तु मूर्धधूननपूर्व सुष्ठु इत्युरीकरोति । उपरितः पुष्पाणि पतन्ति । **श्रीहर्षो** राजदत्तार्थनिष्पन्नविपुलसामग्रीकः 'काश्मीरा'नगमत् । **सरस्वती**-हस्ते पुस्तक न्यास्थत् । **सरस्वत्या** दूरे क्षिप्त तत् । **श्रीहर्षेण**
१५ कथितम्— कि जरतीति विकलाऽसि यन्मदुक्तमपि प्रबन्धमितर-प्रबन्धमिव मन्यसे ? । **भारत्याह**— भो परमर्मभाषक ! न स्मरसि यदत्रोक्तं त्वया एकादशे सर्गे चतुःषष्टितमे काव्ये—

'देवी पवित्रितचतुर्भुजवामभागा
वागालपत् पुनरिमां गरिमाभिरामाम् ।
२० 'एतस्य निष्कृपकृपाणसनाथपाणेः
पाणिग्रहादनुगृहाण गणं गुणानाम्' ॥१॥[३]

एवं मा विष्णुपत्नीत्वेन प्रकाश्य लोके रूढं कन्यात्व लुप्तवानसि, ततो मया पुस्तकं क्षिप्तम् ।

याचको वञ्चको व्याधिः, पञ्चत्वं मर्मभाषकः ।
२५ योगिनामप्यमी पञ्च, प्रायेणोद्वेगहेतवः ॥२॥[४]

---

१ घ–' केवलं काश्मीरं ' । २ ग–' अस्यारि निष्कृप० ' । ३ वसन्त० । ४ अनुष्टुप् ।

इति वाग्देवीवाचं श्रुत्वा **श्रीहर्षो** वदति— किमर्थमेकस्मिन्नवतारे **नारायणं** पतिं चकृषी, त्वं पुराणेष्वपि **विष्णुपत्नी**ति पठ्यसे। ततः [1]'सत्यं किमिति कुप्यसि ?। कुपितैः किं [2]छुट्यते कलङ्कात् ?। इति श्रुत्वा स्वयं गृहीत्वा पुस्तकं हस्ते धारितम्। ग्रन्थश्च श्लाघितः सभासमक्षम्। **श्रीहर्षेण** पण्डिता उक्तास्तत्रत्याः— ग्रन्थमत्रत्याय राज्ञे **माधवदेव**नाम्ने दर्शयत। **श्रीजयन्तचन्द्राय** च शुद्धोऽयं ग्रन्थ इति लेखं प्रदत्त। इति श्रुतेऽपि ग्रन्थे **भारत्य**भिमते ज्ञातेऽपि ते लेखं न ददते, न भूपं दर्शयन्ति। स्थितः **श्रीहर्षो** बहून् मासान्। जग्धं पाथेयम्। विक्रीतं वृषभादि। मितीभूतः परिच्छदः। ५ १०

एकदा नद्यासन्नदेशे कूपतटासन्नतमे देवकुले रुद्रजपं रहः करोति। तत्रागते कयोश्चिद् गृहिणोरुल्लण्ठे चेट्यौ। जलप्रथमपश्चाद्ग्रहणघटभरणविषये वादे लग्ने। तयोश्चिरमुक्तिप्रत्युक्तिरभूत्। शीर्षाणि स्फुटितानि घातप्रतिघातैः। गते राजकुलम्। राजा साक्षिणं गवेषयति। उक्ते ते— अत्र कलहे कोऽपि साक्षी विद्यते न वा ?। ताभ्यां जगदे—विप्र एकस्तत्रास्ते जपतत्परः। गता राजकीयाः। आनीतः **श्रीहर्षः** पृष्टस्तयोर्नयानयौ। **श्रीहर्षेण** गीर्वाणवाण्योक्तम्— देव! वैदेशिकोऽहम्। न वेद्मि किमप्येते प्राकृतवादिन्यौ ब्रूतः; केवलं तान् शब्दान् वेद्मि। राज्ञोक्तम्— ब्रूहि। तत्क्रमस्थमेव तद्भाषितप्रतिभाषितशतमभिहितमनेन। राजा चमत्कृतः। अहो प्रज्ञा! अहो अवधारणा! दास्योर्वादं निर्णीय यथासम्भवं निग्रहानुग्रहौ कृत्वा प्रहित्य **श्रीहर्ष**मपृच्छद् राजा— कस्त्वमेवं मेधिरशिरोमणिः ?। **श्रीहर्षे**णोऽक्तं सर्वं कथानकं स्वम्। राजन्! पण्डितकृतदौर्जन्यात् तव पुरे दुःखी तिष्ठामि। सम्यक्पारम्पर्यज्ञो राजा पण्डितानाहूयावादीत्— धिग् मूढाः! ईदृशेऽपि रत्ने न स्निह्यथ ?। १५ २० २५

---

१ ख—'सत्ये किमति०'। २ 'छूटाय छे' इति भाषायाम्।

वरं प्रज्वालिते वह्नौ—वह्नाय निहितं वपुः ।
न पुनर्गुणसम्पन्ने, कृतः स्वल्पोऽपि मत्सरः ॥१॥[१]
वरं सा निर्गुणाऽवस्था, यस्यां कोऽपि न मत्सरी ।
गुणयोगे[२] तु वैमुख्यं, प्रायः सुमनसामपि[३] ॥२॥[४]

५ तस्मात् खला यूयम् । गच्छत एतं महात्मानं प्रत्येकं स्वगृहेषु[५] सत्कुरुत । तदा श्रीहर्षः प्रागदीत्[६]—

यथा यूनस्तद्वत्परमरमणीयाऽपि रमणी
कुमाराणामन्तःकरणहरणं केव कुरुते ।
मदुक्तिश्चेतश्चेन्मदयति सुधीभूय सुधियः
१० किमस्या नाम स्यादरसपुरुषाराधनरसैः ? ॥१॥[७]

इति ललज्जिरे[८] पण्डिताः । सर्वे गृहं नीत्वा सत्कृत्यानुनीय राज्ञा च सत्कार्यैश्च प्रहितः श्रीहर्षः 'कासी(शी ?)'म् । मिलितो जयन्तचन्द्राय । उक्तं सर्वम् । तुष्टः सः । प्रसृतं नैषधं लोके ।

अत्रान्तरे जयन्तचन्द्रस्य पद्माकरनामा प्रधाननरः श्री'अण-
१५ हिलपत्तनं' गतः । तत्र सरस्तटे रजकक्षालितायां शाटिकायां केतक्यामिव मधुकरकुलं निलीयमानं दृष्ट्वा विस्मितोऽप्राक्षीद्[९] रजकम्— यस्या युवतेरियं शाटी तां मे दर्शय । तस्य हि मन्त्रिणस्तत्पद्मिनीत्वे निर्णयस्थं मनः । रजकेन सायं गत्वा तस्मै तद्गृहं नीत्वा तामर्पयित्वा तत्स्वामिनी सूहवदेविनाम्नी शालापतिपत्नी
२० विधवा यौवनस्था स्वरूपा दर्शिता । तां श्रीकुमारपालराजपार्श्वादुपरोध्य तद्गृहान्नीत्वा सोमनाथयात्रां कृत्वा 'कासीं' गतः । तां पद्मिनीं जयन्तचन्द्रभोगिनीमकरोत् । सूहवदेविरिति ख्यातिमगात् । सा च सगर्वा विदुषीति कृत्वा 'कलाभारती'ति

---

१ अनुष्टुप् । २ सूत्रसम्बन्धे इति पक्षान्तरे । ३ पुष्पाणाम् इति पक्षान्तरे । ४ अनुष्टुप् । ५ क–'स्वस्वगृहेषु' । ६ घ–'प्रागदत्' । ७ शिखरिणी । ८ ख-ग–घ–'लज्जिरे' । ९ ग–'प्राक्षद्' ।

पाठयति लोके । श्रीहर्षोऽपि 'नरभारती'ति पठ्यते[1] । तस्य तन्न सहते सा मत्सरिणी ।

एकदा ससत्कारमाकारितः श्रीहर्षः । भणितश्च— त्वं कः ? । श्रीहर्षः— कलासर्वज्ञोऽहम् । राज्ञाऽभाणि— तर्हि मामुपानहौ परिधापय । को भावः ? । यद्ययं न वेद्मि इति भणति द्विजत्वात् तर्हि अज्ञः । श्रीहर्षेणाङ्गीकृतम् । गतो निलयम् । तरुवल्कलैस्तथा तथा परिकर्मितैः सायं लोलाक्षः सन् दूरस्थः स्वामिनीमाजूहवत् । चर्मकारविधिनोपानहौ पर्यदीधपत् । 'अभ्युक्षणं[2] निक्षिपध्वं चर्मकारोऽहमिति वदन् । राजानमपि तत्कृता कुचेष्टां ज्ञापयित्वा खिन्नो 'गङ्गा'तीरे संन्यासमग्रहीत् । सा च सूहवदेविः साम्राज्येशा पुत्रमजनयत् । सोऽपि यौवनमाससाद । धीरः, परं दुर्नयमयः[3] । तस्य च राज्ञो विद्याधरमन्त्री । स च चिन्तामणिविनायकप्रसादात् सर्वधातुहैमत्वकरणप्रख्यातमाहात्म्यस्पर्शपाषाणलाभात् ८८०० विप्राणां भोजनं दाता, इति 'लघुयुधिष्ठिर'तया ख्यातः । कुशाग्रीयप्रज्ञः । राजा तं जगदे— राज्यं कस्मै कुमाराय ददामि ? । मन्त्र्याह— मेघचन्द्राय सुवंशाय देहि, न पुनर्भृतापुत्राय । राजा तु तया कार्मणितस्तत्पुत्रायैव दित्सति । एवं विरोध उत्पन्नो मन्त्रि-राज्ञोः । कथङ्कथाञ्चिन्मन्त्रिणा राज्ञीवाचमप्रमाणीकार्य भूपो मेघचन्द्रकुमाराय राज्यदानमङ्गीकारितः । राज्ञी क्रुद्धा । धनाढ्यतया स्वच्छन्दतया निजप्रधाननरान् प्रेष्य 'तक्षशिला'ऽधिपतिः सुरत्राणः[4] 'कासी'-भञ्जनाय प्रयाणे प्रयाणे सपादलक्षहेमदानेन चालित आयाति । तत् तु विद्याधरेण चरदृशा विदितम् । राज्ञे कथितम् । राजा तत्कार्मणोदिङ्मूढः[5] प्राह—ममेयं वल्लभेश्वरी नैवं पतिद्रोहं समाचरति । मन्त्री तु वदति— राजन् ! अमुकप्रयाणे तिष्ठति शाखीन्द्रः[6] । राज्ञा हक्कितो गतो गृहम् । चिन्तितं च तेन— नृपस्तावन्मूढः ।

---

१ ग-'पाठते' । २ सिञ्चनम् । ३ ख-'दुर्णय०' । ४ 'सुल्तान' इति भाषायाम् । ५ घ--'दृढमूढः' । ६ ख-'साखीन्द्रः' ।

राज्ञी बलवती, लब्धप्रसरा, अविवेकिनी । मम मरणं यदि स्वामि-
मरणादर्वाग् भवेत् तदा धन्यता । प्रातश्चलितो मन्त्री स्वसदनात्।
पथि गच्छन्तं [1]पिण्याकं दृष्ट्वा तमजिघ्रसिषत् । पुनः पुरो गतः ।
स्फुटितचनकपिटकमालोक्य तददने मनोऽदधत् । तेन कुचेष्टाद्द-
५ येनात्मनो विधिवैपरीत्यं निर्णीयोपराजं गत्वा [2]व्यज्ञपत्– देव ! अहं
'गङ्गा'जले मङ्क्त्वा म्रिये, यद्यादिशसि । राजाऽऽख्यत्—यदि
म्रियसे तदा सुखेन जीवामः । कर्णज्वरो निवर्तते । मन्त्री दूनः
हुं हितवचनानाकर्णनम्, अनये वृत्तिः, प्रियेष्वपि द्वेषः, निज-
गुरुजनेऽप्यवज्ञा, मृत्योः किल पूर्वरूपाणि । आगतं राज्ञो मर-
१० णम् । राजानमापृच्छ्य गृहं गत्वा सर्वस्वं द्विजादिलोकाय प्रदाय
भवविरक्तो 'जाह्नवी'जलमध्यं प्रविश्य कुलपुरोहितमाह— दानं
गृहाण । विप्रेणापि करः प्रसारितः । दत्तः स्पर्शपाषाणः । तेनो-
क्तम्– धिक् ते दानं यद् ग्रावाणं दत्से । इति क्रुद्धेनान्तरुदकं
चिक्षिपे । सोऽश्मा गङ्गादेव्या लले । मन्त्री जले मङ्क्त्वा मृतः ।
राजाऽनाथो जातः । सुरत्राण आयातः । नगरे भाण्डं भाण्डेन
१५ स्फुटितम् । राजा युद्धायाभिमुखमागात् । [3]८४०० एतावन्ति
निस्वानानि निजदले, परं एकस्यापि निस्वानस्वनं राजा न शृणोति ।
आपृच्छच्च तटस्थान् । तैर्बभणे– म्लेच्छधनुर्ध्वानेषु मग्नानि ध्वाना-
न्तराणि । राजा हृदये[4]ऽहारयत् । ततो न ज्ञायते किं हतो गतो
मृतो वा[5] । यवनैर्लाता पूः ॥

२० ॥ इति श्रीहर्ष-विद्याधर-जयचन्द्रप्रबन्धः ॥ ११ ॥



१ तिलकल्कम्, 'खोळ' इति भाषायाम् । २ क–'व्यज्ञपयत्' । ३ घ– '८४०० निस्वानस्वन ' । ४ ख--ग -'हारयामास'। ५ 'गङ्गानलेऽपतत्' इत्यधिको ग–पाठः।

## [ १२ ]

## ॥ अथ हरिहरप्रबन्धः ॥

'श्रीहर्ष'वंशे **हरिहरः** गौडदेश्यः सिद्धसारस्वतः । स 'गूर्जर'-धरां प्रत्यचालीत् । अश्वशतद्वयं, मानवानां शतपञ्चकं, करभाः पञ्चाशत् । [1]अनिवारमन्नदानं 'धवलक्क'[2]तटग्राममागात् । राणश्री- ५ **वीरधवल-श्रीवस्तुपाल-श्रीसोमेश्वरदेवे**[3]भ्यः पृथक् पृथक् आशीर्वादं प्रागल्भबटुहस्तेन प्राहैषीत् । **श्रीवस्तुपालो** जहर्ष । उत्थाय बटुं सह नीत्वा **श्रीवीरधवलाय** पण्डितस्याशीर्वादमदीदृशत् । तद्-गुणांश्चावर्णयत् । राणकेनोक्तम्— किमत्र युक्तम् ? । मन्त्र्याह— देव ! विस्तरेण प्रातः पण्डितस्य प्रवेशमहोत्सवः क्रियते । विपुलं १० देयं दीयते । राणकेनोक्तम्— न्याय्यम्, ततो निवृत्तौ मन्त्रिराजश्च बटुश्च । बटुना तृतीयाशीर्वादः पण्डित**सोमेश्वरदेवा**यादर्शि । कवितया तस्य मात्सर्यमदीपिष्ट । स निश्वासमधोऽद्राक्षीत् । [4]बटु-मालापीदपि न । आगत उत्थाय बटु**र्हरिहरा**न्तिकम् । उक्तं राणक-मन्त्रिणोः सौमनस्यं, **सोमेश्वरस्य** तु दौर्मनस्यम् । कुपितः **सोमे-** १५ **श्वरदेवे** हरिहरः । जातं प्रातः । राणकः समन्त्रिकः सचातुर्वर्ण्यः सर्वर्द्ध्या सम्मुखो गतः । मिलितो **हरिहरः** । तत्र **वीरधवलं** प्रति—

शम्भु'र्मानस'सन्निधौ सुरधुनीं मूर्ध्ना दधानः स्थितः
[5]श्रीकान्तश्चरणस्थितामपि वहन्नेतां निलीनोऽम्बुधौ । २०
मग्नः पङ्करुहे कमण्डलुगतामेनां दधन्नाभिभू-
[6]र्मन्ये वीर ! तव प्रतापदहनं ज्ञात्वोल्बणं भाविनम् ॥ १ ॥[7]

दृष्टस्तेन शरान् किरन्नभिमुखः क्षत्रक्षये **भार्गवो**
दृष्टस्तेन निशाचरेश्वरवधव्यग्रो **रघुग्रामणीः** ।

---

१ ख–'अन्नगार०' । २ ग–'धवलक्कनट०' । ३ क–'देवयोः' । ४ ख–ग–'बटुश्माला०' । ५ विष्णुः । ६ ब्रह्मा । ७ शार्दूल०

दृष्टस्तेन जयद्रथप्रमथनोन्निद्रः[1] सुभद्रापतिः
दृष्टो येन रणाङ्गणे सरभसश्चौलुक्यचूडामणिः ॥२॥[2]

बटुः पृष्टः पण्डितेन—अत्र सदसि सोमेश्वरोऽस्ति न वा ? । बटु-
राह—स क्रोधान्नागतः । पण्डितो ज्ञात्वाऽस्थात् । जातः प्रवेशः ।
५ राणकेन दत्तं सौध-धन-कुप्य-वसन-परिजन-तुरगादि चमत्कारम्[3] ।
अथ मन्त्रिगृहं गतोऽसौ । गुर्वी सभा । मन्त्र्यभ्युत्थानं चक्रे ।
ऊचे च—

मुधा मधु मुधा सीधु, मुधा सोऽपि सुधारसः ।
आस्वादितं मनोहारि, यदि हारिहरं वचः ॥ १ ॥[4]

१० पण्डितस्तूचे—देव ! लघुभोजराज ! विचारचतुर्मुख ! सरस्वती-
कण्ठाभरण ! अवधारय वयं पण्डिताः, अस्माकं माता भारती,
सा च त्रिभुवनचारिणी ।

एकदा भारत्या सह महेन्द्रस्य सभामगमाम । सा च 'सुधर्मा'
नाम । इन्द्रः श्रीमान् । ३ कोट्यः सुराङ्गनाः । ८४ सहस्राणि
१५ सामानिकाः । तथा

[5]द्वादशार्का वसवो[6]ऽष्टौ, विश्वेदेवास्त्रयोदश[7] ।
षट्त्रिंशत् तुषिताश्चैव, [8]षष्टिराभास्वरा अपि ॥ १ ॥[9]
षट्त्रिंशदधिके [10]मोहा—राजिकाश्च शते उभे ।

---

१ क–'निद्रः' । २ शार्दूल० । ३ क–'चमुत्कारम्' । ४ अनुष्टुप् ।
५ "धाता मित्रोऽर्यमा रुद्रो, वरुणः सूर्य एव च ।
भगो विवस्वान् पूषा च, सविता दशमः स्मृतः ॥
एकादशस्तथा त्वष्टा, विष्णुर्द्वादश उच्यते ।"
६ "धरो ध्रुवश्च सोमश्च, अहश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च, वसवोऽष्टाविति स्मृताः" ॥
७ "वसुः सत्यः क्रतुर्दक्षः, कालः कामो धृतिः कुरुः ।
पुरूरवा माद्रेयश्च, विश्वेदेवाः प्रकीर्तिताः ॥"
८ घ–'वृष्ठरामा०' । ९ अनुष्टुप् । १० घ–'महा०' ।

रुद्रा [1]एकादशैकोनं-पञ्चाशद् वायवोऽपि च ॥ २ ॥[2]

चतुर्दश तु वैकुण्ठाः, सुशर्माणः पुनर्दश ।

साध्याश्च द्वादशेत्याद्याः, प्रसिद्धा गणदेवताः ॥ ३ ॥[4]

[5]एतत्समृद्धिस्वरूपं विलोक्य वयं विस्मिताः स्थिताः । अहो तपः-फलभोग [6]इत्यादि चिन्तयन्तो यावता स्मः । अत्रान्तरे आगतस्तत्र ५ [7]कश्चन [8]बुम्बां पातयन्नाह—

---

१ "अजै-कपाद-ऽहिब्र(र्बु)ध्न-स्त्वष्टा रुद्रश्च वीर्य्यवान् ।
त्वष्टुश्चाप्यात्मजः पुत्रो, विश्वरूपो महातपाः ॥
हरश्च बहुरूपश्च, त्र्यम्बकश्चापराजितः ।
वृषाकपिश्च शम्भुश्च, कपर्दी रैवतस्तथा ॥
एकादशैते कथिता, रुद्रास्त्रिभुवनेश्वराः ।"

इति **गरुडपुराणे** षष्ठेऽध्याये । अजः, एकपात्, अहिब्र(र्बु)ध्नः, पिनाकी, अपराजितः, त्र्यम्बकः, महेश्वरः, वृषाकपिः, शम्भुः, हरणः, ईश्वर इति **महाभारते** दानधर्माधिकारे ।

२ "एकज्योतिश्च द्विज्योंति-स्त्रिज्योतिर्ज्योतिरेव च ।
एकशक्रो द्विशक्रश्च, त्रिशक्रश्च महाबलः ॥
इन्द्रश्च गत्यदृश्यश्च, ततः पतिसकृत्परः ।
मितश्च सम्मितश्चैव, सुमितश्च महाबलः ॥
ऋतजित् सत्यजिच्चैव, सुषेणः सेनजित् तथा ।
अन्तिमित्रोऽनमित्रश्च, पुरुमित्रोऽपराजितः ॥
ऋतश्च ऋतवाहश्च, धर्ता च धरुणो ध्रुवः ।
विधारणो नाम तथा, देवदेवो महाबलः ॥
ईदृक्षश्चाप्यदृक्षश्च, एते दश मिताशिनः ।
प्रतिनः प्रसदृक्षश्च, सभरश्च महायशाः ॥
धाता दुर्गो धितिर्भीम- स्त्वभियुक्तस्त्वपात् सहः ।
द्युतिर्वपुरनाप्योऽथ, वास- कामो जयो विराट् ।
इत्येकोनाश्च पञ्चाशन्-मरुतः पूर्वसम्भवाः ॥"

इति **वह्निपुराणे** गणभेदनामाध्याये ।

३-४ अनुष्टुप् । ५ ग-पुस्तके ' एतद्० विलोक्य ' एतदधिकम् । ६ ग-पुस्तके 'इत्यादि० स्मः' एतदधिकम् । ७ ग-'कोऽपि' । ८ घ-'बुम्बावक्त्रः' । ९ 'बूम पाडतो' इति भाषायाम् ।

देव ! स्वर्नाथ ! कष्टं ननु क इह भवा'न्नन्दनो'द्यानपालः
खेदस्तत् कोऽद्य केनाप्यहह हृत इतः काननात् कल्पवृक्षः ।
हुं मा वादीस्तदेतत् किमपि करुणया मानवानां मयैव
प्रीत्याऽऽदिष्टोऽयमुर्व्यास्तिलकयति तलं वस्तुपालच्छलेन ॥१॥[1]

५ एवं तत्रालापं श्रुत्वा विस्मितोऽहं भारत्या सह पञ्चकल्पद्रुमं त्वां द्रष्टुमागाम् । एवं विस्तरं काव्यं व्याख्याय स्थितः पण्डितः । मन्त्री यावत् किं ददामि इति चिन्तयति तावद् 'डोडीया'वंश्यराण-श्रीसदेवेन जात्या वाहनोत्तीर्णाश्चतुर्विंशतिरश्वा एकं च दिव्यं पदकं प्राभृतमानीतम् । तदेव पण्डिताय सर्वं दत्तम् । तुष्टोऽसौ पञ्चम-
१० कल्पतरुर्भवसि इत्युक्त्वा स्वोत्तारकमगात् ।

गतेषु कतिपयेष्वहःसु मिलितायां समायां पुरःस्थे सोमेश्वरे राणकेन पण्डितहरिहर उक्तः— पण्डित ! अत्र पुरेऽस्माभि'र्वीर-नारायणा'ख्यः प्रासादः कारितोऽस्ति । तत्प्रशस्तिकाव्यान्यष्टोत्तरं शतं सोमेश्वरदेवपार्श्वात् कारितम् । तत्र भवन्तोऽवदधतु । यथा शुद्धत्वे
१५ निश्चयो भवति ज्ञान(ना?)म्[2] । महालक्ष्मीदृष्टौ नाणकपरीक्षा यतः । हरिहरेणोक्तम्—कथाप्यतां तानि । उक्तानि सोमेश्वरेण तानि । श्रुत्वा तानि हरिहर ऊचे—देव ! सुष्ठु काव्यानि परिचितानि च नः । यतो 'मालवीये' 'धूजयन्तीं' गतैरस्माभिः 'सरस्वतीकण्ठाभरण'-प्रासादगर्भगृहे पट्टिकायां श्रीभोजदेववर्णनाकाव्यान्यमून्यदृक्षत ।
२० यदि तु प्रत्ययो नास्ति तदा परिपाट्या श्रूयताम्[3] । इत्युक्त्वा क्रमेणा-स्खलितान्यपाठीत् । खिन्नो राणकः । प्रीताः खलाः । व्यथिताः श्रीवस्तुपालादयः सज्जनाः । उत्थिता सभा । हत इव मृत इव स्तम्भित इव जडित इव जातः सोमेश्वरः । गतः स्वगृहम् । ह्रिया वदनं न दर्शयति गृहेऽपि, का कथा राजादिसदनगमनस्य ? ।
२५ अथ सोमेश्वरः श्रीवस्तुपालमन्दिरं गत्वोवाच—मन्त्रिन् ! ममैव तानि काव्यानि, नान्यथा; मम शक्तिं जानासि त्वम् । हरिहरस्त्वेवं

---

१ स्रग्धरा । २ 'नाणुं' इति भाषायाम् । ३ क—'श्रूयन्ताम्' ।

मां न्यजूगुपत् । किमहं करोमि ? । मन्त्र्याह — तमेव शरणं श्रय । यतः— 'भजते विदेशमधिकेन जितस्तदनुप्रवेशमथवा कुशलैः' इति न्यायात् । पण्डितः— तर्हि मां नय । तथा कृतं मन्त्रिणा । पण्डितसोमेश्वरं बहिरासयित्वा मन्त्री स्वयं हरिहरा- न्तिकमगात् । बभाण च—पण्डितसोमेश्वरदेवस्तवान्तिकमागतोऽ- ५ स्ति विज्ञीप्सुः । हसितो हरिहरः । आनीनयत् स्वसमीपम् । चकाराभ्युत्थाना-ऽऽलिङ्गन-महासनादिसत्कारम्। सोमेश्वरेणोक्तम्— पण्डित ! निस्तारय मामस्मात् परकाव्यहरणकलङ्कपङ्कात् । यतः—

आगतस्य निजगेहमध्यरे—गौरवं विदधते महाधियः । १०
मीनमात्मसदनं समेयुषो, गीष्पतिर्व्यधित तुङ्गतां कवेः ॥१॥[1]

तुष्टो हरिहरो भणति स्म—मा स्म चिन्तां विधाः । पुनर्गौरव- मारोपयिताऽस्मि त्वाम् । गतः स्वस्थानं मन्त्री सोमेश्वरश्च । प्रत्यूषे राणकसभाभरे सोमेश्वर आह्वायितः । प्रस्तावना चारब्धा । यथा— जयति परमेश्वरी भारती यत्प्रसादादेवं मम शक्तिः । श्रीवस्तुपाले- १५ नोक्तम्— किं किम् ? । हरिहरः—देव ! मया 'कावे(वे?)री'नदीतटे 'सारस्वत'मन्त्रः साधितः । होमकाले गीर्देवी प्रत्यक्षाऽऽसीत् । वरं वृणीष्वेत्याह स्म । मया जगदे—जगदेकमातः ! यदि तुष्टाऽसि तदा एकदा भणितानां १०८ सङ्ख्यानां ऋचां पट्पदानां काव्यानां वस्तुकानां घत्तानां[2] दण्डकानां वाऽवधारणे समर्थो २० भूयासम् । देव्याचष्ट— तथाऽस्तु । ततःप्रभृति यो यदाह १०८ तत् तु ब्रुवे, यथेदं सोमेश्वरदेवोपज्ञ काव्याष्टोत्तरशतम् । राणकेनोक्तम्— प्रत्ययः कार्यताम् । भाणितान्यष्टोत्तरशतानि तत्तच्छन्दसां प्रतिभाणितानि च हरिहरेण तानि । जातो निश्चयः पण्डितहरिहरवचने । क्षुत्तृष्णातपप्रभृतिचिन्तानपेक्षः स्थितो २५

---

१ रथोद्धता' । २ घ्र--'घतानां' ।

लोकः। राणकेश्वरेण[1] बभणे—तर्हि पण्डित! कथमेवं दूषितः **सोमेश्वरः**?। **हरिहरः** प्राभापत—देव! राणेन्द्र! पण्डितेन मय्यवज्ञा दध्रे तत्फलमिदं ददे। यतः—

प्रियं वा विप्रियं वाऽपि, सविशेषं परार्पितात्।
५ प्रत्यर्थयन्ति ये नैव, तेभ्यः साऽप्युर्वरा वरा ॥ १ ॥[2]

राणः प्राह-तर्ह्यस्त्वेवम्, परं मिथः सरस्वतीपुत्रयोः स्नेहो युक्तः। इत्युक्त्वा कण्ठग्रहणमकारयत्। स्थितो निष्कलङ्कः **सोमेश्वरः**। वर्तते नित्यमिष्टगोष्ठी। **हरिहरो नैषध**काव्यान्यवसरोचितानि पठति। श्री**वस्तुपालः** प्रीयते- अहो अश्रुतपूर्वाणि काव्यान्यमूनि!।

१० एकदाऽऽलापितः[3] पण्डित**हरिहरः**—कोऽयं ग्रन्थः?। पण्डितो वदति—**नैषधं** महाकाव्यम्। कः कविः?। श्री**हर्षः**। श्री**वस्तुपालेन** गदितम्—तदादर्शं दर्शय तर्हि। पण्डितो ब्रूते- नान्यत्रायं ग्रन्थः, चतुरो यामानर्पयिष्यामि पुस्तिकाम्। अर्पिता पुस्तिका। रात्रौ सद्यो लेखकनियोगिभिर्लेखिता नवीना पुस्तिका।
१५ जीर्णरज्या(ज्ज्वा?)वृता। वासन्यासेन धूसरीकृत्य मुक्ता[4]। प्रातः पण्डिताय पुस्तिका दत्ता। गृह्यतां तदिदं स्व**नैषधम्**। गृहीता पण्डितेन पुस्तिका। मन्त्रिणा न्यगादि—अस्माकमपि कोशे किलास्तीवेदं शास्त्रमिति स्मरामः। विलोक्यतां कोशः। यावद् विलम्बेनैवं कृष्टा नवीना प्रतिः, यावच्छोध्यते तावत् "निपीय
२० यस्य क्षितिरक्षिणः कथा" इत्यादि **नैषध**मुदघटिष्ट। दृष्ट्वा पण्डित**हरिहरे**णोक्तम्— "मन्त्रिन्![5] तवैव मायेयम्। 'यदीदृशेषु कार्येषु- नान्यस्य क्रमते मतिः'। युक्तं त्वया दण्डिताः प्रतिपक्षाः, स्थापितानि जैन वैष्णव-शैवशासनानि, उदञ्चितः स्वामिवंशः, यस्यैवं प्रज्ञा प्रकाशते।

२५ अत्रान्तरे **वीरधवल**प्रहितसैन्यचम्पितेन[6] महाराष्ट्रप्रभुणा

---

१ घ-'राणेश्वरेण'। २ अनुष्टुप्। ३ घ--'लापितो हरिहरः पण्डित(तः)। ४ क-ख-'युक्ता'। ५ ग-'मन्त्रि (?) तवैव'। ६ ग 'कम्पितेन'।

सपादकोटिहेमप्रमितो दण्डः प्रहितः । श्रीवस्तुपालेन तु तद् हेम चतुर्दिग्यात्रिकेभ्यो याचकेभ्योऽदायि विवेकात् । तद् दृष्ट्वा **हरिहरो** वर्णयति—

आः साम्यं न सहेऽहमस्य किमपि क्रोडीकृतैकश्रियो
  याञ्चोत्तानकरेण खर्वितनिजाकारोष्मणा [1]शार्ङ्गिणा ।  ५
येनैता पुरुषोत्तमाधिकगुणोद्गारेण [2]युद्धार्णवा-
  दाकृष्यैव तथा श्रियः शकलशः कृत्वाऽर्थिनामर्पिता ॥३॥[3]

तदा **वीरधवलस्य** 'सपादकोटीकाञ्चनवर्ष' इति भट्टादिषु बिरुदं ख्यातिमायातम् । अथ **हरिहरः सोमेश्वरं** नन्तुं गतो 'देवपत्तन'म् । पण्डित**सोमेश्वरदेवस्य** तत्र तद् दौर्जन्यं स्मृत्वा विषण्णेन काव्यं  १०
भणितम्—

क्व यातु क्वायातु क्व वदतु समं केन पठतु ?
  क्व काव्यान्यव्याजं रचयतु सदः कस्य विशतु ? ।
खलव्यालग्रस्ते जगति न गतिः क्वापि कृतिना—
  मिति ज्ञात्वा तत्त्वं हर ! हर विमूढो हरिहरः ॥४॥[4]  १५

आरुक्षाम नृपप्रसादकणिकामद्राक्ष्म लक्ष्मीलवान्
  किञ्चिद् वाङ्मयमध्यगीष्महि गुणैः कांश्चित् पराजेष्महि ।
इत्थं मोहमयीमकार्ष्म कियतीं नानर्थ[5]कन्थीं मनः
  स्वाधीनीकृतशुद्धबोधमधुना वाञ्छत्यऽमर्त्यापगाम् ॥२॥[7]

इत्युक्त्वा धनार्धं दत्त्वा शेषार्धं गृहीत्वा 'धवलक्क'मध्ये भूत्वा  २०
राणक-मन्त्रिणौ आपृच्छ्य 'काशीं' प्राप्य स्वार्थमसाधयत् ।

॥ इति हरिहरप्रबन्धः ॥१२॥[8]



---

१ ग—'शार्ङ्गिणा', ख—'शार्ङ्गिणा'। २ ग—'पुद्धार्णवा—'। ३ शार्दूल०। ४ शिखरिणी। ५ घ—'कन्थां' । ६ स्वर्गङ्गाम् । ७ शार्दूल० । ८ 'समाप्तः' इत्यधिको ग—पाठः

## [ १२ ]

## ॥ अथ अमरप्रबन्धः ॥

श्री'अणहिल्लपत्तना'सन्नं 'वायटं' नाम महास्थानमास्ते, चतु-
रशीतिमहास्थानानामन्यतमत् । तत्र परपुरप्रवेशविद्यासम्पन्नश्री-
५ जीवदेवसूरिसन्ताने श्रीजिनदत्तसूरयो जगर्जुः । तेषां शिष्योऽ-
मरो नाम प्रज्ञालचूडामणिः । स श्रीजिनदत्तसूरिभक्तात् कवि-
राजात् अरिसिंहात् 'सिद्धसारस्वतं' मन्त्रमग्रहीत् । तद्गच्छमहा-
भक्तस्य विवेकनिधेः कोष्ठागारिकस्य पद्मस्य विशालतमसदनैकदेशे
विजने एव विंशत्याचाम्लैर्निद्राजया-ऽऽसनजय-कषाय[जय]जयादि-
१० दत्तावधानस्तं मन्त्रमजपत् । विस्तरेण होमं च चक्रे । एक-
विंशतितम्यां रात्रौ मध्यप्रासायां नभस्युभ्युदिताच्चन्द्रबिम्बान्निर्गत्य
स्वरूपेणागत्यामरं भारती करकमण्डलुजलममलमपीप्यत् वरं च
प्रादात्– सिद्धकविर्भव, निःशेषनरपतिपूजागौरवितश्चैधि । इति
वरं दत्त्वा गता भगवती । जातः कविपतिरमरः । रचिता काव्य-
१५ कल्पलता नाम कविशिक्षा, छन्दोरत्नावली, सूक्तावली च ।
कलाकलापाख्यं च शास्त्रं निबद्धं, बालभारत च । बालभारते
( स. ११ ) प्रभातवर्णने ( श्लो. ६ )–

"दधिमथनविलोलल्लोलदृग्वेणिदम्भा–
दयमदयमनङ्गो विश्वविश्वैकजेता ।
२० भवपरिभवकोपत्यक्तबाणः कृपाण–
श्रममिव दिवसादौ व्यक्तशक्तिर्व्यनक्ति" ॥१॥[9]

इत्यत्र वेण्याः कृपाणत्वेन वर्णनाद् 'वेणीकृपाणोऽमर' इति विरुदं
कविवृन्दाल्लब्धं 'दीपिकाकालिदास'वद् 'घण्टामाघ'वच्च । कवित्व-

---

१ घ–'अथ श्री०' । २ ग–'परकायप्रवेश०' । ३ ग–'प्रज्ञाचूडा०' । ४ ग–'राज अरि०'। ५ घ–'समे सदनैक०'। ६ ग–'प्राक्षीत्'। ७ ख–'गौरवविता०', घ–'गौरवताश्चैधि'। ८ घ–'कृपाणः'। ९ मालिनी। १० घ–'वृन्दाल्लब्धममरेण दीपिका०'।

प्रसिद्धेश्च 'महाराष्ट्रा'दिराजेन्द्राणां पूजा उपतस्थिरे । तदा 'वि(वी)-सलदेवो[1] राजा 'गूर्जरा'धिपति'धवलक्कके' राज्य शास्ति, तेनाऽमरकवेर्गुणग्रामः श्रुतः । ठक्कुरं वइजलं[2] प्रधानं प्रेष्य प्रातराहूतः कवीन्द्रः । आसनादिप्रतिपत्तिः कृता । सभा महती । अमरेण पठितम्— ५

वीक्ष्यैतद्भुजविक्रमक्रमचमत्कारं न(नि)कारं मयि
प्रेम्णो[3] नूनमियं करिष्यति गुणग्रामैकगृह्याशया ।
श्रीमद्वीसलदेव ! देवरमणीवृन्दे त्वदायोधने
प्रेक्ष्य प्रक्षुभिते विमुञ्चति परीरम्भान्न रम्भां हरिः ॥१॥[4]

त्वत्प्रारब्धप्रचण्डप्रधननिधनताराातिवीरातिरेक— १०
क्रीडत्कीलालकुल्यावलिभिरलभत स्यन्दमाकन्दमुर्वी ॥
दम्भोलिस्तम्भभास्वद्भुज ! भुजगजगद्भर्तुराभर्तुरेनां[5]
तेनायं मूर्ध्नि रत्नद्युतिततिमिषतः शोभते शोणभावः ॥२॥[6]

रञ्जिता सभा, प्रीणितः पृथ्वीपालः । ततो राज्ञा प्रोक्तम्— यूयं कवीन्द्राः श्रूयध्वे । अमरोऽभिधत्ते— सत्यमेव यदि गवेषयति १५ देवः । ततो नृपेण सोमेश्वरदेवे दृष्टिः सञ्चारिता । ततः सोमेश्वरेण समस्याऽर्पिता । यथा—

'शीर्षाणां सैव वन्ध्या मम नवतिरभूल्लोचनानामशीतिः' ।

अमरेण सद्यः पूरिता —

'कैषा भूषा शिरोऽक्ष्णां तव भुजगपते ! [7]रेखयामास भूत्या २०
द्यूते मन्मूर्ध्नि[8] शम्भुः संदशनवशातानक्षपातान् विजित्य ।
गौरी त्वानङ्ग दृष्टीर्जितनखनवभूस्तद्विशेषात् तदित्थं
शीर्षाणां सैव वन्ध्या मम नवतिरभूल्लोचनानामशीतिः॥१॥"[11]

---

१ ख-'विश्वलदेवो' । २ घ-'ठक्कुरवइ०' । ३ क-'प्रेम्णा'। ४ शार्दूल० ५ ग-घ-'भुजगभुजजग०' । ६ स्रग्धरा । ७ 'रेषया० ' । ८ घ-' मन्मूर्ध्नि ' । ९ ९१० । १० १९२० । ११ स्रग्धरा ।

अत्र शिरोऽक्ष्णामिति शिरसा युक्तानामक्ष्णामिति मध्यमपदलोपी समासः कार्यः। द्वन्द्वे तु प्राण्यङ्गत्वादेकत्वं प्राप्नोति। ततो 'वामन'-स्थलीयकविसोमादित्येन समस्या दत्ता—

'धनुष्कोटौ भृङ्गस्तदुपरि गिरिस्तत्र जलधिः'।

५ अमरेणोक्तम्—

भवस्याभूद् भाले हिमकरकराग्रे गिरिसुता-
ललाटस्यांश्लेषे हरिणमदपुण्ड्रप्रतिकृतिः।
कपर्दस्तत्प्रान्ते यदमरसरित् तत्र तदहो
धनुष्कोटौ भृङ्गस्तदुपरि गिरिस्तत्र जलधिः ॥२॥[३]

१० ततः 'कृष्ण'नगरवास्तव्येन कमलादित्येन समस्या वितीर्णा—

'मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम्'।

अमरेण पुपूरे—

तटविपिनविहारोच्छृङ्खलं यत्र यादो-
मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम्।
१५ बक! बत न कदाचित् किं श्रुतोऽप्येष वार्धिः
प्रतनुतिमिनि तल्ले क्वापि गच्छ क्षणेन ॥३॥[५]

अथ 'वीसलनगरी'येण नानाकेन समस्या विश्राणिता—

'गीतं न गायतितरां युवतिर्निशासु'।

अमरेणोक्तम्—

२० 'श्रुत्वा ध्वनेर्मधुरतां सहसाऽवतीर्णे
भूमौ मृगे विगतलाञ्छन एष चन्द्रः।
मा गान्मदीयवदनस्य तुलामितीव
गीतं न गायतितरां युवतिर्निशासु ॥४॥[६]

---

१ 'अत्र' इत्यारभ्य 'प्राप्नोति' इति यावत् पाठः प्रक्षिप्तो भाति, द्वन्द्वे एकवत्त्वस्य वैभाषिकत्वात्। २ घ– 'स्य श्लेषे'। ३ शिखरिणी। ४ ग–'बत बक न', घ–'तव बक व'। ५ मालिनी। ६ वसन्त०।

एवं अष्टोत्तरं शतं बहुकविदत्ताः पूरिताः समस्याः श्रीअमरेण। ततो राज्ञाऽभिहितम्[1]— सत्यं कविसार्वभौमः श्रीअमरः । तत्र दिने सन्ध्यावधि सभा निषण्णा स्थिता । राजा लङ्घितः सभ्यलोकोऽपि । 'रसावेशे हि कालो र्ड्रैर्गच्छन्नपि न लक्ष्यते' । द्वितीयदिने सद्यः काव्यमयैः प्रमाणोपन्यासैः प्रामाणिका [2]जिताः । तृतीयदिने राज्ञा पृष्टम्— अस्माकं सम्प्रति का चिन्ताऽस्तीति कथ्यताम् । अमरेण भणितम्— देव ! कथं दूरं गताः स्वर्गे ऐरावणस्य दक्षिणकर्णे लुकिताः । भूपतिः स्वसंवादेऽमोदत, शिरोऽधुनोत् । नित्यं गमनागमने जिनधर्मासन्नः कृतो राजा चैत्येषु पूजाः कारयति ।

एकदा नृपेण पृष्टम्— भवतां कः कलागुरुः ? । अमरेण गदितम्— [3]अरिसिंहः कविराज इति । तर्हि प्रातरत्रानेयः । अमरचन्द्रेणानीतः प्रातः कविराज उपराजम् । तदा राजा खड्गेन श्रमयन्नास्ते । राज्ञा पृष्टम्— अय कविराजः ? । कविराजेन व्याजह्वे— ओमिति । राजाऽऽह—तर्हि वद कालोचितं किञ्चित् । [4]अरिसिंहः कवयति—

त्वत्कृपाणविनिर्माण—शेषद्रव्येण वेधसा ।
कृतः कृतान्तः सर्पस्तु, करोद्वर्तनवर्तिभिः ॥१॥[5]

[6]अच्छाच्छाभ्यधिकार्पणं किमपि यः पाणेः कृपाणेर्गुणः
सञ्चक्राम स यद् ददौ द्युपदवीं प्रत्यर्थिषु क्ष्मार्थिषु ।
त्वत्सङ्गान्न स बद्धमुष्टिरभवद् येनारिपृथ्वीभुजां
पृष्ठेषु स्वमैपि प्रकाममुदितः प्रोद्दामरोमोद्गमः ॥२॥[8]

कलयसि किमिह कृपाणं, वीसल ! बलवन्ति शत्रुषु तृणानि ।
यानि मुखगानि तेषां, न चैष लङ्घयितुमसमर्थः ॥३॥[10]

---

१ 'मोहितम्' । २ ग-'जाताः' । ३ घ--'अमरसिंहकवि०' । ४ घ -'अमरसिंहः' । ५ अनुष्टुप् । ६ ग-'अत्यर्थाभ्यधिका०' । ७ क-'मतिप्रकाम' । ८ शार्दूल० । ९ घ-'तवैष' । १० आर्या ।

देव! त्वं 'मलया'चलोऽसि भवतः श्रीखण्डशाखी भुज-
स्[1]तत्र क्रीडति कज्जलाकृतिरसिर्धाराद्विजिह्वः फणी।
एष स्[2]वाङ्गमनर्गलं रिपुतरुस्कन्धेषु संवेष्टयेद्
दीर्घं व्योमविसारिनिर्मलयशो निर्मोकमुन्मुञ्चति ॥४॥[3]

५ अद्भुतकवितादर्शनात् कविराजो राजेन्द्रेण नित्यसेवकः कृतः। ग्रासो महान् प्रत्यष्ठायि।

एकदा श्रीवीसलदेवेन भोजनान्ते तृणं करे धृत्वाऽरिसिंहोऽभिदधे— इदं तृणं सद्यो वर्णय। यदि रुचितभङ्ग्या वर्णयसि तदा ग्रासद्वैगुण्यम्, अन्यथा सर्वग्रासत्याजनम्। इत्युक्तिसमकाल-
१० मेवाहतप्रतिभतया स ऊचे—

क्षारोऽब्धिः [5]शिखिनो मखा विषमयं श्वभ्रं क्षयीन्दुर्मुधा
प्राहुस्तत्र सुधामियं तु दनुजत्रस्तैव लीना तृणे।
पीयूषप्रसवो गवां [6]यदशनाद् दत्त्वा यदास्ये निजे
देव! त्वत्करवाल[7]कालमुखतो निर्याति जातिर्द्विषाम् ॥१॥[8]

१५ [9]ध्वनितो भूपालः। ग्रासद्वैगुण्यं कृतम्। [10]कालान्तरेऽमरेण कोष्ठागारिकपद्मगिरा पद्मानन्दाऽऽख्यं शास्त्रं रचितम्। एवं कविता-कल्लोलसाम्राज्यं प्रतिदिनम् ॥

॥ इति अमरचन्द्रकविप्रबन्धः ॥ १३ ॥



---

१ ग-'स्तम्भः क्रीडति'। २ ग-'त्वां गमन०'। ३ शार्दूल०। ४ प्रष्ठा[illegible]रेण। ५ ख-घ-'शिषिनो मषा'। ६ घ-'यवशंशन(?) दत्त्वा'। ७ घ-'वालमुखतो'। ८ शार्दूल०। ९ ग-'चमत्कृतो भू०'। १० घ-'कालान्तरेण अमरेण'।

[ १४ ]

## ॥ अथ मदनकीर्तिप्रबन्धः ॥

'उज्जयिन्यां' **विशालकीर्तिर्दिगम्बरः** । तच्छिष्यो **मदनकीर्तिः** । स पूर्वपश्चिमोत्तरासु तिसृषु दिक्षु वादिनः सर्वान् विजित्य 'महाप्रामाणिकचूडामणि'रिति विरुदमुपार्ज्य स्वगुर्वलङ्कृता'मुज्जयिनी'मागात् । गुरूनवन्दिष्ट । पूर्वमपि जनपरम्पराश्रुततत्कीर्तिः स **मदनकीर्तिः** भूयिष्ठमश्लाघिष्ट । सोऽपि प्रामोदिष्ट । दिनकतिपयानन्तरं च गुरुं न्यगादीत्– भगवन् ! दाक्षिण्यात्यान् वादिनो विजेतुमीहे । तत्र गच्छामि ? । अनुज्ञा दीयताम् । गुरुणोक्तम्–– वत्स ! दक्षिणां मा गाः । स हि भोगनिधिर्देशः । को नाम तत्र गतो दर्शन्यपि न तपसो भ्रश्येत् ? । तद् गुरुवचनं विलङ्घ्य विद्यामदाध्मातो जालकुद्दालनिश्रेण्यादिभिः प्रभूतैश्च शिष्यैः परिकरितो 'महाराष्ट्र'दिवादिनो मृद्नन् 'कर्णाट'देशमाप । तत्र 'विजयपुरे' **कुन्तिभोजं** नाम राजानं स्वयं त्रैविद्यविदं विद्वत्प्रियं सदसि निषण्णं स द्वास्थनिवेदितो ददर्श तमुपश्लोकयामास––

देव ! त्वद्भुजदण्डदर्पगरिमोद्गारप्रतापानल–
ज्वालापक्त्रिमकीर्तिपारदघटीविस्फोटिनो बिन्दवः ।
शेषाहिः कति तारकाः कति कति क्षीराम्बुधिः कत्यपि
प्रालेयाचल-शङ्ख-शुक्ति-करका-कर्पूर-कुन्देन्दवः ? ॥१॥[४]

कीर्तिः कैः कति **कुन्तिभोज** ! भवतः स्वर्वाहिनीगाहिनी
दिक्पालान् परितः परीत्य दधती भास्वन्मयं गोलकम् ।
लङ्घित्वाऽम्बुधिसप्तमण्डलभुवस्त्वय्येकपत्नीव्रत–
ख्यात्यै विष्णुपदं स्पृशत्यविरतं शेषाहिशीर्षाण्यपि ॥२॥[७]

---

१ ख–'परम्पराच्छ्रुत०' । २ तत्त्वज्ञानी । ३ हिमालयगिरि० । ४ शार्दूल० । ५ क्षारोदक-इक्षुरसोदक-सुरोदक-घृतोदक-दधि-मण्डोदक शुद्धोदक-क्षीरोदक नामानः सप्त समुद्राः । ६ क– 'ख्यात्यैर्विष्णु०', ख–'ख्यात्यै विष्णु०' । । ७ शार्दूल० ।

चमत्कृतो राजा । स्थापितो दिगम्बरः सौधासन्नदेशे । राज्ञाऽऽदिष्टम्— ग्रन्थमेकं कुरु अस्मत्पूर्वजवर्णनप्रतिबद्धम् । तेनोक्तम्— देव ! अहं श्लोकपञ्चशतीं एकस्मिन् दिने कर्तुं क्षमः, तावत् तु लेखितुं न क्षमोऽस्मि । कश्चिल्लेखकः समर्प्यताम् । राज्ञोक्तम्—अस्मत्-
५ पुत्री **मदनमञ्जरी** नाम लिखिष्यति जवनिकाऽन्तरिता सती । दिगम्बरेण ग्रन्थं कर्तुमारेभे । राजपुत्री पञ्चशतीं लिखति । एवं कत्यप्यहानि ययुः ।

एकदा राजसुता तस्य स्वरं कोकिलरवजित्वरं शृण्वती सती चिन्तयति— अस्य रूपमपि सुन्दरं भविष्यति । जवनिकाऽन्तरि-
१० तया कथं दृश्यते ? । [1]करोमि तावदुपायम् । रसवत्यां लवणबाहुल्यं कारयामि । [2]सोऽपि राजपुत्रीं तादृग्विदुषीं सुस्वरां दिदृक्षते । लवणातिशये दिग्पट ऊचे— अहो [3]लवणिमा ! । राजपुत्र्यभिदधे— अहो निष्ठुरता ! । एवमालापप्रत्यालापे दूरे कृता उभाभ्यां मर्यादामयी वस्त्रमयी च जवनिका । परस्परं दिव्यरूपदर्शनम् । तावता दिग्-
१५ वस्त्रेणोक्तम्—

निरर्थकं जन्मगतं नलिन्या, यया न दृष्टं [4]तुहिनांशुबिम्बम् ।

राजसुतयाऽपि भणितम्—

उत्पत्तिरिन्दोरपि निष्फलैव, [5]दृष्टा प्रबुद्धा नलिनी न येन ॥१॥[6]

ततश्चक्षुः प्रीतिमुद्भवन्तीवाऽपराणि कुसुमचापचापलानीति
२० वचनान्निर्गले मदने भग्नं कौमारव्रतं तयोः । वर्तते विकथा । अल्पो निष्पद्यते ग्रन्थः । सायं राजा विलोकयति शास्त्रम् । को हेतुरद्य स्तोकं निष्पन्नम् ? । दिगम्बरस्तेषु त्रिचतुराणि विषमाणि पद्यानि निक्षिपते । ततो राजाऽग्रे भणाति— देव ! ममेयं प्रतिज्ञा—अहमबुध्यमानस्य लेखितुः पार्श्वान्न लेखयामि । तव तु पुत्र्या इदं स्थानं कृच्छ्रेण
२५ बुद्धम् । इति कालविलम्बाद् ग्रन्थाल्पत्वं जायते । राजेन्द्रो विमृ-

---

१ घ-'करोम्युपायं तावत्' । २ ग-'सोऽपि दिग्वस्त्र राज०' । ३ लवणस्य भावः, पक्षान्तरे लावण्यम् । ४ चन्द्रबिम्बम् । ५ क-'दृष्ट्वा' । ६ उपजातिः ।

शति— शठोत्तरमेवेदं दृश्यते। एकदा 'हेरयामि किमिमौ समाचरतः। निशायां विभातायां एकदा राजा छन्नरूप एकाकी तयोर्ग्रन्थनिष्पत्ति-प्रदेशकुड्यान्तरेऽस्थात्। तदैव दिग्पटो राजपुत्रीं प्रति प्रणय-कलहानुनयगर्भमाह—

सुभ्रु! त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषितां　　५
दूरादेव निराकृताः सुरभयः स्वर्गन्धधूपादयः।
रागं रागिणि! मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
सत्यं त्वद्विरहे भवन्ति दयिते! सर्वा ममान्धा दिशः॥१॥'

एतत्काव्यश्रवणाद् द्वयोर्दौःशील्यं निर्णीय मन्दपदं निर्ययौ। स्थानं गतो वसुधाधिपः। क्रुद्धेन तेन तत्कालमाहूतो दिक्पटः; १०
आगतो भाषितः, यथा— पण्डित! किमिदं नवीनं पद्यम्— 'सुभ्रु! त्वं कुपितेत्यपास्तमशनम्' इत्यादि?। दिग्वसनेन विमृष्टम्— राज्ञा हेरितोऽहम्। अपराधी लब्धः। तथाप्युत्तरं ददामि यथातथा। इति चिन्तयित्वाऽवनिपतिमभ्यधात्— देव! दिनद्वयात् प्रभृति दृग् मे पीडाऽऽर्त्ता वर्तते। तदुपश्लोकायानुनयपरं पद्यमिदमपाठि-१५
षम्। इति प्रस्तावनां कृत्वा निक्षोभस्तथैव भङ्ग्या सद्यो व्याच-चक्षे। तया प्रज्ञया तुष्टोऽन्तः क्षितिपः, अकृत्यकरणदर्शनात् तु रुष्टः। सभ्रूभङ्ग भृत्यानूचे— बध्नीत रे अमुं कुकर्मकारिणं घात-यत च। बद्धस्तैः। तदाकर्ण्य राजपुत्री द्वात्रिंशता सखीभिः शस्त्रिकापाणिभिः समं आगात्। राजदृष्टिमेत्य स्वयमकथयत्— यद्यमुं २०
मे मनोरुच्यं मुञ्चसे तदा चारु; अथ न मुञ्चसे तदा चतुस्त्रिंशद्ध-त्या भवितारः— एका दिगम्बरहत्या त्रयस्त्रिंशद्युवतिहत्या इति। ततो राजा मन्त्रिभिर्विज्ञप्तः— देव! त्वयैवेयमस्यासन्नीकृता। यूनां स्त्रीसन्निधानं च मन्मथद्रुमदोहदः। कस्य दोषो दीयते?।

चित्रस्था अपि चेतांसि, हरन्ति हरिणीदृशः।　　२५
किं पुनस्ताः स्मरस्मेर—विभ्रमभ्रमितेक्षणाः? ॥१॥'

१ चररूपेण पश्यामि (?)। २ शार्दूल०। ३ ख घ 'सूक्ता'। ४ घ—'पाणिरागात्'। ५ अनुष्टुप्।

मुच्यतां प्रसभं दिग्वस्त्रः । इयं चाऽस्यैव भवतु । इति श्रुत्वा तं मुक्त्वा तां तस्यैव पत्नीमकरोत् । स च राज्यांशभाजनं कृतः । [2]दिग्विजयधनानि च श्वशुरसाच्चकार। व्रतं त्यक्त्वा भोगी जातः। तं तादृशं वृत्तान्तं **विशालकीर्तिगुरु**'रुज्जयिन्या'मश्रौषीत्, अध्यासीच्च— अहो यौवनधनकुसङ्गानां महिमा येनायमेवंविधोऽपि व्रती
५ विद्वान् वादी [3]योगज्ञो भूत्वा एवंविधं उग्रदुर्गतिपतनमूलं कुपथं [4]प्रपन्नः । हा हा धिक् ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
१० विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च तनुते ॥१॥[5]

एवं विमृश्य चतुरांश्चतुरः शिष्यांस्तद्बोधनाय प्राहैषीत् । तैस्तत्र गत्वोक्तोऽसौ—

विरमत बुधा ! योषित्सङ्गात् सुखात् क्षणभङ्गुरात्
१५ कुरुत करुणाप्रज्ञामैत्रीवधूजनसङ्गमम् ।
न खलु नरके हाराक्रान्तं घनस्तनमण्डलं
भवति शरणं श्रोणीबिम्बं [6]क्वणन्मणिदाम वा ॥१॥[7]

इत्यादि गुरुभिर्बोध्यमानोऽसि । बुध्यस्व । मा मुहः । सोऽथ निस्त्रपतया तेषां हस्ते गुरुभ्यः पद्यानि पत्रे लिखित्वा प्रजिघाय ।
२० गतास्ते तत्र । वाचितानि पद्यानि गुरुणा—

"तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना, नासौ गुरुर्यस्य वचः प्रमाणम्।
धर्मस्य तत्त्वं निहितं गुहायां, महाजनो येन गतः स पन्थाः"॥१॥[8]
प्रियादर्शनमेवास्तु, किमन्यैर्दर्शनान्तरैः ? ।
प्राप्यते येन निर्वाणं, सरागेणापि चेतसा ॥२॥[9]

---

१ घ-'चास्यैव'। २ घ-'दिग्जय०'। ३ घ-'योगिन्या (?) भूत्वा' ४ ख-'गतः'। ५ शिखरिणी। ६ ग-'रणन्मणि०'। ७ हरिणी। ८ उपजातिः। ९ अनुष्टुप्।

सन्दष्टाधरपल्लवा सचकितं हस्ताग्रमाधुन्वती
मा मा मुञ्च शठेति कोपवचनैरानर्तितभ्रूलता ।
सीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी
प्राप्तं तैरमृतं श्रमाय मथितो मूढैः सुरैः सागरः ॥३॥[1]

इत्यादि दृष्ट्वा तस्थौ तूष्णीं गुरुः । मदनकीर्तिस्तु व्यलासीद् ५
विविधम् ॥

॥ इति मदनकीर्तिप्रबन्धः ॥१४॥



१ शार्दूल० ।

[ १५ ]

## ॥ अथ सातवाहनप्रबन्धः ॥

इह 'भारते' वर्षे दक्षिणखण्डे 'महाराष्ट्र'देशावतंसं श्रीमत्'प्रति-
ष्ठानं' नाम पत्तनं विद्यते । तच्च निजभूत्याऽभिभूतपुरन्दरपुरमपि
५ कालान्तरेण क्षुल्लकग्रामप्रायमजनिष्ट । तत्र चैकदा द्वौ वैदेशिक-
द्विजौ समागत्य विधवया स्वस्रा सार्कं कस्यचित् कुम्भकारस्य
शालायां तस्थिवांसौ । कणवृत्तिं विधाय कणान् स्वस्रुरुपनीय
तत्कृताहारपाकेन समया कुरुतः स्म ।

अन्येद्युः सा तयोर्विप्रयोः स्वसा जलाहरणाय 'गोदावरीं' गता ।
१० तस्याः स्वरूपमप्रतिरूपं निरूप्य स्मरपरवशोऽन्तर्ह्रदवासी शेषो
नाम नागराजो ह्रदान्निर्गत्य विहितमनुष्यवपुस्तया सह बलादपि
सम्भोगकेलिमकलयत् । भवितव्यताविलसितेन तस्याः सप्तधातुरहित-
स्यापि तस्य दिव्यशक्त्या शुक्रपुद्गलसञ्चाराद् गर्भाधान-
मभवत् । [1]स्वनामधेयं प्रकाश्य व्यसनसङ्कटे मां स्मरेरित्यभिधाय
१५ च नागराजः 'पाताल'लोकमगमत् । सा च गृहं प्रत्यगच्छत् ।
व्रीडापीडितितया च स्वभ्रात्रोस्तं[3] वृत्तान्तं न खलु न्यवेदयत् ।
कालक्रमेण सहोदराभ्यां गर्भलिङ्गानि वीक्ष्य सा जातगर्भा
इत्यलक्ष्यत । ज्यायसस्तु मनसि शङ्का जाता यदियं खलु कनी-
यसोपभुक्तेति, शङ्कनीयान्तराभावात् । [4]यवीयसोऽपि समजनि
२० विकल्पः नूनमेषा ज्यायसा सह विनष्टशीलेति । एवं मिथः कलु-
षिताशयौ विहाय तामेकाकिनीं पृथक् पृथक् देशान्तरमयासिष्टाम् ।
साऽपि प्रवर्धमानगर्भा परमन्दिरेषु कर्माणि निर्मिमाणा प्राणवृत्ति-
मकरोत् । क्रमेण पूर्णेऽनेहसि सर्वलक्षणलक्षिताङ्गं प्रासूत
सुतम् । स च क्रमाद् वपुषा गुणैश्च वर्धमानः सवयोभिः सह

---

१ घ-'तस्याश्च रूप०' । २ ख-'स्वं नाम०' । ३ घ-'भ्रात्रोक्त स्वं वृत्तान्त' ।
४ कनीयसः ।

रममाणो बालक्रीडया स्वयं भूपतीभूय तेभ्यो वाहनानि करि-तुरग-रथादीनि कृत्रिमाणि दत्तवान् । इति सनोतेर्दानार्थत्वाल्लोकैः **सातवाहन** इति व्यपदेशं लम्भितः । स्वजनन्या पाल्यमानः सुखमवस्थितः ।

इत'श्रोज्जयिन्यां' श्री**विक्रमादित्य**स्या'ऽवन्ति'नरेशितुः सदसि कश्चिन्नैमित्तिकः **सातवाहनं** 'प्रतिष्ठान'पुरे भाविनं नरेन्द्रमादिशत्। ५

अथैतस्यामेव पुर्यामेकः स्थविरविप्रः स्वायुरवसानमवसाय चतुरः स्वतनयानाहूय प्रोक्तवान्, यथा —वत्सा ! मयि पुरेयुषि मदीयशय्योच्छीर्षकदक्षिणपादारभ्य चतुर्णामपि पादानामधो वर्तमानं निधिकलशचतुष्टयं युष्माभिर्यथाज्येष्ठं विभज्य ग्राह्यं येन भवतां १० निर्वाहः सम्पनीपद्यते । पुत्रैस्तु तथेत्यादेशः स्वीचक्रे पितुः । तस्मिन्नुपरते तस्यौर्ध्वदैहिकं कृत्वा त्रयोदशेऽहनि भुव खनित्वा यथायथ चतुरोऽपि निधिकलशास्ते जगृहिरे । यावदुद्घाट्य विलोकयन्ति तावत् प्रथमस्य कुम्भे कनकम्, द्वैतेयीकस्य कृष्ण-मृत्स्ना, तृतीयस्य बुंशम्, तुरीयस्य त्वस्थीनि ददृशिरे । तदनु १५ ज्यायसा साकमितरे त्रयो विवदन्ते स्म—तदस्मभ्यमपि विभज्य कनकं वितरेति । तस्मिंश्चावितरति सति ते'ऽवन्ति'पतेर्द्धर्माधिकारिणमुपा-स्थिषत । तत्रापि न तेषां वादनिर्णयः समपादि । ततश्चत्वारोऽपि 'महाराष्ट्र'जनपदमुपानंसिषुः । **सातवाहन**कुमारस्तु कुलाल-मृदा हस्तिरथसुभटानन्वह नवनवान् विदधानः कुलालशालाया २० बालक्रीडादुर्ललितकालितस्थितिरनयत् समयम् । ते च द्विज-तनुजाः 'प्रतिष्ठान'पत्तनमुपेत्य परतो भ्रमन्तस्तस्यामेव नैक्रजीविनः शालायां तस्थिवांसः । **सातवाहन**स्तु तानवेक्ष्येङ्गिताकारकुशलः प्रोवाच—भो विप्राः ! किं भवन्तो वीक्षापन्ना इव वीक्ष्यन्ते ? ।

---

१ ग--'सान ज्ञात्वा'। २ ग–'मयि मृते मदीय०'। ३ घ–'खात्वा'। ४ ग-'वुशाम्'। ५ घ–'नः कलित०'। ६ ख-'मेत्य'। ७ कुलालस्य। ८ ख–'वीतापन्ना'।

-तैस्तु जगदे--जगदेकसुभग ! कथमिव वयं चिन्ताचान्तचे-
तसस्त्वया ज्ञाताः [1]। कुमारेण बभणे---इङ्गितैः किमिव नाव-
गम्यते ?। तैरुक्तम्---युक्तमेतत्, परं भवतः पुरो निवेदितेन
चिन्ताहेतुना किं स्यात् [2]। बालः खलु भवान्। बाल आलपत्--
५ यदि परं जातु मत्तोऽपि साध्यं वः सिध्यति, तन्निवेद्यतां स
चिन्ताहेतुः। ततस्ते तद्वचनवैचित्र्यहृतहृदयाः सकलमपि स्व-
स्वरूपं 'निधिनिरयणादि [3]' मालवे'शपरिषद्यपि विवादानिर्णयान्तं
तस्मै निवेदितवन्तः। कुमारस्तु स्मितविच्छुरिताधरोऽवादीद्---
भो विप्राः ! अहं यौष्माकं झगटकं [4] निर्णयामि, श्रूयतामवहितैः--
१० यस्मै वप्ता कनककलशं प्रददे स तेनैव निवृत्तोऽस्तु। यस्य
कलशे कृष्णमृत्स्ना निरगात् स क्षेत्रकेदारादीन् गृह्णातु। यस्य तु
बुशं स कोष्ठागारगतधान्यानि सर्वाण्यपि स्वीकुरुताम्। यस्य
चास्थीनि निरगुः सोऽश्व-महिषीदासी-दासादिकमुपादत्ताम् [5]।
इति युष्मज्जनकस्याशयः। इति क्षीरकण्ठोक्तं [6] श्रुत्वा सूत्रकण्ठाः [7]
१५ छिन्नविवादाः तद्वचनं प्रतिश्रुत्य तमनुज्ञाप्य प्रस्थायिषुः स्वां
नगरीम्। प्रथिता सा तद्विवादनिर्णयकथा पुर्याम्। राज्ञाऽप्याकार्य
ते पर्यनुयुक्ताः--- किं नु भो भवतां वादनिर्णयो जातः ?।
तैरुक्तम्--- ओम् स्वामिन् !। केन निर्णीत इति नृपेणोदिते ते
**सातवाहन**स्वरूपं सर्वमवितथमकथयत्। तदाकर्ण्य तस्य शिशो-
२० रपि बुद्धिवैभवं विभाव्य प्रागुक्तं दैवज्ञेन तस्य 'प्रतिष्ठाने' राज्यं
च भविष्यतीत्यनुस्मृत्य तं स्वप्रातिपन्थिनमाकलय्य क्षुभितमनास्तन्-
मारणोपायमचिन्तयच्चिरं नरेश्वरः। [8]अभिघातकरादिप्रयोगैर्मारिते
चास्मिन्नयशःक्षात्रवृत्तिक्षती जायेतामिति विचार्य सन्नद्धचतुरङ्ग-
चमूसमूहो'ऽवन्ति'पतिः प्रस्थाय 'प्रतिष्ठान'पत्तनं यथेष्टमवेष्टयत्।

---

१ घ- 'तसंस्तयाऽजासिष्महि'। २ घ-'वरं'। ३ ख-- 'निधिनिर्गमनादि'। ४ 'झगडो' इति भाषायाम्। ५ क-'महिषीवृषदासी०'। ६ बालेन। ७ विप्राः। ८ ख-- 'अभिघातकमरादि०', घ--'अभिमरघातकरादि'।

तदवलोक्य ते ग्रामास्तास्ताश्चिन्तयन्ति स्म—कस्योपरि अयमेता-
वानाटोपः सकोपस्य 'मालवे'शस्य ? । न तावदत्र राजा राजन्यो
वा वीरस्तादृग् दुर्गादि वा । इति चिन्तयत्सु तेषु 'मालवे'-
शप्रहितो दूतः समेत्य **सातवाहन**मवोचत्— भो कुमारक !
तुभ्यं नृपः क्रुद्धः प्रातस्त्वां मारयिष्यति । अतो युद्धाद्युपायचिन्त- ५
नावहितेन भवता भाव्यमिति । स च श्रुत्वाऽपि दूतोक्तीर्[1]निर्भय
निरन्तरं क्रीडन्नेवास्ते ।

अत्रान्तरे विदितपरमार्थौ तौ तन्मातुलावितरेतरं प्रति विगत-
दुर्विकल्पौ पुनः 'प्रतिष्ठान'मागतौ । परचक्रं दृष्ट्वा तां स्वभगिनीं
प्रोचतुः—हे स्वसर्येन दिवौकसा तवायं तनयो दत्तस्तमेव स्मर १०
यथा स एवास्य साहाय्यकं विधत्ते । साऽपि तद्वचसा प्राचीनं
नागपतेर्वचः स्मृत्वा शिरसि निवेशितघटा 'गोदावर्या' नागह्रदं
गत्वा स्नात्वा च तमेव नागनायकमाराधयत् । तत्क्षणान्नागराजः
प्रत्यक्षीभूय वाचमुवाच– ब्राह्मणि ! को हेतुरहमनुस्मृतस्त्वया ? ।
तया च प्रणम्य यथावस्थितमभिहिते बभाषे **शेषराजः**– मयि १५
[2]पत्यौ कस्तव तनयमाभिभवितुं क्षमः ? । इत्युदीर्य तद्घटमादाय
ह्रदान्ते निमज्ज्य पीयूषकुण्डात् सुधया घटं प्रपूर्य च तस्यै दत्तः ।
त्वं चानेनामृतेन **सातवाहन**कृतमृन्मयाश्व-रथ-गज-पदातिजातम–
भिषिञ्चेः, यथा तत्सजीवं भूत्वा परबलं भुनक्ति । त्वत्पुत्रं च
'प्रतिष्ठान'पत्तनराज्ये अयमेव पीयूषघटोऽभिषेकयिष्यति । प्रस्तावे २०
पुनः स्मरणीयोऽहम् । इत्युक्त्वा स्वास्पदमगमद् भुजङ्गपुङ्गवः ।
साऽपि सुधाघटमादाय [3]स्वसद्मोपेत्य तेन तन्मृन्मय सैन्यमदैन्यमभ्यु-
क्षामास । प्रातर्दिव्यानुभवतः सचेतनीभूय तत्सैन्यसम्मुखं गत्वा युयुधे
परानीकिन्या सार्धम् । तया **सातवाहन**पृतनया भग्न'मवन्ती'-
शितुर्बलम् । **विक्रम**नरपतिरपि पलाय्य ययाऽवन्ती'म् । तदनु २५

---

१ ख-घ–'दूतोक्तीर्निरन्तरं' । २ ख– 'प्रतिपतिकस्तव,' घ– 'प्रतपतिकस्तव' ।
३ ख– 'सद्योनिष्पतेन तन्०' । ४ सैन्येन ।

**सातवाहनो** राज्येऽभिषिक्तः। 'प्रतिष्ठानं' च निजनिजविभूति-
परिभूतवस्त्वौकसाराभिधानं धवलगृह-देवगृह-हट्टपङ्क्ति-राजपथ-
प्राकार-परिखादिभिः सुनिविष्टमजनिष्ट पत्तनम्[1]। **सातवाहनो**ऽपि
क्रमेण दक्षिणापथमनृणं विधाय 'तापी'तीरपर्यन्तं चोत्तरापथं
५ साधयित्वा स्वकीयसंवत्सरं प्रावीवृतत्। जैनश्च समजनि। अर्चीकरच्च
जनितजननयनशैत्यानि चैत्यानि पञ्चाशद् वीरा अपि। प्रत्येकं
स्वस्वनामाङ्कितानि अन्तर्नगरं कारयाम्बभूवुर्जिनभवनानि। पर-
समयलोकप्रसिद्धं **सातवाहन**चरित्रं शेषमपि किञ्चिदुच्यते—

श्री**सातवाहने** क्षितिरक्षति सति पञ्चाशद् वीराः 'प्रतिष्ठान'-
१० नगरान्तस्तदा वसन्ति स्म, पञ्चाशन्नगराद् बहिः। इतश्च तत्रैव
पुरे एकस्य द्विजस्य सूनुर्दर्पोद्धुरः **शूद्रका**ख्यः समजनि। स च
युद्धश्रमं दर्पात् कुर्वाणः पित्रा स्वकुलानुचितमिदमिति प्रतिषिद्धो-
ऽपि नास्थात्। अन्येद्युः **सातवाहन**नृपतिर्बापलाखूं[2]**न्दला**दि-
पुरान्तर्वर्तिवीरपञ्चाशदन्वितो द्विपञ्चाशद्धस्तप्रमाणां शिलां श्रमार्थ-
१५ मुत्पाटयन् दृष्टः पित्रा समं गच्छता द्वादशाब्ददेशीयेन **शूद्रकेण**।
केनापि वीरेणाङ्गुलीचतुष्टयं केनाचित् षडङ्गुलान्यपरेण त्वङ्गुला-
न्यष्टौ शिला भूमित उत्पाटिता, [3]महीजानिना त्वाजानु नीता।
इत्यवलोक्य **शूद्रकः** स्फूर्जदूर्जितमवादीत्। भो भो भवत्सु मध्ये किं
शिलामिमां मस्तकं यावन्न कश्चिद्[4]दुद्धर्त्तुमीष्टे? । तेऽपि [5]सेर्ष्यमवा-
२० विष्टुर्यथा— त्वमेवोत्पाट्य यदि समर्थमन्योऽसि। **शूद्रक**स्तदाकर्ण्य
तां शिलां वियति तथोच्छालयाञ्चकार, यथा दूरमूर्ध्वमगमत्।
पुनरवादि **शूद्रकेण**— यो भवत्सु [6]अलम्भूष्णुः स खलु इमां
निपतन्तीं स्तभ्नातु। **सातवाहना**दिवीरैर्भयाद् भ्रान्तलोचनैरूचे
स एव सानुनयम्— यथा भो महाबल! रक्ष रक्ष अस्माकी-
२५ नान् प्राणान् इति। स पुनस्तां पतयालुं तथा मुष्टिप्रहारेण

---

[1] घ-'पदनम्'। [2] क-'खुन्देलादि०', घ-'खूदलादि०'। [3] ग-'महीपतिना'। [4] ग-दुद्धर्तुं समर्थः। [5] ख-'तदर्थमवा०'। [6] क-ख-'अलङ्करिष्णु'।

प्रहृतवान्, यथा सा त्रिखण्डमन्वभूत् । तत्रैकं शकलं योजनत्रयोपरि न्यपतत्, द्वैतीयकं च खण्डं नागह्रदे, तृतीयं तु प्रतोलीद्वारे चतुष्पथमध्ये निपतितमद्यापि तथैव [1]वीक्ष्यमाणमास्ते जनैः । तद्बलःविलसितचमत्कृतचेताः क्षोणिनेता शूद्रकं सुतरां सत्कृत्य पुररक्षकमकरोत् । शस्त्रान्तराणि प्रतिषिध्य दण्डधारस्तस्य दण्डमेवायुधमन्वज्ञासीत् । [2]शूद्रको बहिश्चरान् वरीरान् पुरमध्ये प्रवेष्टुमपि न दत्तवान्, अनर्थनिवारणार्थम् ।　५

अन्यदा स्वसौधस्योपरितले शयानः सातवाहनक्षितिपतिर्मध्यरात्रे शरीरचिन्तार्थमुत्थितः । पुराद् बहिः परिसरे करुणं रुदितमाकर्ण्य तत्प्रवृत्तिमुपलब्धुं कृपाणपाणिः परदुःखदुः[3]खितहृदयतया गृहान्निर्[4]गमत् । अन्तराले शूद्रकेणावलोक्य सप्रश्रयं प्रणतः पृष्टश्च महानिशायां निर्गमनकारणम् । धरणीपतिरवदद् यदद्य बहिः पुरपरिसरे करुणक्रन्दितध्वनिः श्रवणाध्वनि पथिकभावमनुभवन्नस्ति तत्कारणप्रवृत्तिं ज्ञातु व्रजन्नस्मि । इति राज्ञोक्ते शूद्रको व्यजिज्ञपत्—देव ! [5]प्रतीक्ष्यपादैः स्वसौधालङ्करणाय पादोऽवधार्यताम् । [6]अहमेव तत्प्रवृत्तिमानेष्यामि । इत्यभिधाय वसुधानायकं व्यावर्त्य स्वयं रुदितध्वन्यनुसारेण पुराद् बहिर्गन्तु प्रवृत्तः । पुरस्ताद् व्रजन् दत्तकर्णो 'गोदावर्याः' स्रोतसि कञ्चन रुदन्तमश्रौषीत् । ततः परिकरबन्ध विधाय शूद्रकस्तीर्त्वा यावत् सरितो मध्य प्रयाति तावत् पयःपूरप्लाव्यमानं नरमेकं रुदन्त वीक्ष्य बभाषे— भो कस्त्वम् ? किमर्थं च रोदिषि ? । इत्यभिहितः स नितरामरुदत् । इति निर्बन्धेन पुनः स्पष्टमाचष्ट— भो साहसिकशिरोमणे ! मामितो निष्कास्य भूपतेः समीपं प्रापय येन तत्र स्ववृत्तमाचक्षे । इत्युक्तः शूद्रकस्तमुत्पाटयितुं यावदयतिष्ट तावन्नोत्पटति स्म सः । ततोऽधस्तात्　१०　१५　२०　२५

१ क– 'वक्ष्यमाण०' । २ ख–'न चेत् शूद्रको' । ३ घ-- 'दुस्थितहृदय०' ४ ग– 'रगात्' । ५ पूज्यपादैः । ६ ग–'अहमपि प्रवृत्ति०' ।

केनापि यादसा विधृतोऽयं भवेदित्याशङ्क्य सद्यः कृपाणिकामधो वाहयामास शूद्रकः। तदनु शिरोमात्रमेव शूद्रकस्योद्धर्तुः कर-तलमारोहत्। लघुतया शिरः प्रक्षरद्रुधिरधारमवलोक्य शूद्रको विषादमापन्नश्चिन्तयति स्म— धिग् मामप्रहर्तरि प्रहर्तारं
५ शरणागतघातकं च। इत्यात्मानं निन्दन् वज्राहत इव क्षणं मूर्च्छितस्तस्थौ। तदनु समधिगतचैतन्यश्चिरमचिन्तयत्— कथमि-वैतत्सुदुश्चेष्टितमवनिपतये निवेदयिष्यामि?। इति लज्जितमनास्तत्रैव काष्ठैश्चितां विरचय्य तत्र ज्वलनं [1]प्रज्वाल्य तच्छिरः सह गृहीत्वा यावदुदर्चिषि प्रवेष्टुं प्रववृत्ते तावत् तेन मस्तकेन निजगदे—भो
१० महापुरुष! किमर्थमित्थं [2]करोषि?। अहं शिरोमात्रमेवास्मि [3]सिंहिके-यवत् सदा। तद् वृथा मा विषीद। प्रसीद मां राज्ञः समीपमुपनय इति तद्वचनं निशम्य चमत्कृतचित्तः '[4]प्राणित्ययमिति प्रहृष्टः शूद्रकस्तच्छिरः पट्टांशुकवेष्टितं विधाय प्रातः सातवाहनमुपागमत्। अपृच्छत् पृथिवीनाथः—शूद्रक! किमिदम्?। सोऽप्यवोचत् देव!
१५ सोऽयं यस्य क्रन्दितध्वनिर्देवेन रात्रौ शुश्रुवे। इत्युक्त्वा तस्य प्रागुक्तं वृत्तं सकलमावेदयत्। पुना राजा तमेव मस्तकमप्राक्षीत्—कस्त्वं भो किमर्थं चात्र भवदागमनमिति?। तेनाभिदधे—महाराज! भवतः कीर्तिसुधाकार्णि(?) समाकर्ण्य करुणरुदितव्याजेनात्मानं ज्ञाप-यित्वा त्वामहमुपागमम्। दृष्टश्च भवान्। कृतार्थे मेऽद्य चक्षुषी जाते
२० इति। कां कलां सम्यगवगच्छसीति राज्ञ आज्ञया निरवगीतं गातुं प्रचक्रमे। क्रमेण तद्गानकलया मोहिता सकलाऽपि नृपति-प्रमुखा परिषद्। स च मायासुरनामकोऽसुरस्तां मायां निर्माय महीपतेर्महिषीं महनीयरूपधेयामपजिहीर्षुरुपागतो बभूव। न च विदितचरमेतत् कस्यापि। लोकैस्तु शीर्षमात्रदर्शनात् तस्य प्राकृत-
२५ भाषया सीसुला इति व्यपदेशः कृतः। तदनु प्रतिदिनं तस्मिन्न-

---

१ ग– 'प्रज्वाल्यैतच्छिर.'। २ ख– 'व्यवसीयते भवता यावदहं शिरो०' ३ ग– 'राहुवत्'। ४ जीवति।

तितुम्बरौ मधुरस्वरं गायति सति श्रुतं तत्स्वरूपं महादेव्या दासीमुखेन । भूपं विज्ञाप्य तच्छीर्षं स्वान्तिकमानायितम् । प्रत्यहं तमजीगपत् राज्ञी । दिनान्तरे रात्रौ प्रस्तावमासाद्य सद्य एवापहरति स्म तां मायासुरः । आरोपयामास च तां 'घण्टावलम्बि'[1]-नामनि स्वविमाने । राज्ञी च करुणं क्रन्दितुमारेभे— हाऽहं केनाप्यपह्रियेे । अस्ति कोऽपि वीरः पृथिव्यां यो मां मोचयति ? । तच्च खून्दलाभिख्येन[2] वीरेण श्रुत्वा व्योमन्युत्पत्य च तद्विमानस्य घण्टा पाणिना गाढमधार्यत । ततस्तत्पाणिनाऽवष्टब्धं विमानं पुरस्तान्न प्राचालीत् । तदनु चिन्तितं मायासुरेण—किमर्थं विमानमेतन्न सर्पति ? । यावदद्राक्षीत् तं वीरं हस्तावलम्बित[3]घण्टम् । ततः खड्गेन तद्धस्तमाच्छिदत् । पतितः पृथिव्यां वीरः । स चासुरः पुरः प्राचलत्[4] । ततो विदितदेव्यपहारवृत्तान्तः क्षितिकान्तः पञ्चाशतमेकोनां वीरानादिशद् यत् पट्टदेव्याः शुद्धिः क्रियतां केनेयमपहृतेति । ते प्रागपि शूद्रकं प्रत्यसूयापराः प्रोचुः—महाराज ! शूद्रक एव जानीते । तेनैव तच्छीर्षकमानीतम् । तेनैव देवी जह्रे । ततो नृपतिस्तस्मै कुपितः शूलारोपणमाज्ञापयत् । तदनु देशरीतिवशात् तं रक्तचन्दनानुलिप्ताङ्गं शकटे शाययित्वा तेन सह गाढं बद्ध्वा शूलायै यावद् राजपुरुषाश्चेलुः तावत् पञ्चाशदपि वीराः सम्भूय शूद्रकमवोचन्— भो महावीर ! किमर्थं रण्डेव[5] म्रियते भवान् ? । अशुभस्य कालहरणमिति न्यायात् मार्गय नरेन्द्रात् कतिपयदिनावधिम् । शोधय सर्वत्र देव्यपहारिणम् । किमकाण्डे एव स्वकीयां वीरत्वकीर्तिमपनयासि ? । तेनोक्तम्—गम्यतां तर्हि उपराजम् । विज्ञाप्यतामेनमर्थं राजा । तैरपि तथाकृते प्रत्यानायितः शूद्रकः क्षितीन्द्रेण । तेनापि स्वमुखेन विज्ञप्तिः कृता— महाराज ! दीयतामवधिः येन विचिनोमि प्रतिदिशं देवीं तदपहारिणं च ।

---

१ ख– 'घण्टाविलम्बि०' । २ ख– 'लवूदलाभिख्यखून्दला०' । ३ घ– 'विलम्बित०' । ४ ख– 'प्रचालीत्' । ५ 'रांडीरांड' इति भाषायाम् ।

राज्ञा दिनदशकमवधिर्दत्तः । शूद्रकगृहे च सारमेयद्वयमासीत् तत्सहचारि । नृपतिरवदत्—एतद् भषणयुगलं प्रतिभूप्रायमस्मत्पार्श्वे मुञ्च । स्वयं पुनर्भवान् देव्युदन्तोपलब्धये हिण्डतां महीमण्डलम् । सोऽप्यादेशः प्रमाणमित्युदीर्य प्रवीर्यवाननुपतस्थे । भूचक्रशक्र-
५ स्तत् कौलेयकद्वन्द्वं शृङ्खलाबद्धं शय्यापादयोरबध्नात् । शूद्रकस्तु परितः पर्यटत् । अट्यमानोऽपि यावत् प्रस्तुतार्थस्य वार्तामात्रमपि क्वापि नोपलेभे तावदचिन्तयत्— अहो ममेदमयशः प्रादुरभूद् यदयं स्वामिद्रोही भूत्वा देवीमपाजीहरदिति । न च क्वापि शुद्धिर्लब्धा तस्याः । तस्मान्मरणमेव मम शरणम् । इति विमृश्य
१० दारुभिश्चितामरचयत् । ज्वलनं चाज्वालयत् । यावन्मध्यं प्राविशत् तावत् ताभ्यां शुनकाभ्यां देवताधिष्ठिताभ्यां ज्ञातं यदस्मदधिपतिर्निधनं वाञ्छन्नस्तीति । ततो दैवतशक्त्या शृङ्खलानि भङ्क्त्वा निर्विलम्बौ गतौ तौ तत्र यत्रासीच्छूद्रकरचिता चिता । दशनैः केशानाकृष्य शूद्रकं बहिर्निष्कासयामासतुः । तेनापि अक-
१५ स्मात् तौ विलोक्य विस्मितमनसा निजगदे—रे पापीयांसौ ! किमेतत् कृत भवद्भ्यामशुभवद्भ्याम् ? । राज्ञा मनसि विश्वासनिरासो भविष्यति यत् प्रतिभुवावपि तेनात्मना सह नीतौ । भषणाभ्यां बभाषे— धीरो भव । अस्मद्दर्शितां दिशमनुसर सरभसम् । का चिन्ता तव ? । इत्यभिधाय पुरोभूय प्रस्थितौ तेन सार्धम् । क्रमात्
२० प्राप्तौ 'कोल्लापुर'म् । तत्रस्थं महालक्ष्मीदेव्या भवनं प्रविष्टौ । तत्र शूद्रकस्तां देवीमभ्यर्च्य कुशसंस्तरासीनस्त्रिरात्रमुपावसत् । तदनु प्रत्यक्षीभूय भगवती महालक्ष्मीस्तमवोचत्—वत्स ! किं मृगयसे ? । शूद्रकेणोक्तम्—स्वामिनि ! सातवाहनमहीपालमहिष्याः शुद्धिं वद । क्वास्ते केनेयमपहृताः ? । श्रीदेव्योदितम्—सर्वान् यक्ष-राक्षस-

---

१ श्वयुगमम् । २ घ–'मस्मत्पार्श्वं । ३ गच्छतु । ४ ग–'वान् प्रतस्थे' । ५ श्वयुगलम् । ६ ग– 'पादेऽबध्नीत्' । ७ अग्निम् । ८ ख– घ–'प्रविशेत्' । ९ ख– घ– 'धनायन्नस्तीति' । १० घ–'नीतावपि (?)' ।

भूतादिदेवगणान् सम्मील्य तत्प्रवृत्तिमह निवेदयिष्यामि, परं तेषां कृते त्वया बल्युपहारादि प्रगुणीकृत्य धार्यम् । यावच्च ते कणेहत्य बल्याद्युपभुज्य प्रीता न भवेयुस्तावत् त्वया विघ्ना रक्षणीयाः । ततः **शूद्रको** देवतानां तर्पणार्थं कुण्ड विरचय्य होममारेभे । मिलिताः सकलदैवतगणाः । स्वां स्वां भुक्तिमग्निमुखेन जगृहिरे । तावत् ५ तद्धोमधूमः प्रसृमरः प्राप तत्स्थानं यत्र **मायासुरो**ऽभूत् । तेनापि परिज्ञातलक्ष्म्यादिष्ट**शूद्रक**होमस्वरूपेण प्रेषितः स्वभ्राता **कोल्ला-सुर**नामा होमप्रत्यूहकरणाय । समागतश्च वियति **कोल्लासुरः** स्वसेनया समम् । [1]दृष्टस्तद्दैवतगणैः । चकित च तैः । ततो भषणौ दिव्यशक्त्या युयुधाते दैत्यैः सह । क्रमान्मारितौ च तौ १० दैत्यैः । तत् **शूद्रकः** स्वयं योद्धुं प्रावृतत् । क्रमेण दण्डव्यति-रिक्तप्रहरणान्तराभावाद् दण्डेनैव बहून् निधनं नीतवानसुरान् । ततो दक्षिणबाहुं दैत्यास्तस्य चिच्छिदुः । पुनर्वामदोष्णैव दण्ड-युद्धमकरोत् । तस्मिन्नपि छिन्ने दक्षिणांह्रिणोपात्तदण्डो योद्धुं लग्नः । तत्रापि दैत्यैर्लूने वामपादात्तयष्टिरयुध्यत । तमपि क्रमादच्छिदन्न- १५ सुराः । ततो दन्तैर्दण्डमादाय युयुधे । ततस्तैर्मस्तकमच्छेदि । अथाकण्ठतृप्ता दैवतगणास्तं **शूद्रकं** भूमिपतिताशिरस्कं दृष्ट्वा अहोऽस्मद्भुक्तिदातुर्वराकस्य किं जातमिति परितप्य योद्धुं प्रवृत्ताः **कोल्लासुर**ममारयन् । ततः श्रीदेव्याऽमृतेनाभिषिच्य पुनरनुसंहिताङ्गश्चक्रे **शूद्रकः** प्रत्युज्जीवितश्च । सारमेयावपि २० पुनर्जीवितौ । देवी च प्रसन्ना सती तस्मै खड्गरत्न प्रादात् । अनेन त्वमजय्यो भविष्यसीति च वर व्यतरत् । ततो **महालक्ष्म्यादि-**दैवतगणैः सह **सातवाहन**देव्याः शुद्ध्यर्थं समग्रमपि भुवनं परि-भ्रम्य प्राप्तः **शूद्रको** महार्णवम् । तत्र चैकं वटतरुमुच्चैस्तरं निरीक्ष्य विश्रामार्थमारुरोह यावत् तावत् पश्यति तच्छाखायां लम्बमानमधः- २५ शिरसं काष्ठकीलिकाप्रवेशितोर्ध्वपादं पुरुषमेकम् । स च प्रसा-

१ तृप्तिपर्यन्तम् । २ ग– 'दृष्ट' स्वदैवत०' । ३ हस्तेन ।

रितजिह्वोऽन्तर्नीरं विचरतो जलचरादीन् भक्षयन् वीक्षितस्तैः। पृष्टश्च **शूद्रकेण**—कस्त्वं किमर्थं चेत्थं लम्बितोऽसि?। तेनोक्तम्—अहं **मायासुरस्य**[1] कनिष्ठो भ्राता। स च मदनोन्मादिष्णुर्मदग्रजः 'प्रतिष्ठाना'धिपतेः **सातवाहनस्य** नृपतेर्महिषीं [2]रिरंसुरपाहरत्
५ सीतामिव **द[3]शवदनः**। सा च पतिव्रता तन्नेच्छति। तदनुप्रोक्तोऽग्रजन्मा—न युज्यते परदारापहरणं तव।

विक्रमाक्रान्तविश्वोऽपि, परस्त्रीषु रिरंसया।
कृत्वा कुलक्षयं प्राप, नरकं **दशकन्धरः** ॥१॥[4]

इत्यादिवाग्भिर्निषिद्धः क्रुद्धो मह्यं **मायासुरो**ऽस्यां वटशाखायां
१० [5]टङ्कित्वा मामित्थं व्यडम्बयत्। अहं च प्रसारितरसनः समुद्रान्तः सञ्चरतो जलचरादीनभ्यवहरन् प्राणयात्रां करोमि। इति श्रुत्वा **शूद्रको**ऽप्यभाणीत्—अहं तस्यैव महीभृतो भृत्यः **शूद्रक**नामा तामेव देवीमन्वेष्टुमागतोऽस्मि। तेनोक्तम्— एवं चेत् तर्हि मां मोचय यथाऽहं सह भूत्वा तं दर्शयामि तां च देवीम्। तेन स्वस्थानं
१५ परितो [6]जातुपं दुर्गं कारितमस्ति। तच्च निरन्तरं प्रज्वलदेवास्ति। [7]ततस्तदुल्लङ्घ्य तन्मध्ये प्रविश्य तं निपात्य देवी प्रत्याहर्तव्या। इत्याकर्ण्य **शूद्रकस्तेन** कृपाणेन तत्काष्ठबन्धनानि छित्त्वा तं पुरोधाय दैवतगणपरिवृतः प्रस्थाय प्राकारमुल्लङ्घ्य तत्स्थानान्तः प्राविशत्। दैवतगणांश्चालोक्य **मायासुरः** स्वसैन्यं युद्धाय प्रजिघाय। तस्मिन्
२० [8]पञ्चतामञ्चिते स्वयं योद्धुमुपतं[9]स्थौ। ततः क्रमेण **शूद्रकस्तेना**सिना तमवधीत्। ततो 'घण्टाव[10]लम्बि'विमानमारोप्य देवीं दैवतगणैः सह प्रस्थितः 'प्रतिष्ठानं' प्रति।

इतश्च दशमं दिनमवधीकृ[11]तमागतमवगत्य जगत्यधिपतिर्ध्यातवान्—अहो मम न महादेवी, न च **शूद्रकवीरः**, [12]न चापि तौ।

---

१ क- 'मायामुलस्य'। २ ग- 'वाञ्छनपा०'। ३ रावणः। ४ अनुष्टुप्। ५ बद्ध्वा, 'टांगीने' इति भाषायाम्। ६ लाक्षामयम्। ७ ग-'ततो दुर्लङ्घ्यं तन्मध्ये'। ८ मृत्युं गते। ९ घ- 'तस्थे' १० घ-'विलम्बि०'। ११ क-ख-'कृत्यमागत०' १२ घ- 'नापि च तौ'।

[1]रसनालिहौ; सर्वं मयैव कुबुद्धिना विनाशितम्। इति शोचनात् सपरिच्छद एव प्राणत्यागचिकीः पुराद् बहिश्चितामरचयच्चन्दनादिदारुभिः। यावत् क्षणा[2]दाशुशुक्षणिं क्षेप्स्यति [3]परिजनश्चितायां तावद् वर्धापक एको देवगणमध्यात् समायासीद् व्यजिज्ञपच्च सप्रश्रयम्— देव! दिष्ट्या वर्धसे महादेव्यागमनेन। तन्निशम्य श्रवणरम्यं नरेश्वरः स्फुरदानन्दकन्दलितहृदय ऊर्ध्वमवलोकयन्नालुलोके नभसि दैवतगणं **शूद्रकं** च। अयमपि विमानादवतीर्य राज्ञः पदोरपतत् महादेवी च। अभिननन्द सानन्दं मेदिनीन्दुः शूद्रकम्। राज्यार्धं तस्मै प्रादिशत्। सोत्सवमन्तर्नगरं प्रविश्य श्रुतशूद्रकचारुचरितः सह महिष्या राज्यश्रियमुपबुभुजे महाभुजः।

तस्य च **सातवाहनस्य चन्द्रलेखाद्याः** पञ्च शतानि पत्न्यः सर्वा अपि षड्भाषाकवित्वविदः। राजा पुनरनधीतव्याकरणः। आगत उष्णकालः। आरब्धा जलकेलिः। **चन्द्रलेखा** तु शीतालुः शीतं न सहते। नृपस्तु प्रेम्णा शृङ्गकजलैस्तामनवरतं [5]सिञ्चति। ततः सा संस्कृतेन प्राह— देव! मा मोदकैः पूरय। **हालस्तु** तत्संस्कृततत्त्वमनवगच्छन् मोदकनाम श्रुत्वा दास्याः पार्श्वान्मोदकपटलिकामानीनयत्। **चन्द्रलेखा** तां दृष्ट्वा पतिमति[6]भ्रमदर्शनादहसीत्—अहो महाराजस्य शास्त्रोत्तेजितमतिव्यापः!। राज्ञाऽप्युपहासो ज्ञातः। पृष्टा राज्ञी — किमर्थं वयमुपहस्यामहे!। राज्ञी जगाद —अन्यार्थस्थानेऽन्यार्थावबोधाद् हसितोऽसि प्रिय!। लज्जितो राजा। सद्यो [7]विद्यार्थं **भारतीं** त्रिरात्रोपवासेनाराध्य प्रत्यक्षीकृत्य तद्वरान्महाकविर्भूत्वा **सारस्वतव्याकरणा**दिशास्त्रशतान्यं[8]चीचरत्। तस्येश्वरस्य [9]गुणकृत्वो **भारती** देवताऽत्रसरेऽवतीर्याह। एकदा **भारती**मभ्यर्थयत्—सकलमपि पुर आधयामार्ध

१ श्वानौ। २ अग्निम्। ३ क- 'पर्जन्य०'। ४ घ- 'जनश्च तौ तावद्'। ५ क- ख- 'सिञ्चते'। ६ ग- 'श्रम०'। ७ क- 'विद्यावर्षं'। ८ क-घ-'चीरुपत् ख-'चीपकृत्'। ९ ग-'गण०'।

अहः कविरूपं भवतु । तथैवं कृतं देव्या । एकस्मिन् दिने दश-
कोट्यो गाथाः सम्पन्नाः । **सातवाहन**कशास्त्रं तत्कृतम् । [1]तस्य
चोर्वीपतेः [2]**खरमुखो** नाम दण्डनाथः शूरो भक्तः प्राज्ञः पुण्याढ्य आ-
रम्भ[3]सिद्धः। एकदा **हाले**नादिष्टं **खरमुखाय**—'मथुरां' लाहि । आदेशः
५ प्रमाणमित्युक्त्वा बहिर्व्यापारिणां पार्श्वमेत्य राजादेशमचीकथत्।
व्यापारिभिः प्रोक्तम्—**खरमुख** ! द्वे 'मथुरे' स्तः । एका 'दक्षिण-
मथुरा' **पाण्डव**कृता, अपरा 'पूर्वमथुरा' यद्गोष्ठे **कृष्णः** समुत्पन्नः यत्र
'वृन्दावना'दीनि वनानि । द्वयोर्मध्यात् का 'मथुरा' ग्राह्येति पृच्छ ।
**खरमुखे**नोक्तम्—प्रतापमार्तण्डं तं कः प्रष्टुमीष्टे ? । वक्ष्यति हि रे
१० मम चेतो न जानीथ ? । तस्य च प्रकोपः सद्यः प्राणहरः । द्वे
अपि 'मथुरे' ग्रहीष्यामः । सैन्यं द्विखण्डं कृत्वा द्वे 'मथुरे' एक-
स्मिन्नेव मध्याह्ने **खरमुखेन** जगृहाते । तत्पुरीद्वयग्रहणवर्धापनिका-
मुखौ द्वौ नरौ [4]आगमताम् । यावत् प्रमोदात् तौ नृपतिरालपति तावत्
तृतीय एक आगात् । स उवाच—देव ! भवत्काराप्यमाणजैनप्रासाद-
१५ भूमितलेऽक्षयो निधिः प्रादुर्बभूव दिष्ट्या । यावत् तदभिमुखमीक्षते
तावदेव दासी **प्रेममञ्जूषा** [5]शुद्धान्तादायासीत् —स्वामिन् !
देव्या **चन्द्रलेखया** सर्वाङ्गलक्षणः सुतो जातः । चतस्रोऽपि वर्धा-
पनिका दत्ताः क्ष्मापालेन । तेन प्रमोदेनास्य महोन्माद उत्पन्नः ।
ततो मेलयित्वा लोकं हयारूढो 'गोदावरी'तीरमुपेत्य तां जगाद
२० तारतरस्वरम्—

[6]सच्चं भण 'गोदावरि !' पुव्वसमुद्देण साहिया संती ।
[7]सालाहणकुलसरिसं जइ ते कूले कुलं अत्थि ? ॥१॥[8]

---

१ ग—'तत्र चोर्वी०'। २ ख—'सुरमुखो'। ३ ख—'सिद्धिः'। ४ ग—'आयातौ'।
५ अन्तःपुरात् ।
६ छाया—सत्यं भण गोदावरि ! पूर्वसमुद्रेण साधिका सती ।
**सालिवाहन**कुलसदृशं यदि ते कूले कुलमस्ति ? ॥
७ घ—'सीलाहण०' । ८ आर्या ।

उत्तरओ[1] हिमवंतो दाहिणओ [2]सालिवाहणो राजा(या)।
समभारभरकंता तेण न [3]पल्हत्थए पुहवी ॥२॥[4]

तादृशं तस्य गर्वमीक्षमाणा महामन्त्रिणोऽन्योन्य मन्त्रयामासु :—नृपः श्रिया तरलितः। ततः—

जितश्चेत् पुरुषो लक्ष्म्या, हतं लोकद्वय ततः।　　५
जिता चेत् पुरुषेणैषा, जित लोकद्वयं ततः ॥१॥[6]

तस्मादस्य दुःखोत्पादनेन मदगदोच्छेदः कर्तुमर्हः। इत्यालोच्य राजानं व्यजिज्ञपन्—देव! ललाटतपतपनः काल भोजनावसरो वर्तते। पादोऽवधार्यतां सौधाय। इत्युदित्वा सौधमानैषुः। तत्रापि मदात् स्तम्भादीनि कुट्टयति। ततो मन्त्रिभिः खरमुखं वीरोत्तंसं　१० छन्नीकृत्य राज्ञे उक्तम्—देव! खरमुखः सद्यो व्याधिना धामगमत्। अथ तच्छ्रवणे क्ष्मापो दुःखाच्छोकान्मदमहासीत्। शोकात् तु वैकल्यमचकलत्। अथामात्यैर्विज्ञप्तम्—प्रजेश्वर! विदेशादायातैर्मृत-जीवनविद्याविदुरैः खरमुखो जीवितः। यथादेशः स्यात् तदा पदकमलयुगलतले लोन्यते। इत्युक्ते सुस्थो जातः। दृष्टः खरमुखः।　१५ सुष्ठु तुष्टो राजा। एवं तस्योदयः।

अन्यदाऽसौ 'गोदावरी'तीरे क्रीडति। तदैकमीनेन जलाद् बहिर्मुखं निष्कास्य हसितम्। भीतश्चमत्कृतश्च भूपः। रात्रौ ध्यानाकृष्टाऽऽयाता ब्राह्मी पृष्टा—देवि! मीनः किमर्थ हसति?। ब्राह्म्याह—वत्स! प्राग्भवे त्व अत्रैव पुरे काष्ठभारहारक　२० आसीः। स च मध्याह्ने काष्ठकष्टार्जितधनक्रीतान् सक्तून् उष्णो-दकविलोडितान् मासक्षपणिकऋषये मुदा ददे। तेन पुण्येन त्वं

---

१ छाया–उत्तरतो हिमवान् दक्षिणतः सालिवाहनो राजा।
समभारभराक्रान्ता तेन न पर्यस्यते पृथ्वी॥
२ ग–'सालवाहणराया'। ३ ग–'पल्हत्थए'। ४ आर्या। ५ ख–घ–'तादृ०'। ६ अनुष्टुप्।

सम्राडवातरीः। तदेकस्तत्रत्यो व्यन्तरो वेत्ति। तेन मीने सङ्क्रम्य हसितं त्वया दृष्टम्। राजाऽऽह—हासस्य को भावः?। ब्राह्मी वक्ति अयं भावः— अयं दानादात्तर्द्धिः पुनर्दाने मन्दादरः। धिगात्मकार्यमूढं जीवलोकमिति। सातवाहनो जल्पति—तस्य व्यन्तरस्य मच्चर्चया किं कार्यम्?। ब्राह्म्याह — प्राग्भवेऽयं तवैव सखाऽभूत्। तेन कृपणत्वात् किमपि न दत्तम्, केवलं त्वद्दत्तमेव किञ्चिदनुमोदितम्। तेन पुण्येन व्यन्तरत्वे नावतीर्णोऽयम्। ततस्त्वयि हितार्थित्वमस्य। मां च त्वन्मन्त्रशक्तिसमाकृष्टिप्रत्यक्षां त्वन्मातृकल्पां जानाति। ततस्तथाऽहसदिति विद्धि। तद्वृत्तान्तज्ञानादवनीशो वदान्यत्वं सुष्ठ्वाददे। ब्राह्मीश्रीदत्तशब्दवेधरससिद्धेरिच्छादानी मानी जैनः। इत्थङ्कारं नानाविधान्यवदातानि हालक्षितिपालस्य कियन्ति नाम वर्णयितुं पार्यन्ते?। स्थापित चानेन 'गोदावरी'तीरे महालक्ष्मीः[3] प्रासादे। अन्यान्यपि च यथार्हं दैवतानि निवेशितानि तत्तत्स्थानेषु।

राज्यं प्राज्यं चिरं भुञ्जाने जगतीजानौ अन्यदा कश्चिद् दारुभारहारकः कस्यचिद् वाणिजस्य वीथौ प्रत्यहं चारुकाणि दारूण्याहृत्य विक्रीणीते स्म। दिनान्तरे च तस्मिन्ननुपेयुषि वणिजा तद्भगिनी पृष्टा—किमर्थं भवद्भ्राताऽद्य नागतो मद्वीथ्याम्?। तया बभणे—श्रेष्ठिश्रेष्ठ! मत्सोदर्यः स्वर्गिषु सम्प्रति प्रतिवसति। वणिगभणत्—कथमिव?। साऽवदत्—कङ्कणबन्धादारभ्य विवाहप्रकरणे दिनचतुष्टयं नरः स्वर्गिष्विव वसन्तमात्मानं मन्यते, तदुत्सवालोकनकौतूहलात्। तच्चाकर्ण्य राजाऽप्याचिन्तयत्—अहो अहं स्वर्गिषु किं न वसामि?। चतुर्षु चतुर्षु दिनेषु अनवरतं विवाहोत्सवमय एव स्थास्यामि। इति विचार्य चातुर्वर्ण्ये यां यां कन्यां युवतिं रूपशालिनीं पश्यति शृणोति स्म च तां तां सोत्सवं पर्यणैषीत्।

१ ग– 'भूपोऽभूत्'। २ 'पुनः' इत्यधिको ग–पाठः। ३ घ–'लक्ष्मी प्रासादे'। ४ घ–'चारुपाणि'।

एवं च भूयस्यनेहसि गच्छति लोकैश्चिन्तितम्– अहो कथं भाव्यमनपत्यैरेव सर्ववर्णैः स्थेयम्? । सर्वाः कन्यास्तावद् राजैव विवोढा । योषिदभावे च कुतः सन्ततिरिति?। एवं विषण्णेषु लोकेषु 'विवाहवाटिका'नाम्नि ग्रामे वास्तव्य एको द्विजः **पीठजां** देवी-माराध्य व्यजिज्ञपत्– भगवति! कथं विवाहकर्माऽस्मदपत्यानां भावीति? । देव्योक्तम्–भो वाडव! त्वद्भवनेऽहमात्मानं कन्यारूपं कृत्वाऽवतरिष्यामि । यदा मां राजा प्रार्थयते तदाऽहं तस्मै देया, शेषमहं करिष्ये । तथैव राजा तां रूपवतीं श्रुत्वा विप्रमयाचत । सोऽपि जगाद– दत्ता मया, परं महाराज! स्वयमत्रागत्य मत्कन्यो-द्वोढव्या। प्रतिपन्नं राज्ञा । गणकदत्ते लग्ने क्रमाद् विवाहाय प्रचलितः । प्राप्तश्च तं ग्रामं श्वशुरकुलमवनिपतिः । देशाचारानु-रोधाद् वधूवरयोरन्तराले जवनिका दत्ता । अञ्जलिर्युगन्धरीलाजै-र्भृतः । लग्नवेलायां [2]तिरस्करिणीमपनीय यावदन्योन्यस्य शिरसि लाजान् वितरितुं प्रवृत्तौ तदनु किल हस्तमेलापो भविष्यतीति तावद् राजा तां रौद्ररूपां राक्षसीमिवैक्षिष्ट । ते च लाजाः [3]कठिन-कर्करपाषाणरूपा राज्ञः शिरसि लगितुं लग्नाः । क्षितिपतिरपि किमपि विकृतमिदमिति विभावयन् पलायितः । तावत् सा पृष्ठ-लग्नाऽश्मशकलानि वर्षन्ती प्राप्ता । ततो नरपतिर्नागह्रदे प्राविशन्निज-जन्मभूमिम् । तत्रैव च निधनमानशे । अद्यापि सा **पीठजा** देवी प्रतोल्या बहिरास्ते निजप्रासादस्था । **शूद्रको**ऽपि क्रमेण **कालिकादेव्या**ऽजारूपं विकृत्य वापी प्रविष्टया करुणरसितेन विप्रलब्धस्तन्निष्कासनार्थं प्राविशत् । पतितस्य तस्य कृपाणस्य कूपद्वारे तिर्यक्पतनाच्छिन्नाङ्गः पञ्चतामानञ्च । **महालक्ष्म्या** हि वरवितरणावसरेऽस्माद् देवैकौशेयकात् तव दिष्टान्तावाप्तिर्भवित्री-त्यादिष्टमासीत् । ततः **शक्तिकुमारो** राज्येऽभिषिक्तः । [6]सात-

१ घ–'भलिष्ये' । २ जवनिकाम् । ३ घ–'कठिनपाषाणकर्कररूपा' । ४ ख–'रति किमपि' । ५ ग 'खङ्गात् तव मरणं भावीत्या०' । ६ ख–घ–'शातवाहनाय' ।

**वाहनस्य** निसूदनान्तरमथापि राजा न कश्चित् ‘प्रतिष्ठाने’ प्रविशति, [1]वीरक्षेत्रत्वात्। अत्र च [2]यदसम्भाव्यं कश्चिद् गर्भे तत्र परसमय एव मन्तव्यो हेतुः, यन्नासङ्गतवाग्जनो जैनः। श्री**वीरे** शिवं गते ४७० (वर्षे) **विक्रमार्को** राजाऽभवत्। तत्कालीनोऽयं **सातवाहनः**,तत्प्रति-
५ पक्षत्वात्। यस्तु **कालिकाचार्य**पार्श्वात् पर्युषणामेकेनाह्ना अर्वागानाययत् सोऽन्यः **सातवाहन** इति सम्भाव्यते; अन्यथा

[3]नवसयतेणउएहिं समक्कंतेहिं **वीरमुक्खाओ** ।
पज्जोसवणचउत्थी **कालयसूरेहिं** तो ठविआ ॥१॥[4]

इति चिरत्नगाथाविरोधप्रसङ्गात् । न च **सातवाहन**क्रमिकः **सात-**
१० **वाहन** इति विरुद्धम्, **भोज**पदे बहूनां **भोज**त्वेन, **जनक**पदे बहूनां **जनक**त्वेन रूढत्वात्।

॥ इति [5]शातवाहनचरित्रम् ॥ १५ ॥



---

१ घ–‘वीरक्षेत्रे इति’। २ ग–‘यदसद्भाव्यं’।
३ छाया– नवशतत्रिनवत्या समाक्रान्तैर्वीरमोक्षात्।
पर्युषणचतुर्थी कालिकसूरिभिस्तावत् स्थापिता ॥ ४ आर्या।
५ ग–‘शालिवाहनप्रबन्ध’।

## [ १६ ]

## ॥ अथ वङ्कचूलप्रबन्धः ॥

'पारेत'जनपदान्त–'श्चर्मण्वत्या'स्तटे महानद्याः।
नानाघनवनगहना, जयत्यसौ 'ढीम्पुरी'ति पुरी ॥ १॥[1]

अत्रैव 'भारते' वर्षे **विमलयशा** नाम भूपतिरभूत्। तस्य **सुमङ्गला**-देव्या सह विषयसुखमनुभवतः क्रमाज्जातमपत्ययुगलम्। तत्र पुत्रः **पुष्पचूलः** पुत्री **पुष्पचूला**। अनर्थसार्थमुत्पादयतः पुष्पचूलस्य कृतं लोकैर्वङ्कचूल इति नाम। महाजनोप(पा?)लब्धेन राज्ञा रुषितेन निःसारितो नगराद् **वङ्कचूलः**। गच्छंश्च पथि पतितो भीषणायामटव्यां सह निजपरिजनेन स्वस्रा च स्नेहपरवशया। तत्र च क्षुत्पिपासार्दितो दृष्टो भिल्लैः नीतः स्वपल्ल्याम्। स्थापितश्च पूर्व[2]पल्लीपतिपदे। पर्यपालयद् राज्यम्। अलुण्टयद् ग्राम-नगर-सार्थादीन्।

अन्यदा **सुस्थिताचार्या** 'अर्बुदा'चला'दष्टापद'यात्रायै प्रस्थितास्तामेव 'सिंहगुहां' नाम पल्लीं सगच्छाः प्रापुः। जातश्च वर्षाकालः। अजनि पृथिवी जीवाकुला। साधुभिः सहालोच्य मार्गयित्वा वङ्कचूलाद् वसतिं स्थितास्तत्रैव सूरयः। तेन च प्रथममेव व्यवस्था कृता— मम सीमान्तधर्मकथा न कथनीया, यतो युष्मत्कथायां अहिंसादिको धर्मः, न चैवं मम लोको निर्वहति। एवमस्तु इति प्रतिपद्य तस्थुरुपाश्रये गुरवः। वङ्ककचूलेनाहूय सर्वे प्रधानपुरुषा भणिताः —अहं राजपुत्रस्तन्मत्समीपे ब्राह्मणादय आगमिष्यन्ति। ततो भवद्भिर्जीववधो मांसमद्यादिप्रसङ्गश्च प[3]ल्लीमध्ये न कर्तव्यः। एवं कृते यतीनामपि भक्तपानमजुगुप्सितं कल्पत इति। तैस्तथैव कृतं यावच्चतुरो मासान्। प्राप्तो विहार-

५ १० १५ २०

---

१ आर्या। २ ग–'मृतपूर्व०'। ३ ग–'पल्ल्या मध्ये'।

समयः । अनुज्ञापितो वङ्कचूलः सूरिभिः—

> समणाणं सउणाणं भमरकुलाणं गोकुलाणं च ।
> अनिआओ वसहीओ सारईआणं च मेहाणं ॥ १ ॥[1,2]

इत्यादि वाक्यैः । ततस्तैः सह चलितो वङ्कचूलः । स्वसीमां
५ प्रापुषा तेन विज्ञप्तम्—वयं परकीयसीमां न प्रविशाम इति ।
सूरिभिर्भणितः—– वयं सीमान्तरमुपेताः तत् किमप्युपदिशाम-
स्तुभ्यं, दाक्षिण्यात्[3] । तेनोक्तम्—यन्मयि निर्वहति तदुपदेशेनानु-
गृह्यतामयं जनः । ततः सूरिभिश्चत्वारो नियमा दत्ताः, तद्यथा—
अज्ञातफलानि न भोक्तव्यानि १, सप्ताष्टानि पदान्यपसृत्य घातो
१० देयः २, पट्टदेवी नाभिगन्तव्या ३, काकमांसं न भक्षणीयमिति
४ । प्रतिपन्नास्तेन ते । गुरून् प्रणम्य स्वगृहमगमत्[4] ।

अन्यदा गतः सार्थस्योपरि धाट्याम्[5] । शकुनकारणान्न गतः
सार्थः । त्रुटितं च तस्य पथ्यदनम्[6] । पीडिताः क्षुधा राजन्याः । दृष्टश्च
तैः[7] किम्पाकतरुः फलितः । गृहीतानि फलानि । न जानन्ति ते
१५ नामधेयमिति तेन न भुक्तानि । इतरैः सर्वैर्बुभुजिरे । मृताश्च ते
किम्पाकफलैः । ततश्चिन्तितं तेन—अहो नियमानां फलम् ! । तत
एकाक्येवागतः पल्लीम् । रजन्यां प्रविष्टः स्वगृहम् । दृष्टा
पुष्पचूला दीपालोकेन पुरुषवेषा निजपत्न्या सह प्रसुप्ता । जातश्च
कोपस्तयोरुपरि । द्वावप्येतौ खड्गप्रहारेण छिनद्मि । इति यावद-
२० चिन्तयत् तावत् स्मृतो नियमः । ततः सप्ताष्ट पदान्यपक्रम्य[8] घातं
ददतः खाटूकृतमुपरि[9] खड्गेन । व्याहृतं स्वस्रा—जीवतु वङ्कचूलः ।

---

१ छाया—– श्रमणानां शकुनानां भ्रमरकुलाना गोकुलाना च ।
अनियता वसतयः शारदीयाना च मेघानाम् ॥ २ आर्या ।
३ 'दाक्षिण्यात्' इति पाठः घ-प्रतौ नास्ति । ४ ख-घ-'स्व(स?)स्वगृहमगमन्'
५ घ-'परिपघा(?)शकुन०' । ६ क-ख-'पथ्यदिनम्', घ-'एष्यदिनम्' । ७ क-
'इति तैः' । ८ घ-'पदान्यपसृत्य' । ९ घ-'खाटत्कृत०' ।

तद्वचः श्रुत्वा लज्जितोऽसावपृच्छत्— किमेतदिति [1] । साऽपि नटवृत्तान्तमचीकथत् —भ्रातरत्र प्रतिभूपतेर्नटवेपधराश्चरा आगच्छन् । यदि पल्ल्यां वङ्कचूलोऽस्ति तदाऽस्माकं नृत्यं पश्यतु इत्यब्रुवन् । तदा मयाऽचिन्ति— साम्प्रतं भ्राता वङ्कचूलो नास्ति गृहे । तदा मया तव वेपधारिण्या नृत्यमकारि तेपां पार्श्वा- ५
त् । दानमदायि तेभ्यः । गताश्च ते स्वस्थानम् । [2]ततो बहुनिशागमनेन निद्रापरवशा [3]तेनैव वेषेण भ्रातृजायापार्श्वे अस्वपम् । इति वृत्तान्तं श्रुत्वाऽतीव मनसि खेदो दध्रे तेन ।

कालक्रमेण तस्य तद्राज्यं शासतस्तत्रैव पल्ल्यां तस्यैवाचार्यस्य शिष्यौ धर्मऋषि-धर्मदत्तनामानौ कदाचिद् वर्पारात्रमवास्थिपाताम् । १०
तत्र तयोरेकः साधुस्त्रिमासक्षपणं विदधे, द्वितीयस्तु चतुर्मासक्षपणम् । वङ्कचूलस्तु तद्दत्तनियमानामायतिशुभफलतामवलोक्य व्यजिज्ञपत् —हे भदन्तौ ! मदनुकम्पया कमपि पेशलं धर्मोपदेशं दत्त[4], ततस्ताभ्यां चैत्यविधापनदेशना पापनाशिनी विदधे । तेनापि '[5]शैराविका'पर्वतसमीपवर्तिन्यां तस्यामेव पल्ल्यां 'चर्मण्वती'सरित्तीरे १५
कारितमुच्चैस्तरं चारु चैत्यम् । स्थापितं च तत्र श्रीमन् महावीरबिम्बम् । तीर्थतया च रूढं तत् । [6]तत्रायान्ति स्म चतुर्दिग्भ्यः सङ्घाः । कालान्तरे कश्चिन्नैगमः सभार्यः सर्वद्धर्या तद्यात्रायै प्रस्थितः प्राप्तः क्रमेण '[7]रन्ति'नदीम् । नावमारूढौ च दम्पती चैत्यशेखरं व्यलोकयताम् । ततः सरभसं सौवर्णकच्चोलके कुङ्कुमचन्दन- २०
कर्पूरं प्रक्षिप्य जलं क्षेप्तुमारब्धवती नैगमगृहिणी । प्रमादात् निपतितं तदन्तर्जलतलम् । ततोऽभाणि वणिजा—अहो इद कच्चोलकं नैककोटिमूल्यरत्नखचितं राज्ञा ग्रहणकेऽर्पितमासीत् ।

---

१ घ-'कथत् कथ भ्रात०' । २ 'ततो बहु' इत्यारभ्य 'परवशा'पर्यन्त पाठाधिक्यं ग-पुस्तके वर्तते । ३ ख-घ-'तेन वेषेण' । ४ ख-घ 'दत्तम्' । ५ ख--शिरोनामिदंविका(?)पर्वत०', घ - 'शिरानामदविकापर्वत०' । ६ ख-घ--' तत्र यान्ति ' । ७ घ--'रतिनदीम्' ।

ततो राज्ञः कथं छुटितव्यम् ? । इति चिरं विषद्य वङ्कचूलस्य पल्लीपतेर्विज्ञापितं तत्, यथा— अस्य राजकीयवस्तुनो विचितिः कार्यताम् । तेनापि धीवर आदिष्टः तच्छोधयितुं प्राविशदन्तर्नदीम्[1]। विचिन्वता [2]चान्तर्जलतलं दृष्टं तेन [3]हिरण्यमयरथस्थं जीवन्तस्वामि-
५ श्रीपार्श्वनाथबिम्बं यावत् पश्यति स्म स बिम्बस्य हृदये तत्कच्चोलकम् । धीवरेणोक्तम्—धन्याविमौ दम्पती यद् भगवतो वक्षसि [4]घुसृणचन्द्रचन्दनाविलेपनार्हे स्थितमिदम् । ततो गृहीत्वा तदर्पितं नैगमस्य । तेनापि दत्तं तस्मै बहु द्रव्यम् । उक्तं च बिम्बस्वरूपं नाविकेन । ततो वङ्कचूलेन श्रद्धालुना तमेव प्रवेश्य
१० निष्कासितं तद् बिम्बम् । कनकरथस्तु [5]तत्रैव मुक्तः । निवेदितं हि स्वप्ने प्राग् भगवता [6]नृपतेः—यत्र क्षिप्ता सती पुष्पमाला गत्वा तिष्ठति तत्र बिम्बं शोध्यमिति । तदनुसारेण बिम्बमानीय समर्पितं राज्ञे वङ्कचूलाय । तेनापि स्थापितं श्रीवीरबिम्बस्य बहिर्मण्डपे, यावत् किल नव्यं चैत्यमस्मै कारयामि इत्यभिसन्धिमता । कारिते च
१५ चैत्यान्तरे यावत् तत्र स्थापनार्थमुत्थापयितुमारभन्ते राजकीयाः पुरुषास्तावद् बिम्बं नोत्तिष्ठति स्म । देवताधिष्ठानात् तत्रैव स्थित-मद्यापि तथैवास्ते । धीवरेण पुनर्विज्ञप्तः पल्लीपतिः—यत् तत्र देव ! मया नद्यां प्रविष्टेन बिम्बान्तरमपि दृष्टम् । तदपि बहिरा-नेतुमौचितीमञ्चति । पूजारूढं हि भवति । ततः पल्लीश्वरेण पृष्टा
२० स्वपरिषत्—भो जानीते कोऽपि अनयोर्बिम्बयोः संविधानकम् ? । केन खल्वेते नद्यन्तर्जलतले न्यस्ते ? । इत्याकर्ण्यैकेन पुराविदा स्थविरेण विज्ञप्तम्—

देव ! एकस्मिन्नगरे पूर्वं नृपतिरासीत्[7] । स च परचक्रेण समुपेयुषा सार्धं योद्धुं सकलचमूसमूहं सन्नह्य गतः[8] । तस्याग्र-
२५ महिषी च निजं सर्वस्वमेतच्च बिम्बद्वयं कनकरथस्थं विधाय

१ घ–'नंदम्'। २ घ–'भ्रान्तर्जल०'। ३ क–घ–'हिरणमय०'। ४ कर्पूर०। ५ ख–वदन०'। ६ ख–घ–'तथैव'। ७ क–ख–घ–'नृपेण'। ८ घ–'समूलसन्नह्तेन गतः'

जलदुर्गमिति कृत्वा 'चर्मण्वत्यां' कौटिम्बिके प्रक्षिप्य स्थिता। चिरं युद्धवतस्तस्य कोऽपि खलः किल वार्तामानैषीद् यदयं नृपतिस्तेन परचक्राधिपतिना व्यापादित इति। तच्छ्रुत्वा[1] देवी तत्कौटिम्बिकमाक्रम्यान्तर्जलतल प्राक्षिपत्। स्वयं च [2]परासुतामा-सदत्। स च नृपतिः परचक्रं निर्जित्य यावन्निजनगरमागमत् ५ तावद् देव्याः प्राचीनवृत्तमाकर्ण्य भवाद् विरक्तः पारमेश्वरीं दीक्षां कक्षीचक्रे। तत्रैकं बिम्बं देवेन बहिरानीतं पूज्यमानं चास्ति। द्वितीयमपि चेन्निःसरति तदोपक्रम्यतामिति। तदाकर्ण्य वङ्क-चूलः परमार्हतचूडामणिस्तमेव धीवर तदानयनाय प्रावीविशत्। स च तद् बिम्बं कटीदघ्नवपुर्जलतले तिष्ठमानं बहिस्थशेपाङ्गमधोव- १० लोक्य निष्कासनोपायाननेकानकार्षीत्। न च तन्निर्गतमिति दैवतप्रभावमाकलय्य समागत्य च [3]विशामीशाय न्यवेदयत् तत्स्वरूपम्। अद्यापि तत् किल तत्रैवास्ते। श्रूयते ह्यद्यापि केनापि धीवरस्थविरेण नौकास्तम्भे जाते तत्कारणं विचिन्वता तस्य [4]हिरण्मयरथस्थयुगकीलिका लब्धा। तां कनकमयीं दृष्ट्वा १५ लुब्धेन तेन व्यचिन्ति यदिम रथं क्रमात् सर्वं गृहीत्वा ऋद्धिमान् भविष्यामीति। ततश्च स रात्रौ निद्रां न लेभे। उक्तश्च केनापि अदृष्टपुरुषेण यदिमं तत्रैव विमुच्य सुखं स्थेयाः, नो चेत् सद्य एव त्वां हनिष्यामीति। तेन भयार्तेन तत्रैव मुक्ता युगकीलिका इत्यादि। किं न सम्भाव्यते देवताधिष्ठितेषु पदार्थेषु? श्रूयते च २० सम्प्रत्यपि काले—कश्चिन् म्लेच्छः पाषाणपाणिः श्रीपार्श्वनाथ-प्रतिमां भङ्क्तुमुपस्थितः स्तम्भितबाहुर्जातः। महति पूजाविधौ कृते सज्जतामापन्न इति।

श्रीवीरबिम्बं महत् तदपेक्षया लघीयस्तरं श्रीपार्श्वनाथ-बिम्बमिति महावीरस्यार्भकरूपोऽयं देव इति 'मेदाश्चेल्लण' २५

---

१ घ–'ततः श्रुत्वा'। २ मृत्युत्वम्। ३ नृपाय। ४ क–घ–'हिरण्मय०'।

इत्याख्यां प्राचीकथन्। श्रीमच्चेल्लणदेवस्य महीयस्तममाहात्म्यनिधेः पुरस्ताभ्यां महर्षिभ्यां सुवर्णमुकुटाम्नायः साधितः। प्रकाशितश्च भव्येभ्यः। सा च 'सिंहगुहा'पल्ली कालक्रमाद् 'ढिम्पुरी'त्याख्यया प्रसिद्धा नगरी सञ्जाता। अद्यापि स भगवान् श्रीमहावीरः स च चेल्लणपार्श्वनाथः सकलसङ्घेन तस्यामेव पुर्यां यात्रोत्सवैराराध्यते इति।

अन्यदा वङ्कचूल 'उज्जयिन्यां खातपातनाय चौर्यवृत्त्या कस्यापि श्रेष्ठिनः सद्मनि गतः कोलाहलं श्रुत्वा चलितः। ततो देवदत्ताया गणिकाया गृहं प्राविशत्। दृष्ट्वा सा कुष्ठिना सह प्रसुप्ता। ततो निःसृत्य गतः श्रेष्ठिनो वेश्म। तत्रैकविंशोपको लेख्यके त्रुटयतीति परुषवाग्भिर्निर्भर्त्स्य निःसारितो गेहात् पुत्रः श्रेष्ठिना। विरराम च यामिनी। यावद् राजकुलं यामीत्यचिन्तयत् तावदुज्जगाम धामनिधिः[1]। पल्लीपतिश्च निःसृत्य नगराद् गोधां गृहीत्वा तरुतले दिनं नीत्वा पुना रात्रावागाद् राजभाण्डागाराद् बहिः। गोधापुच्छे विलग्य प्राविशत् कोशम्। दृष्टो राजाग्रमहिष्या रुष्टया। पृष्टश्च—कस्त्वमिति?। तेनोचे—चौर इति। तयोक्तम्— मा भैषीः। मया सह सङ्गमं कुरु। सोऽवादीत्—का त्वम्?। साऽप्यूचे— अग्रमहिष्यहमिति। चौरोऽवादीत्— यद्येवं तर्हि ममाम्बा भवति, अतो यामि। इति निश्चिते तया स्वाङ्गं नखैर्विदार्य पूत्कृतिपूर्वमाहूता आरक्षकाः। गृहीतस्तैः। राज्ञा चानुनयार्थमागतेन तद् दृष्टम्। राज्ञोक्ताः स्वपूरुषाः— मैनं गाढं कुर्वीध्वमिति। तै रक्षितः। प्रातः पृष्टः क्षितिभृता। तेनाप्युक्तम्— देव! चौर्यायाहं प्रविष्टः, पश्चाद् देवभाण्डागारे देव्या दृष्टोऽस्मि। यावदन्यन्न कथयति तावत् तुष्टो विदितवेद्यो नरेन्द्रः स्वीकृतः पुत्रतया स्थापितश्च सामन्तपदे। देवी विडम्ब्यमाना रक्षिता वङ्कचूलेन। अहो नियमानां शुभं फलमिति अनवरतमयमध्यासीत्।

---

[1] सूर्यः।

प्रेषितश्चान्यदा राज्ञा **कामरूप**भूपसाधनार्थं गतः । युद्धे घातैर्जर्जरितो विजित्य तमागमत् स्वस्थानम् । व्याहृताश्च राज्ञा वैद्याः । यावद् [1]रोगोऽपि घातव्रणो विकसति तैरुक्तम्—देव ! काक-मांसेन शोभनो भवत्ययम् । तस्य च **जिनदास**श्रावकेण सार्धं प्रागेव मैत्र्यमासीत् । ततस्तदानयनाय प्रेषितः पुरुषः पुरुषाधि- ५ पतिना येन तद्वाक्यात् काकमांसं भक्षयतीति । तदाऽऽहूतश्च **जिनदासो**'ऽवन्ती'मागच्छन्नुभे दिव्ये सुदत्यौ रुदत्यौ अद्राक्षीत् । तेन पृष्टे—किं रुदिथः ? । ताभ्यामुक्तम्—अस्माकं भर्ता 'सौधर्मा'च्च्यु-तः । अतो राजपुत्रं **वङ्कचूलं** प्रार्थयावहे, पर त्वयि गते स मांस भक्षयिता; ततो गन्ता दुर्गतिम्, तेन रुदिवः । तेनोक्तम्—तथा १० करिष्ये यथा त[2] भक्षयिता । गतश्च तत्र राज्ञोपरोधाद् वङ्कचूलम-वोचत्—गृहाण बलिभुक्पिशितम् । पटूभूतः सन् प्रायश्चित्तं चरेः । **वङ्कचूलो**ऽवोचत्— जानासि त्वं यदाचर्योप्यकार्यं प्रायश्चित्तं ग्राह्यम् । ततः प्रागेव तदनाचरण श्रेय इति 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति वाक्यान्निषिद्धो नृपतिः । विशेषप्रतिपन्नव्रतनि- १५ वहश्चा'ऽच्युत'कल्पमगमत् । वलमानेन **जिनदासेन** ते देव्यौ तथैव रुदत्यौ दृष्ट्वा प्रोक्तम्— किमिति रुदिथः ? न तावत् स मांसं ग्राहितः । ताभ्यां अभिदधे— स ह्यधिकाराधनावशा'दच्युतं' प्राप्तः । ततो नाभवदस्मद्भर्तेति । एवं जिनधर्मप्रभाव सुचिरं विभाव्य **जिनदासः** स्वावासमाससादेति । अस्य 'ढिम्पुरी'तीर्थस्य २० निर्मापयिता **वङ्कचूलः** ।

॥ इति वङ्कचूलप्रबन्धः ॥ १६ ॥



---

१ घ–'रौद्रोऽपि' । २ काकस्य मांसम् ।

[१७]

## ॥ अथ विक्रमादित्यप्रबन्धः ॥

**विक्रमादित्य**पुत्रं **विक्रमसेन**राजानं प्रति पुरोधसाऽऽशीर्दत्ता यत् त्वं पितुर्**विक्रमादित्या**दधिको भूयाः । तदा देवताधिष्ठिताभिः
५ सिंहासनस्थाभिश्चतसृभिः काष्ठपुत्रिकाभिर्हसितम् । तदा **विक्रमसेनेन** पृष्टाः पुत्रिकाः— किमिति हस्यते ? । ताः प्रोचुः— तेन सह समत्वमपि न घटते, कुतो नामाधिक्यम् ? । आद्याह—

'अवन्त्यां' **विक्रमो** राजा अपूर्वसत्यवार्त्ताकथकाय दीनारपञ्चशतीं दत्ते । एवं श्रुत्वा **खर्प्पर**चौरेण दीनारपञ्चशती याचिता ।
१० वार्ता चैका कथिता, यथा—

'गन्धवत्'स्मशानसमीपे पातालविवरकूपे मया दीपो **देवीहरसिद्धि**प्रेषितः पतन् दृष्टः । मयाऽपि तत्पृष्ठे झम्पापितम् । पाताले तत्र दिव्यं सौधं दृष्टम् । तत्र तैलकटाहिका ज्वलन्ती दृष्टा । तत्पार्श्वे एको नरो दृष्टः पृष्टश्च— किमर्थं त्वमिह ? । तेनोक्तम्—
१५ अत्र सौधे शापभ्रष्टा दिव्यकन्याऽस्ति । सा ब्रूते— यस्तैलकटाहिकायां झम्पां दाता स मे वर्षशतं पतिर्भविता । अतोऽहमेतत्पतित्वार्थमत्र तिष्ठामि, परं साहसं नास्ति । इति वार्तया पञ्चशती लब्धा । तेन **खर्परेण** समं राजाऽपि तत्र गतो विवरेण । तैलकटाहिकायां झम्पा दत्ता । कन्यया सोऽमृतेन जीवितः । यावत् सा
२० राजानं वृणुते तावद् राज्ञोक्तम्— अग्रेतनं नरं वरय । वृतः स तया । एवं यः परोपकारी तदधिकोऽयं कथं भावी ? ॥१॥

द्वितीययोक्तम्—

---

१ ख–घ–'तदा चतसृभिर्षाराङ्गनाभिर्हसित देवताधिष्ठिताभिः सिंहासनत्वमपि न घटते' । २ ख–घ–'कपरकचौरेण' । ३ ग–घ–'गन्धवहश्म०' । ४ घ–'पातालवेचरं (?) कूपे' ।

'कासी'तो द्वौ द्विजो आयातौ । विक्रमार्केण पृष्टौ राजस्व-रूपम्[1] । ताभ्यामूचे— अस्मद्देशे पातालविवरमस्ति । तत्रान्धो राक्षसो[2] वर्तते । अस्मद्देशस्वामी तिलकटाहे[3] झम्पा दत्त्वा स्वमांसेन राक्षसस्य पारणं कारयति स्म । राक्षसोऽपि तं पुनर्नवीकरोति । सप्त अप-वरिकाः स्वर्णसम्पूर्णाश्च कुरुते । प्रत्यहं प्रातः सप्ताप्यपवरिकास्त्या-गेन रिक्तीकुरुते । श्रुत्वेदं विक्रमोऽपि तत्र गतः । कटाहे झम्पां[4] दत्त्वा रक्षसा भक्षितो जीवितश्च । पुनर्भक्षितो जीवितश्च । रक्षसः शापेनान्ध्यमस्ति[5] तच्छापान्तोऽभूत् । दृग्भ्यां पश्यति । दृष्ट्वा चाह— कस्त्वं साहसी ? । तेनोक्तम्[6]— विक्रमोऽहम् । तुष्टोऽहं ते; याचस्व । राज्ञोक्तम्— तुष्टश्चेत्[7] तदाऽस्य राज्ञो नित्यं सप्ताप्यपव-रिकाः स्वर्णपूर्णा भूयांसुः । तथाऽस्य पुनरेवं कटाहझम्पापातादि-यातना मा भूत् । रक्षसोक्तम्— एवमस्तु । अतः कथं विक्रमार्का-दधिको भावी ? । समोऽपि न, अतो हसितम्[8] ॥ २ ॥

तृतीययोक्तम्—

एकदा विक्रमार्को निजपूर्वास्तव्यखल्वाटकुम्भकारयुक्तो[9] देशान्तरं गतः । परकायप्रवेशविद्यावेदी योगी मिलितः[10] । स आवर्जितः तुष्टश्च विद्या दातुमारेभे । राज्ञोक्तम्— प्रथमं मम मित्रस्य ( देहि ) । तेनोक्तम्— न योग्योऽसौ । निर्बन्धात् तस्यापि दत्ता [11]गुणरञ्जितेन योगिना, नृपस्य पश्चाद् बलाद् दत्ता । 'अवन्तीं' गतो राजा राज्यं करोति । एकदा पट्टाश्वो मृतः । विद्यापरीक्षार्थं राज्ञा स्वजीवस्तत्र क्षिप्तः । कुम्भकारेण स्वजीवो नृपदेहे । कुम्भ-कारो राज्यं करोति । तेनाश्वमारणाय चिन्तितः । नृपजीवस्तु पूर्व-मृतशुकदेहे प्रविष्टः । शुकोऽपि सोमदत्तश्रेष्ठिभार्याप्रोषितभर्तृका-

---

१ ग-घ-'राज्यस्व०' । २ घ-'राक्षसोऽस्ति' । ३ क- 'तैलकटाहे', ख-घ-'तेन(?)कटाहे' । ४ ग-'झम्पा दत्ता' । ५ ग-'राक्षसस्य शापे०' । ६ 'तेनोक्तम्' इत्यधिको ग-पाठः । ७ 'तुष्टश्चेत्० राज्ञो' इत्यधिको ग-पाठः । ८ ग-'हसितः' । ९ विगतकेश० । १० ख 'मीलितः' । ११ 'गुण० बलाद् दत्ता' इत्यधिको ग-पाठः ।

कामसेनागृहं गतः। सा तच्चातुर्येण हृष्टा राज्ञीसमीपं न गच्छति। श्रेष्ठी समागतः। सा राज्ञीसमीपं गता। अनागमनकारणं पृष्टा। शुकचातुर्यकारणं[1] प्रोक्तम्। तया आनायितः शुकः। सा रञ्जिता तेन, यथा राज्ञा पूर्वम्।

५ एकदा [2]शुकेन राज्ञीस्नेहपरीक्षार्थं गृहगोधिकादेहे [3]गतम्। राज्ञ्या तद्वियोगेन काष्ठभक्षणं कर्तुमारब्धम्। नृपजीवेन शुको जीवापितः। सा राज्ञी व्यावृत्ता। शुकेन सर्वोऽपि वृत्तान्तो राज्ञ्यै कथितः। राज्ञ्या कुम्भकारस्यावर्जना कृता। तेन कुम्भकारजीवेन तुष्टेन विद्याप्रदर्शनाय मृतबोक्कट[4]देहे स्वजीवः क्षिप्तः। नृपो निजं १० देहं गतः। अजो भयात् कम्पते। राज्ञा उक्तः—न भेतव्यम्, नाहं त्वत्समो भावी, सकृपोऽस्मि, त्वं सुखं जीव, चर, पिब। ततः कथं तेन समो भविष्यति? ॥ ३ ॥

चतुर्थ्योक्तम्—

एकदा विक्रमार्केणोत्तमं सौधं कारितम्। राजा तत्र गतः १५ विलोकनाय। तत्र चेटकयुग्ममुपविष्टमस्ति[5]। चेटकेनोक्तम्— सुष्ठु सौधमस्ति। चेटिकयोक्तम्—यादृशं स्त्रीराज्ये लीलादेव्या बाह्यगृहमस्ति तादृशमेतत्। राज्ञा तच्छ्रुतम्। तद्गमनौत्सुक्यं जातम्। परं स्थानं तु न वेत्ति। तेन सचिन्तो जातः। भट्टमात्रो नृपाशयं ज्ञात्वा तत्स्थानकज्ञानाय चचाल। तन्मार्गे ‘लवण’समुद्रं ततो २० ‘धूली’समुद्रमुत्तीर्य तत्र रात्रौ मदनायतने स्थित.। [7]निशीथे हयहेषारवसंसूचितं दिव्यालङ्कारभूषितं दिव्यस्त्री[8]वृन्दमागमत्। तत्स्वामिन्या कामः पूजितः। [9]व्यावृत्तमानानां तासां अश्वपुच्छे लगित्वा

१ घ–‘चातुर्यं कारणं’। २ घ–‘शुकेन भूत्वा राज्ञा स्नेह०’। ३ घ–‘गतं तद्वियोगेन’। ४ ‘बोकडो’ इति भाषायाम्। ५ घ–‘युग्ममस्ति’। ६ घ–‘सुकर्यं, स्थानं तु न वेत्ति, सचिन्तः भट्ट०’। ७ रात्रौ। ८ घ–‘दिव्यं स्त्री०’। ९ ख–‘वर्तमानानां’।

तत्र गतः । दासीभिर्दृष्टः स्वामिनीपार्श्वे नीतः । तया स्नानादि कारितः । रात्रौ तद्गृह एव स्थितः । स्वया स्वपत्न्या उक्तम्— मम **विक्रमादित्यो** भर्ता भूयात्, किं वा यो मा चतुर्भिः शब्दैर्जागरयति । इत्युक्त्वा सुप्ता । तेन चिन्तितम्—किं चतुर्भिरपि शब्दैर्न जागर्ति तर्हि एनामहमेव जागरयिष्यामि । [1]चत्वारः शब्दाः कृताः । यदा न जागर्ति तदा पादाङ्गुष्ठश्चम्पितः । तया पादेनाहतः यत्र **विक्रमादित्यः** सुप्तोऽस्ति तत्र पतितः । राज्ञा पृष्टम्— किमिदम् ? । तेन सर्वोऽपि वृत्तान्तः प्रोक्तः । ततो राजाऽग्निसञ्ज्ञं वेतालमारुह्य तत्र गतः । वेतालः प्रच्छन्नो जातः । राजा दासीभिस्तत्र नीतः । तया भक्तिः कृता । तद्रूपदर्शनात् सरागा जाता, पर शयानया प्रतिज्ञा कृता । तथैवोक्तम् । राज्ञा दीपस्थितो वेताल उक्तः— भो प्रदीप ! कामपि कथां कथय । स वक्तुमारेभे—

कश्चिद् विप्रः । [2]तस्य पुत्री । सा चतुर्णां वराणां दत्ता [3]पृथक्पृथग्ग्रामे । चत्वारोऽप्यागताः । विवादो जातः । [4]तया महान्तमनर्थं दृष्ट्वा काष्ठभक्षणं कृतम् । [5]स्नेहादेकेन वरेणापि चितामध्ये झम्पापितम् । एकोऽस्थीनि गृहीत्वा [6]"गङ्गा"या गतः । एकस्तत्रोटजं कृत्वा स्थितो भस्मरक्षार्थम् । एको देशान्तरं गतः । भ्रमता च तेन सञ्जीवनी विद्या शिक्षिता । पुनरपि तत्रागतः । अपरेऽप्यागताः । सा जीवापिता । पुनर्विवादो जातः । तर्हि चतुर्णां मध्ये कस्य सा पत्नी ? । राज्ञोक्तम्—अहं न [7]वच्मि, त्वमेव ब्रूहि । स आह— यश्चितायां सहोत्थितः स भ्राता । योऽस्थिनेता स पुत्रः । येन जीवापिता स पिता, उत्पत्तिहेतुत्वात् । यो भस्मरक्षकः स भर्ता, पालकत्वात् ।

---

१ 'चत्वारः' इत्यधिको ग-पाठः । २ ग-'तत्र' । ३ 'दत्ता' अस्यानन्तरं 'पृथक् पृथग् ग्रामे' इति ग-पुस्तके आधिक्यम् । ४ क-घ-'एकेन गह ११४०' । ५ ग-पुस्तके स्नेहादेकेन० झम्पापितम्' एतदाधिक्यम् । ६ घ-गङ्गा गतः' । ७ घ-'वेद्मि' ।

राज्ञा ताम्बूलस्थगिका द्वितीयकथां पृष्टा। वेतालाऽधिष्ठानात् साऽप्याह–

कुत्रापि मृतभर्तृका ब्राह्मणी [1]अभूत्। तस्या जारेण सह सुता जाता। तां रात्रौ बहिस्त्यक्तुं गता। इतश्च तत्र कोऽपि शूलाक्षिप्तो जीवन्नस्ति। तस्य पादे स्खलिता। तेनोक्तम्–कः पापी दुःखिनोऽपि दुःखमुत्पादयति?। तयोक्तम्– किं दुःखम्?। सोऽप्याह–देहपीडादिकम्, विशेषतो निष्पुत्रत्वं कथितम्। पुनः शूलानरेणोक्तम्–त्वमपि कथय। का त्वम्?। निजचरितं तयोक्तम्। [2]तन्निशम्य तेनाप्युक्तम्–पुरा हृतं भूनिक्षिप्तं अत्रस्थं द्रव्यं त्वं मदीयमादाय सुतां मया सह विवाहय। ब्राह्मणी प्राह–त्वमिदानीं मरिष्यसि, सुता च लघ्वी; कथं पुत्रोत्पत्तिः?। तेनोक्तम्–ऋतुकाले कस्यापि द्रव्यं दत्त्वा पुत्रमुत्पादयेः। तया तथैव सर्वं कृतम्। पुत्रो जातमात्रो राजद्वारे क्षिप्तः। राज्ञः केनाप्यर्पितः। कालेन निष्पुत्रस्य नृपस्य राज्ये स एवोपविष्टः। श्राद्धदिवसे 'गङ्गा'यां पिण्डदानं [3]कर्तुं गतः। जलाद्धस्तत्रयं निर्गतम्। स राजा विस्मितः। कस्य करस्य पिण्डं ददामि?। तर्हि भो राजन्! वद कस्य देयः पिण्डः?। राज्ञोक्तम्– चौरहस्तस्य॥

राज्ञा स्वर्ण[4]पालंकं जल्पितम्। तदपि कथामाह—

कस्मिन्नपि ग्रामे कश्चित् कुलपुत्रः स परिणीतोऽन्यग्रामे, परं तत्पत्नी श्वशुर[5]गृहे नागच्छति। स स्वजनैर्निर्गुण इति हस्यते। एकदा सर्वजनप्रेरितो मित्रयुतो तत्र गतः। मार्गे यक्षस्य शिरो नामितम्। तत्प्रभावात् सादरा जाता, आगन्तुं प्रवृत्ता। [6]यक्षभवने समीपमागते स एकाकी यक्षं नन्तुमागच्छत्। यक्षेण स्त्रीलोभेन तस्य शिरश्छेदितम्। महत्यां वेलायां मित्रमागतम्। तदवस्थो

---

१ 'अभूत्' इत्यधिको ग-पाठः। २ 'तन्निशम्य' इत्यधिको ग-पाठः। ३ ग–'कर्तुः गतः जला०'। ४ ग-'पालनकं'। ५ घ–'गृहं नागच्छति'। ६ ख-घ–'यक्षे समीप०'।

जातो धनिको दृष्टः । चिन्तितं च तेन– जनप्रवादो भविष्यति यथाऽनेन स्त्रीहेतोर्हतः; तर्हि ममापि मर्तुं युक्तम् । इति विचिन्त्य तेनापि स्वशिरः छिन्नम् । महति वेलायां साऽप्यागता । द्वावपि तदवस्थौ प्रेक्ष्य चिन्तितं तया– जनोऽग्रेऽपि द्वेषिणीं कथयन्नस्ति, सम्प्रति पतिघ्नीमिति कथयिष्यति; तर्हि म्रियेऽहम् । इति ध्यात्वा गले शस्त्रिका लगापिता । तावता यक्षेण करे धृता । मा साहस कुरु । तयोक्तम्– द्वावपि जीवापय । यक्षेणोक्तम्– शिरसी निज-निजकबन्धे योजय । तयोत्सुकयाऽन्यान्यकबन्धयोर्न्यस्ते । तयो-र्भार्याविवादो जातः । एको वदति–मदीया; द्वितीयोऽपि तथा । तर्हि कस्य सा ? । राज्ञोक्तम्– यस्य कबन्धे शिरः स भर्ता, 'सर्वस्य गात्रस्य शिरः प्रधानम्' इति वचनात् ॥

कर्पूरसमुद्गकोऽपि कथामाह–

कुतोऽपि ग्रामात् स्वस्वकलाविदश्चत्वारः सुहृदो देशान्तरं चेलुः, एकः काष्ठसूत्रधारः, द्वितीयः स्वर्णकारः, तृतीयः शाला-पतिः, तुर्यो विप्रः । क्वापि वने रात्रावुषिताः । प्रथमयामे सूत्रधारः प्राहरके स्थितः । तेन काष्ठपुत्रिका तरुणीसदृशी कृता समग्राऽपि । द्वितीयप्रहरे स्वर्णकारो यामिकः । तेनाभरणैर्विभूषिता । तृतीये शालापतिः । तेन क्षौमाणि परिधापिता । चतुर्थे विप्रेण सजीवा कृता । प्रातः सजीवा दृष्ट्वा सर्वेऽपि तज्जिघृक्षया मिथो विवदन्ते । तर्हि कस्य सा भो विक्रमादित्यनरेन्द्र ! । सा नाम श्रुत्वा चुक्षोभ । राज्ञोक्तम्– तदयं[2] न वच्मि तयोरकथयतोश्च तया जल्पितम्– भो राजन् ! कस्य सा ? । राज्ञोक्तम्– स्वर्णकारस्य । अधुनाऽपि यः स्वर्णं चटापयति स एव भर्ता भवति ॥ ४ ॥

सा पप्रच्छ– के यूयम् ? । दीपस्थेन वेतालेनोक्तम्–असौ स विक्रमादित्यः । सा दृष्टा व्यूढा च । तां गृहीत्वा 'ऽवन्ती'मा-

१ 'इति विचिन्त्य' एतदधिको ग -पाठः । २ क- ख-घ–'तदहं न वेद्मि' ।

गमत् । यदीदृग् तत्समकः, आधिक्ये तु का कथेति हसितम् । **विक्रमसेनेन** गर्वस्त्यक्तः ॥

ततो **विक्रमसेनः** पुरोधसमप्राक्षीत्— यदि किल एताः काष्ठ-पुत्रिका मम पितरमद्भुतगुणं वर्णयन्ति तर्हि स एव लोके तत्प्र-
५ थमतयोत्तमत्वेनावर्तार्णो भविष्यति। ततः प्राक् तु न कोऽपि तादृ-ग्गुत्तमोऽभूदिति ब्रूमः । पुरोधाः प्राह— राजन्! अनादिरियं रत्न-गर्भा । अनादिश्चतुर्युगी । युगे युगे नररत्नानि जायन्ते । अहमेव प्रधानमिति गर्वो न हितकारी, न च निर्वहते। यतस्त्वत्पितुर्**विक्र-मादित्यस्य** मनस्येकदा एवमभूद् यथा **रामेण** व्यवहृत्य लोकः
१० सुखीकृतः तथाऽहमपि करिष्ये । ततो **रामायणं** व्याख्यापितम् । तत्र यथा **रामस्य** दान आगारस्थापन वर्णाश्रमव्यवस्था गुरुभक्ति-स्तथा सर्वमारब्धम् । ततो'ऽभिनवो राम' इत्यात्मानं पाठयति । तद् दृष्ट्वा मन्त्रिभिश्चिन्त्यते स्म— अनुचितकारी अस्मत्प्रभुर्यो गर्वा-दात्मान तद्वन्मन्यते। अयं गर्वोऽस्योपायेनोत्तारयितव्यः प्रस्तावे ।
१५ इतश्च त्वत्पित्रा **विक्रमादित्येन** पृष्टम्— लोके स कोऽपि क्वाप्यास्ते योऽश्रुतपूर्वं **रामस्याचरणं** ज्ञापयति नः[१] । तत एकेन ज्यायसा मन्त्रिणाऽपरमन्त्रिप्रेरितेन कथितम्— राजेन्द्र ! 'कोशला'-यां विप्र एको वृद्धोऽस्ति । स काश्चित् **श्रीरामस्य** वार्ताः पार-म्पर्यायाताः सम्यग् [४]विवेद । आहूय पृच्छ्यते । राज्ञा आहूतः सः ।
२० सगौरवमायातः पूजितः पृष्टः—विप्र ! वद काञ्चिद् **राम**कथां नव्याम् । विप्रो बभाण— पृथ्वीनाथ ! यदि 'कोशला'यामागच्छसि तदा **रामस्य** कमपि प्रबन्ध साक्षाद् दर्शयामि । इह स्थितस्तु वक्तुं न पारयामि । तदा राज्ञा राज्यभारो मन्त्रिषु न्यस्तः । स्वय महाचमू-सहितो वृद्धद्विजयुक् 'अयोध्यो'पशल्यां ययौ । स्कन्धावारे तस्थौ ।
२५ तदानी स एव सर्वदिगीश इत्यभीः विप्रो भाषितो क्षमापालेन—

---

१ क ख-घ प्रतिषु 'त्यक्तः' अस्यानन्तर 'इति श्रीविक्रमप्रबन्धः' एतदाधिक्यम् । २ घ-'यथा तत्र'। ३ ख--'तथाऽभिनयो'। ४ ख-घ-'वेद'। ५ ग-'पृष्टश्च-वृद्ध ! वद'।

दर्शय रामदेवचरित्रम् । ततो विप्रः स्थानमेकं दर्शयित्वा भूपाल-
मालपत्— इदं भूखण्डं खानयत । ततः खानयति क्ष्मापालः ।
खनयत्सु खनकेषु प्रथमं हेमकलशः । ततो हैमी मण्डपिका प्रक-
टीबभूव । उपरितनं रजोऽपसारितम् । पश्चानुपूर्व्या प्रथमद्वितीय-
तृतीयक्षणा हैमा दृष्टा महीभुजा । चतुर्थे क्षणे नीरजे कृते [1]विपुला ५
उपानदेका हैमसूत्रकृता ज्योतिर्जालजटामाणिक्यखचिता दृष्टा ।
भूपेन विस्मितेन च गृहीत्वा हृदि शिरसि निहिता । अहो मान्या
रत्नजातिरियम् ! । ततो विप्रेण विज्ञप्तम्— देव ! चर्मकारपत्न्या
उपानदेषा न स्प्रष्टुमर्हति तव विष्टपपतेः । विक्रमेणोक्तम्— सा
चर्मकार्यपि धन्या यस्या ईदृगुपानत् । वद केयं कथा[3] । ततो १०
विप्रो ब्रूते— विश्वेश्वर ! श्रीरामे राज्यं कुर्वति सति अत्र चर्मकार-
सदनादि आसन् । इदमेकस्य चर्मकारस्य सदनम् । तस्य पत्नी
[4]लाडबहुला । अतो गर्वमुद्वहति । विनय न करोति । [5]ततः सा
तेन हक्किता हता च । याहि रे दुःख गृहीत्वा इत्युक्ता च । ततो
रुष्टाऽस्यामेकस्यां उपानहि तटपतितायां अपरिहितायां द्वितीयस्यां १५
तु परिहितायां निजतातस्य सदनं जगाम । गत्वा पत्युः कठोर-
भाषितं पित्रे बभाण । पित्रा द्विनद्वयं स्थापिता आवर्जिता च ।
अथोक्ता— वत्से ! कुलस्त्रियाः पतिरेव शरणम् । तत्रैव याहि ।
सोचे— न यामि, मानक्षयात् । द्विस्त्रिरुक्तिप्रत्युक्तयो भणिताः ।
पितृभ्यां भाणिताऽपि यदा पतिगृहं न याति तदा पित्रा भाणितम्— २०
वत्से ! अहमेवं मन्ये— यदा श्रीरामः सीता-लक्ष्मणसहितः स्वय-
मत्रागत्यानुनीय त्वा श्वशुरकुले प्रहिता तदा तत्र गन्त्री त्वम् ।
साप्यलीकाभिमानिनी प्रवदति— इदमित्थमेव; राम एवागते यामि
तत्र, नापरथा । इमं वृत्तान्त चरत्वनियुक्ताः प्रच्छन्नाः सुरा गत्वा
रामं व्यजिज्ञपन्— देव ! अयं वृत्तान्तश्चर्मकारपुत्र्याः । ततो देवः २५

---

१ घ-'उपरि हेम०' । २ ख-घ-'विपुले उपा०' । ३ घ-'यथा' । ४ 'बहु लाडकी' इति भाषायाम् । ५ ग-'अत. कारणे सा' ।

**श्रीरामः** प्रजावत्सलः प्रातः **ससीतः सलक्ष्मणः** सामात्यस्तच्चर्म-कारभवनमगात् । तन्मध्यं प्रविष्टः । पूजितः [1]कारुभिर्विस्मितैः । विज्ञप्तश्च– देव ! अयमस्मान् कीटान् प्रति कियान् प्रसादः कृतः? । स्वप्नेऽपि नेदं सम्भाव्यते यद् देवोऽस्मानुपतिष्ठते । किं कारणमागमनस्य? । **श्रीरामः** प्राह– त्वत्पुत्र्याः श्वशुरकुले प्रेषणायायाताः स्मः । तस्या हि वराक्यास्तथाविधा सन्धाऽऽस्ते । ततो हृष्टस्तज्जनकः अपवरकं गत्वा दुहितरमाह स्म– मुग्धिके ! तव प्रतिज्ञा पूर्णा । **श्रीरामदेवो**ऽप्यायातः सदेवीकः । एहि, वन्दस्व तं जगत्पतिम् । ततस्तुष्टा **रामा**न्तिकमागता । ववन्दे तम् । आलापिता प्रजातातेन– वत्से ! गच्छ श्वशुरमन्दिरम् । तया भणितम्– आदेशः प्रमाणम् । ततो गता पतिगृहम् । **रामः** स्वस्थानमायासीत् । **श्रीविक्रम** ! अस्या द्वितीया उपानत् तत्र पितृगृहे खन्यमाने लप्स्यते । स्वामिन् ! आयाहि तत् खान्यते । गतो राजा तत्र । खानितं तत् । लब्धा द्वितीयाऽप्युपानत् । दृष्टं हैमं गृहम् । एवमन्यान्यपि तेन विप्रेण खानयितानि लातं तद्धेम । राज्ञा विप्रः पृष्टः– विप्र ! कथमीदृशं सम्यग् जानासि? । विप्रेण गदितम्– पूर्वजपारम्पर्योपदेशाज्ज्ञातं तुभ्यमुक्तं च । परं गर्वं मा धाः । स **रामः** स एव । तस्य [3]ह्याज्ञया जलज्वलनौ स्तम्भेते स्म । पतन्त्यो भित्तयो दत्तायां तदाज्ञायां न पेतुः । लूना द्विचत्वारिंशत् अन्धगडाः सप्तविंशतिः स्फोटिका अष्टोत्तरशतं विड्वराणि दोषाश्च सर्वे व्यनेशन् । या तु तद्देवी **सीता** ये त्रयस्तद्भ्रातरो ये तद्भृत्या **हनूमत्-सुग्रीवा**दयस्तेषां महिमानं वर्षशतेनापि वाक्पतिरपि वक्तुं न शक्तः । इति श्रुत्वा **विक्रमेण** गर्वो मुक्तः । बिरुदं निषिद्धम्– 'अभिनवराम' इति । पुन'रुज्जयिनी'मागात् । यथाशक्ति लोकमुदधरत् । तस्य हि अग्निवेताल-पुरुषकासिद्धिभ्यां सुवर्णसिद्ध्या

---

१ ख-'चर्मकारु०' । २ घ-'खानविषत' । ३ क-'स्वाज्ञया' ।

चोपकारैश्वर्यं तदा निरुपममासीत् ततो विक्रमो धन्य एव। ततोऽधिकास्तु परःकोटयोऽभूवन्। इत्याकर्ण्य विक्रमसेनो विवेकी अभूत्॥

॥ इति विक्रमादित्यप्रबन्धः ॥ १७ ॥

## [1]अथ विक्रमचरित्रम्। ५

जैनतत्त्वबाह्यमुग्धजनचित्रमात्रफलं विक्रमादित्यप्रबन्धमेकं ब्रूमः। 'उज्जयिन्यां' राज्यं शासति विक्रमादित्ये [2]आसन्ने ग्रामे विप्रेणैकेन हलं [3]खेडयता दिव्यं ज्योतिष्मद्रत्नमेकं भूमौ पतित जगृहे। तन्मूल्यप्रश्नार्थं 'उज्जयिन्यां' रत्नपरीक्षिनैगमपार्श्वमागमत्। दर्शितं तद् रत्नम्। विस्मिता ते ऊचुः—न वयमस्य रत्नस्य १० मूल्यकरणे क्षमाः, ईदृशस्य पूर्वमदृष्टत्वात् अलीकमूल्यकरणे तीव्रदोषाच्च, केवलं देवः श्रीविक्रमादित्यो यदि वेत्ति मूल्यमस्य, स हि रेखाप्राप्तो रत्नमूल्यज्ञाने। विप्र उपविक्रमं जगाम। रत्नमदीदृशत्। विक्रमेण पृष्टम्—क्व लब्धमिदम्? विप्रेणोक्तम्—देव! हलं खेटयता स्वक्षेत्रभूमौ लब्धम्। राज्ञा भणितम्—तर्हि दिन- १५ द्वयेन वक्ष्यामः। रत्नमस्मद्धस्त एवास्तु विप्र! मा भीः, न वय परधनबद्धाभिलाषाः। धीरां दत्त्वा स्वसौधमध्य एव स्थापितः सः।

अथ रात्रौ विक्रमेण विमृष्टा रत्नपरीक्षकाः संसारे। बलिमनु स च पाताले। तत्रापि गन्तव्यम्। कुतूहली ह्यलसो न भवेत्। ततोऽग्निवेतालमारुह्याशु पातालं गतः बलिभुवनद्वारेऽस्थात्। तत्र २० नारायणो द्वास्थः प्रणतः। नारायणेन पृष्टम्—किं कार्यं तेऽत्रागमने? विक्रमेणोक्तम्—उपबलि गतः विज्ञापय राजा कार्यगौरवादायातोऽस्ति। यद्यादेशः स्यात् तदा दर्शनं लभेत। गतः कृष्णः। उक्तं बलये—राजा समागतोऽस्ति द्वारे। बलिना निवेदितम्—राजा चेद् युधिष्ठिरः? पृच्छेः कृष्ण!। गतः कृष्णः पप्रच्छ— २५

---

१ इदं चरित नास्ति ग-पुस्तके। २ ख-'आसन्नग्रामे'। ३ 'खेडता' इति भाषायाम्। चतुर्विंशति० २२.

किं युधिष्ठिरोऽसि? । विक्रमेणोक्तम्– राजानं युधिष्ठिरं मन्यते स, तस्मादन्यद् वक्तव्यम् । गच्छ कृष्ण! मण्डलीक आगतोऽस्तीति वद । गतः सः । विज्ञप्तं तत् । बलिरूचे– मण्डलीकः किं रावणः? । पुनरागतः कृष्णः । मण्डलीकश्चेत् किं रावण इति पृष्टोऽसि । विक्रमेणाभाणि– तर्हि गत्वा वद कुमार आगतोऽस्ति । गत्वा तथोक्तम् । बलिराह–किं कार्तिकेयः? किंवा लक्ष्मणः? किंवा पातालवासी नागपुत्रो धवलचन्द्रः? किं वालिपुत्रोऽङ्गदो रामदूत इति ख्यातः? । पुनरेहिरेयाहिरा कृष्णस्य । विक्रमेण पुनरभाणि–वदेस्त्वं वण्ठ आयातोऽस्ति । पुनर्गतः । बलिर्भणति– वण्ठश्चेत् किं हनूमान्? । पुनः कृष्णो वागरितः । भणितं बलिवचः । पुनर्विक्रमः प्रोचे–गत्वा वद तलारक्ष आगतोऽस्ति । उक्तं तेन तत् तथा तत् । बलिर्जगाद–किं विक्रमकः? । कृष्णेनैत्य पृष्टम्– किं विक्रमादित्यः? । ओमित्युक्तम् । बल्यादेशादुपबलि नीतः । पृष्टो बलिना– रे विक्रम! रत्नमूल्यं प्रष्टुमागतोऽसि? । विक्रमादित्यो वदति–इत्थमेव । दन्दर्शितं रत्नम् । बलिर्बभाण–ईदृशानि अष्टाशीतिं सहस्राणि रत्नानि नित्यं युधिष्ठिरो निर्मूल्यानि अदत्त पात्रेभ्यः । तेषां मध्यादिदं अरु(ग?)लत् । विप्रेण लब्धम् । प्रायो भूमिं गतानि सर्वाणि रत्नानि, कालस्य बहुलत्वात् । ततो राजा युधिष्ठिर एव, त्वं कः? । विक्रमेणोक्तम्–देव! सत्यमेतत् [3]तुष्ट इच्छामि ईदृक्सम्पत्तिर्युधिष्ठिरस्य कुतः? । बलिराह–दिग्जयधनानि तस्मै भ्रातृभिश्चतुर्भिराहृतानि । पूर्वं [4]'मरु(द)त्तनामा कार्प्पटिको दारिद्र्यमग्नो रुद्रमारराध । तेन तुष्टेन तस्मै स्ववाञ्छया 'कैलासा'सञ्ज्ञा आमूलचूलं हेमरत्नमयी पूर्निष्पाद्य दत्ता । सा तेन भुक्ता । तस्मिन् मृते रुद्रेण पांशुवृष्ट्या सा पिदधे । यदा युधिष्ठिरबान्धवः सहदेव उत्तरां दिशं साध-

१ घ-'गच्छ वद' । २ ख–'मेवेदं दर्शितं' । ३ घ–'सन्तुष्टस्ता (?)मि ईदृक्' । ४ घ–'चमत्कृतनामा' ।

यितुमुपतस्थे तदा **रुद्रस्तां** पुरं स्वैर्गुणैरुद्घाव्य सर्वां तद्धेमादि-
विभूतिं **युधिष्ठिरगृह**प्रविष्टामचीकरत् । ततो **युधिष्ठिरस्य** दाने-
च्छासिद्धिः । ततः स राजा । मण्डलीकस्तु **रावण** इति लोके
तादृग्बलविद्यादर्पायोगात् । कुमारस्तु **कार्तिकेयो** वक्तुं युक्तः
सप्ताहवयाः सन् यस्तारकं जघान । **लक्ष्मणो**ऽपि कुमार[1] यो ५
**मेघनादं** ममर्द । तथा **धवलचन्द्रो**ऽपि **पीहुलि**पुत्रः कुमारो यो
विषेण जगद् हर्त्तुं(न्तुं ?) क्षमः । विषममपि विषमभृतता नेतुं समर्थः ।
**अङ्गदो**ऽपि समर्थः ।

सन्धौ वा विग्रहे वाऽपि, मयि दूते **दशानन** !
अक्षिता वा क्षिता वाऽपि, क्षितिपीठे लुठिष्यति ॥ १ ॥ १०

इत्यादि ख्यातश्च वण्ठस्तु सत्यो **हनूमान्** यः स्वामिनं **रामं**
प्रियावियोगज्वरजर्जराङ्गं सन्धीरयामास मध्येसभम् ।

देवाज्ञापय किं करोमि ? किमहं 'लङ्का'मिहैवानये ?
'जम्बू'द्वीपमितो नये ? किमथवा वारांनिधिं शोषये ? ।
हेलोत्पाटित'विन्ध्य'पर्वतहिमस्वर्णत्रिकूटाचल— १५
क्षेपक्षोभविवर्धगानसलिलं बध्नामि वा वारिधिम् ? ॥१॥[3]

इत्यादि चमत्कारिस्वामिकार्यसिद्धिसारतया वण्ठो **हनूमानेव** ।
तलारक्षस्तु भवसि । गच्छ मूल्यं नास्ति रत्नस्येति द्विजाय वदेः ।
तदाकर्ण्य **विक्रमः** स्वपुरीं ययौ । रत्नं दत्त्वा बल्युक्तमुक्त्वा स्वग्रामाय
विप्रं विसृष्टवान् । चिरं राज्यं चक्रे । २०

इति **विक्रमार्कः** ॥ ग्रंथ १४० ॥



१ इन्द्रजितम् । २ अनुष्टुप् । ३ शार्दूल० ।

[ १८ ]

## ॥ अथ नागार्जुनप्रबन्धः ॥

'ढङ्क'पर्वते 'सुराष्ट्रा(ष्ट्र)'भूपण'शत्रुञ्जय'गिरिशिखरैकदेशरूपे राजपुत्ररणसिंहस्य भोपालनाम्नी पुत्री रूपलावण्यसम्पूर्णा पश्यतो
५ जातानुरागस्य सेवमानस्य वासुकिनागस्य पुत्रो नागार्जुननामा जातः। स च जनकेन पुत्रस्नेहमोहितेन सर्वासां महौषधीनां फलानि मूलानि दलानि च भोजितः। तत्प्रभावेन स महासिद्धिभिरलङ्कृतः। सिद्धपुरुष इति विख्यातः। पृथ्वीं विचरन् 'पृथ्वीस्थान'पत्तने सातवाहनस्य राज्ञः कलागुरुर्जातः। स च गगनगामिनीविद्या-
१० ध्ययनार्थे 'पालित्तानक'पुरे श्रीपादलिप्ताचार्यान् सेवते। अन्यदा भोजनावसरे पादप्रलेपबलेन तान् गगने उत्पतितान् पश्यति। 'अष्टापदा'दितीर्थानि नमस्कृत्य स्वस्थानमुपागतानां तेषां पादौ प्रक्षाल्य सप्तोत्तरशतमहौषधीनां आस्वादेन वर्णगन्धादिभिर्नामानि निश्चित्य गुरूपदेशं विनाऽपि पादलेपं कृत्वा कुर्कुटपोत इवोत्पतन्न-
१५ वटतटे निपतितः। व्रणजर्जरिताङ्गो गुरुभिः पृष्टः—किमेतदिति?। तेन यथास्थिते प्रोक्ते तस्य कौशल्येन चमत्कृतचित्ता आचार्यास्तस्य शिरसि पद्महस्तं दत्त्वा भणन्ति— षाष्टिकतन्दुलोदकेन तान्यौषधानि वर्तयित्वा पादलेपं कृत्वा गगने गरुड इव स्वैरं व्रज। ततस्तां सिद्धिं प्राप्य परितुष्टोऽसौ ननर्त। पुनरपि कदाचिद् गुरुमुखादा-
२० कर्णयति यथा रससिद्धिं विना दानेच्छासिद्धिर्न भवति। ततो रसं परिकर्मयितुं प्रवृत्तः स्वेदन-मर्दन-जारण-मारणानि चक्रे। रसस्तु स्थैर्यं न बध्नाति। ततस्तु गुरून् पप्रच्छ—कथं रसं(सः) स्थैर्यमाबध्नाति?। गुरवः प्राहुः, यथा दुष्टदैवतनिर्दलनसमर्थायां श्रीपार्श्व-

---

१ ख-'ढुङ्क०'। २ घ-'गामिविद्या०'। ३ क-'भणितम्'। ४ ख-'पादप्रलेपं'। ५ क- 'व्रजेः'। ६ ख-'प्रतिष्ठोऽसो'।

**नाथस्य** दृशि साध्यमानः सर्वलक्षणोपलक्षितया महासत्या योषि-
ता च मृद्यमानो रसः स्थिरीभूय कोटिवेधी भवति । तच्छ्रुत्वा स
**पार्श्वनाथ**प्रतिमां समहिमामन्वेषयितुमारेभे । परं[1] तादृशीं न क्वापि
पश्यति ।

इतश्च **नागार्जुनेन** स्थापिता **वासुकि**र्ध्यात्वा प्रत्यक्षीकृतः, ५
पृष्टश्च— श्री**पार्श्वनाथ**स्य दिव्यकलानुभावां प्रतिमां कथय । तेना-
वोचि— 'द्वारवत्यां' **समुद्रविजय**दशार्हेण श्री**नेमिनाथ**मुखान्महा-
तिशयसम्पन्ना ज्ञात्वा श्री**पार्श्व**स्य प्रतिमा प्रासादे स्थापयित्वा
पूजिता । 'द्वारवत्या' दाहान्तरं समुद्रेण प्लाविता सा प्रतिमा
तथैव समुद्रमध्ये स्थिता । कालेन 'कान्ती'वासिनो **धनपति**नामकस्य १०
सांयात्रिकस्य यानपात्रं देवताऽतिशयात् स्खलितम् । अत्र जिन-
बिम्बं तिष्ठतीत्यदृष्टवाचा निश्चित्य नाविकांस्तत्र निक्षिप्य सप्तभि-
रामसूत्रतन्तुभिर्बद्ध्वोद्धृता प्रतिमा निजनगर्यां नीत्वा प्रासादे
स्थापिता । चिन्तितातिरिक्तलाभप्रहृष्टेन पूज्यते स्म प्रतिदिनम् ।
ततः सर्वातिशायि तद् बिम्बं ज्ञात्वा **नागार्जुनो** रससिद्धिनिमित्तम- १५
पहृत्य 'सेडी'नद्यास्तटेऽतिष्ठिपत् । तस्य पुरतो रससाधनार्थं **सात-
वाहन**स्य राज्ञश्चन्द्रलेखाभिधां महासतीं देवीं [2]सिद्धव्यन्तरसान्नि-
ध्येनानाय्य प्रतिनिशं रसमर्दनं कारयति । एवं तत्र भूयो भूयो
गतागतेन तया बान्धव इति प्रतिपेदेऽसौ । सा तेषामौषधानां
मर्दनकारणं पृच्छति । स च कोटीवेधस्य रसस्य वृत्तान्तं सत्यं २०
कथयति । अन्यदा द्वयोर्निजपुत्रयोस्तया निवेदितम्, यथा— 'सेडी'-
नदीतटे **नागार्जुन**स्य रससिद्धिर्भविष्यति । तौ रसलुब्धौ निजराज्यं
मुक्त्वा **नागार्जुना**न्तिकमागतौ । कैतवेन तं रसं जिघृक्षू प्रच्छन्न-
वेषौ यत्र **नागार्जुनो** जेमति तस्य गृहस्य परिसरे भ्रमतः ।

---

१ 'परं० पश्यति' इत्यधिको ग-पाठः । २ घ-'सव्यन्तर०' ।

रन्धनीमालपतः[1]– त्वं **नागार्जुनाय** रसवतीं लवणबहुलां कुर्याः। यदा तां रसवतीं क्षारां कथयति तदाऽस्मभ्यं वदेः[2]। साऽप्योमिति प्रतिशुश्राव। अथ सा तज्ज्ञानार्थं तदर्थं सलवणां रसवतीं साधयति। षण्मास्यामतिक्रान्तायां रसवतीं तेन क्षारेति दूषिता। रन्धन्या च राजपुत्रयोरग्रे गदितम्– अद्य क्षारत्वं जज्ञे **नागार्जुनेन**। ताभ्यामपि तस्य रससिद्धिर्निश्चिक्ये। अथ तौ तस्य वधोपायं ध्यायतः पृच्छतश्च लोकं तज्ज्ञम्। पृच्छद्भ्यां ज्ञातम्, यथा— **वासुकिना** एवास्य दर्भाङ्कुरान्मृत्युः कथितोऽस्ति। **नागार्जुनेन** सिद्धस्य शुद्धस्य रसस्य कुतपौ द्वौ भृतौ 'ढङ्क'पर्वतस्य गुहायां क्षिप्तौ। पृष्ठचराभ्यां ताभ्यां ज्ञातौ। मुक्त्वा पलमानो **नागार्जुन**स्ताभ्यां सम्मुखस्थो दर्भाङ्कुरेण जघ्ने। मृतः सद्यः।

आलेख्ये चित्रपतिते, मृते च **मधुसूदन**!।
क्षत्रिये त्रिषु विश्वास-श्चतुर्थो नोपलभ्यते ॥१॥[3]

तौ कुतपौ देवतया सङ्गृहीतौ। राजपुत्रौ नरकपङ्कगोचरतां[4] गतौ। देवतया क्रुद्धया हतौ। न रसलाभो, न च धर्मस्तयोः। तावपि राजपुत्रौ मरणकाले पश्चात्तापेन दग्धौ[5]— हा हा येन खटिकासिद्धिवशाद् दशार्हमण्डपादिकीर्तनानि 'रैवतो'पत्यकायां कृतानि येन रसो लोकोपकाराय साधितः तस्य प्राणद्रोहेणावाभ्यां किं साधितम्?। एकं तावत् कलापात्रद्रोहः, अपरं च मातुलद्रोहः। एवं दुःखार्तौ मृतौ। रसस्तम्भनात् 'स्तम्भनं' नाम तीर्थं तत् **पार्श्वदेवस्य**। कालान्तरे तद् बिम्बं ततः स्थानात् 'स्तम्भन'पुरे पूज्यतेऽधुना ॥

॥ इति नागार्जुनप्रबन्धः[6] ॥१८॥



---

१ 'राधनारी' इति भाषायाम्। २ घ- 'तदा वदेः'। ३ अनुष्टुप्। ४ घ- 'पङ्कजगोचर०'। ५ ख-घ-'जग्धौ'। ६ 'समाप्तः' इत्यधिकः ख-घ-पाठः।

## [ १९ ]

## ॥ अथ वत्सराजोदयनप्रबन्धः ॥

पूर्वस्यां 'वत्सो' जनपदः । तत्र 'कौशाम्बी' पूः । श्रीऋषभ-वंश्यशान्तनु-विचित्रवीर्य-पाण्डु-अर्जुना-ऽभिमन्यु-परीक्षित्-जनमेजयकुले **सहस्रानीको** राजा । तत्पुत्रः **शतानीकः** । तस्य पत्नी महासती **चेटक**राजनन्द(न्दि)नी मृगाक्षी **मृगावती** नाम। तयोर्नन्दन **उदयनः** यः किल 'नादसमुद्रो' विख्यातः, यो गीतशक्त्या 'उज्जयिन्यां' '**अनलगिरी**'भ 'विन्ध्या'ऽभिमुख गच्छन्तं पुनरालाने निवेश्य **चण्डप्रद्योत**राज्यमद्योतयत् । स सुखेन राज्य शास्ति यौवनस्थो भोगी कलासक्तो धीरः ललितो नायकः ।

इतश्च पाताले 'क्रौञ्चहरणं' नाम पत्तनम् । तत्र **वासुकिः** सर्पराजः श्वेतो नीलसरोजलाञ्छितफणः । तस्य **नामलदेवी** नाम दयिता। विपुलो देशः। **तक्षको** नाम तस्य प्रतीहारो **विषमादेवी**-प्रियः यस्य फणामण्डपे त्रयोदशभारकोटयो विषस्य वसन्तीति श्रुतिः । **वासुकेः** पुत्री दिव्यरूपा कनी[1] **वसुदत्ति**नामा । तस्याः सख्यश्चतुर्दश, तद्यथा– धारू(ः) १ वारू(ः) २ चम्पकसेना ३ वसन्तवल्ली ४ मोहमाया ५ मदनमूर्च्छा ६ रम्भा ७ विमलानना ८ तारा ९ सारा १० चन्दनवल्ली ११ लक्ष्मी(ः) १२ लीलावती १३ कलावती[2] १४ । सा ताभिः सह वीणा-मृदङ्ग-वंश-सूक्तादिभिः क्रीडति ।

एकदा तासां मध्यादेकयोक्तम्— स्वामिनि ! **वसुदत्तिके** ! अह स्वपरिच्छदा सध्रीची[3] नरलोके 'कौशाम्ब्यां' दिव्यरूप महोद्यानं क्रीडितुमगाम्। दृष्टा तत्र बकुल-विचकिल-दमनक-चम्पक-विरह-

१ पुत्री । २ ख–'कल्पवती' । ३ सखी ।

कादिद्रुमाणां सारणीनां द्रुमालवालानां वाटीकोट्ट(वाटिकोट ?)स्य श्रीः। यदि स्वामिनी तत्केलिं काम्यति तदा तत्र पादमवधारयतु। इदं श्रुत्वा सा वसुदत्तिका ताभिः सर्वाभिः १४ सहेच्छासिद्धया सहसा तद् वनं प्राप्ता। तत्र केलिं कुर्वन्ति ताः। कुसुमानि चिन्वन्ति। तैः करण्डान् पूरयन्ति। धम्मिल्लानुत्तङ्गयन्ति। हारान् सारान् रचयन्ति। एवं खेलन्तीनां तासां वने कोकिलकुलकलरवकलः कोलाहल उच्छलितः। तदाऽऽकर्णनादुद्यानपालक एत्य ता अद्राक्षीत्। अहो रूपमहो स्वरोऽहो प्रभेति विसिष्मिये। भक्त्या श्रीउदयनं ताः समालोकितुमाह्वातुमगमत्। उदयनोऽपि कुतूहलादल्पपरिच्छदो वनमगात्। वसुदत्तिं ससखीकामालोकिष्ट। अध्यासीच्च— मनोजन्मनः महाव्याधेः परमरसायनमेतत्। अस्याः रूपसम्पत् जिह्वाभिः कोटिभिः ताभिर्वर्णयितुमशक्या।

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं तु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ? ॥१॥

यत् पश्यन्ति झगित्यपाङ्गसरणिद्रोणीजुषा चक्षुषा
गच्छन्ति क्रमलीलितोभयभुजं यन्नाम वामभ्रुवः।
भाषन्ते च यदुक्तिभिः सचकितं वैदग्ध्यमुद्रात्मभि-
स्तद् देवस्य रसायन रसनिधेर्मन्ये मनोजन्मनः ॥२॥

तं दृष्ट्वा सा पलायिष्ट। नृपोऽप्यन्वगाद् द्रुतं द्रुतम्। क्षणार्धेन सर्वाः सख्योऽदृश्याः समपत्सत। साऽपि पातालविवरप्राये गर्ते एकस्मिन् प्रविष्टा। राज्ञाऽपि ज्ञातम्— कामरूपिणी गमिष्यत्येव

---

१ ग-'सिद्धा'। २ घ-'जग्मुषी'। ३ ग-पुस्तके 'मनोजन्मन ० अशक्य।' एतदाधिक्यम्'। ४ विक्रमोर्वशीये (१-८)। ५ सर्जनकार्ये। ६ ब्रह्मा। ७ शार्दूल०। ८ ग-'कोलितो०'। ९ शार्दूल०।

इति तावत् करे धृत्वा तस्या वेणीदण्डो 'यमुना'जलप्रवाहप्रायः कृपाणिकयाच्छिन्नः। गता सा मृगशावलोचना। वेणी करेऽस्थात्। तां वेणीं पश्यंस्तां चमत्कृतचकोरचलाचलाक्षीं स मुहुरस्मार्षीत्।

नेत्रेन्दीवरिणी मुखाम्बुरुहिणी भ्रूवल्लिकल्लोलिनी ५
वाहुद्वन्द्वमृणालिनी यदि पुनर्वापी भवेत् सा प्रिया।
तल्लावण्यजलावगाहनजडैरङ्गैरनङ्गानल-
ज्वालाज्वालमुचस्त्यजेयमसमाः प्राणच्छिदो वेदनाः ॥१॥[2]

ततो हतप्रारम्भ[3] उद्बाष्पः सखेदः पूःपरिसरमेत्यामात्यानाहूयावादीत्— मया एवं एव बालिकायाः कस्याश्चिद् वेणी छिन्ना[4]। १० सा तु श्वभ्रमूलमगात्। अतो मम राज्येन न कार्यम्। इमामेव वेणीं राज्य कारयत। तेऽपि तथेति प्रतिपद्य पूर्वहिर्मण्डपे सोत्सव वेणीं राज्य कारयन्ति रामपादुकावत्।

इतश्च सा **वसुदत्तिका** खिन्ना गत्वा स्वसौधेऽस्वाप्सीत्। तस्याः सख्यस्तत्कवरीं छिन्नामीक्षित्वा **नामल**देवीमाकार्यादीदृशत्। १५ जागरितां पुत्रीं **नामल**देवी वत्से! किमेतत्? तवापि परिभवपदमित्यप्राक्षीत्। तनयाऽपि यथास्थितं मात्रे आख्यत्, साऽपि नागपतये स्वपतये। क्रुद्धः सद्योऽसौ **तक्षक**माकार्य कथामुक्त्वाऽऽदिक्षत्, यथा— गच्छ, सराष्ट्रं **उदयनं** भस्मीकुरु। सोऽपि तदादेशादचालीत्। 'कौशाम्बीं' प्रापत्। तत्परिसरे उत्सवान् दृष्ट्वा २० नररूपः कञ्चित्[5] पप्रच्छ— किमेतदुत्सवसाम्राज्यम्?। तत्रत्येन जनेनोक्तम्— एव एवं राज्ञा दिव्यकन्यावेणी छिन्ना। उत्पन्नानुतापेन राज्यं तदायत्तं कृतम्। अतो वेणी राज्ञीह। राज्ञाऽत्रैव एकदेशे तपस्तप्यते। **तक्षके**णोत्सवो दृष्टः। मध्ये भ्रमता राजाऽप्या-

१ घ--'वापे'। २ शार्दूल०। ३ ग-'प्रारम्भोद्बाष्प.'। ४ ख-घ-'छिन्ना.'
५ क-घ-- 'किञ्चित्'।

लोकितः। कुशस्रस्तरगः पद्मासनी जपमालापाणिः तपःक्षामः जितप्राणायामः मौनी। पृष्टश्च तक्षकेण नृरूपेण— कस्त्वम्? किमर्थं तपश्चरसि?। तेनापि दीर्घमुष्णं च निःश्वस्य गदितम्— भो पुरुषविप्र! किं पृच्छसि मां मन्दभाग्यम्?। दृष्टा मयैका पुण्यवती
५ मृगदृक्। तामनुसर्पता मया पातकिना यान्त्यास्तस्याः कबरी कृपाणिकया निजपुण्यदशया सह कृत्ता। सा मनीषितं स्थानं ससर्प। अहं तु उदयनो राजा राज्यं तत्सात्कृत्वा स्वयं तपः कुर्वाणोऽस्मि। एवं श्रुत्वा क्षणं स्थित्वा उपद्रवमकृत्वा पातालं यात्वा नागेन्द्रमाललाप— निष्पापप्रज्ञः देव! दृष्टो मया उदयनः
१० वेणीपुरश्च तथा राज्योत्सवः। स पुण्यात्मा मृदुमना बाढं परितप्यते। विनयी मानमर्हति। तच्छ्रवणादतुषदाशीविषेन्द्रः। तर्हि किं युक्तमिति तक्षकमूचे। तक्षको बभाषे— देव! स एव वसुदत्तिविवाहार्हः कुलेन शीलेन विद्यया वृत्तेन पराक्रमेण रूपेण च। किं वर्ण्यते सः?।

१५ *अमुमकृत यदङ्गनां न वेधाः, स खलु यशस्वितपस्विनां प्रभावः।
त्रिजगति कथमन्यथा कथाऽपि, क्षत....तपसां पदं लभेत? ॥१॥[2]

विद्या-कन्या-लक्ष्म्यो हि कुस्थाने निवेशिता निवेशयितारं शपन्ति। नामलदेवीमतं कनीमतं च लात्वा तक्षकेणैव वत्सराजमाजूहवत्। प्रवेशमहमचीकरत्। विवाहः प्रारब्धः। प्रथमायां
२० दक्षिणायां सवत्सा गौः कामधेनुर्लब्धा, द्वितीयस्यां विशिष्टा नागवल्ली, तृतीयस्यां सोपधाना खट्वा सतूलिका, चतुर्थ्यां रत्नोद्द्योतो दीपः। एवं रत्नचतुष्केण सत्कृत्य सजाय जामातरं 'कौशाम्बी'-पुरीं प्रति प्रेषयत्। गतः स्वपुरं तत्र ऋद्धं राज्यं भुनक्ति।

*सुधाधौतं धाम व्ययभरसहश्चार्थनिवहः
२५ सकामा वामाक्षी सुहृदपि निवेद्यात्महृदयः।

---

१ ख–'दग्वाया (?)'। * एतच्चिह्नाङ्किते पद्ये ग–पुस्तके न वर्तेते।
२ पुष्पिताग्रा।

गुणानामन्वेष्टा प्रभुरपि च शास्त्रव्यसनिता(तः ?)
पुराऽऽचीर्णस्यैतत् फलमलघु तीव्रतपसः ॥१॥[1]
यदतत् स्वच्छन्दं विहरणमकार्पण्यमशनं
सदाऽऽर्यैः संवासः श्रुतमुपशमैकाश्रमफलम् ।
मनोमन्दस्पन्दं बहिरिति चिरस्यापि विरसन्     ५
न जाने कस्यैषा परिणातिरुदारस्य तपसः ॥२॥[2]

क्रमेण स एव वासवदत्तां चण्डप्रद्योतपुत्रीं गुणकीर्तिं पर्यणैषीत् 'डहाल'देशाधिपपुत्रीं पद्मावतीं च।[3] 'पञ्चाल'देशाधिपेनाक्रान्तं 'कौशाम्बी'राज्य मन्त्रक्षात्राभ्यां पुनरग्रहीत्। इति उदयनप्रबन्धः।[4]

इयं च कथा जैनानां न सम्मता, देवजातीयैर्नागैः सह मानवानां विवाहासम्भवतः। विनोदिसभाऽर्हेति नागमतादुद्धृत्यात्रोक्ता।     १०

॥ इति उदयनप्रबन्धः ॥ १९. ॥



१-२ शिखरिणी। ३ घ-'पुत्रीं पद्मावतीं च'। ४ घ-'उदयनवीरप्रबन्धः'।

[ २० ]

## ॥ अथ लक्षणसेनस्य प्रबन्धः ॥

मन्त्रिणः **कुमारदेवस्य** च पूर्वस्यां 'लक्षणावती' पूः । तत्र **लक्षणसेनो** नाम प्रतापी न्यायी नृपः । तस्य द्वितीयमिव जीवितं
५ प्रज्ञाविक्रमभक्तिसारो मन्त्री **कुमारदेवः** । विपुल राज्यम् । अपारं सैन्यम् । अत्रान्तरे 'वाराणस्यां' **गोविन्दचन्द्राख्यनृपपुत्रो जयन्तचन्द्रो** राजा । तस्य **विद्याधरो** मन्त्री । महेच्छानां[1] अन्नदातॄणां[2] सत्यवादिनां च प्रथमः ।

एकदा **जयन्तचन्द्र**सभायां वार्तेयमासीद् य'ल्लक्षणावती'दुर्गं
१० दुर्ग्रहम् । राजा महाचमूसमूहसम्पन्नः तां वार्तामवधार्य 'कासीपतिः प्रतिज्ञां सभासमक्षमग्रहीत्[3]—इतश्चलित्वाऽस्माभिर्लक्षणावती'दुर्गं ग्रहीतव्यम्; अथ न गृह्णामि तदा यावन्ति दिनानि दुर्गतटे तिष्ठामि तावन्ति हेमलक्षाणि दण्डे गृह्णामि; अन्यथा न निवर्ते । इति सन्धां निर्माय प्रयाणढक्कामदापयत् । मिलितः समकालं
१५ राजलोकः । जाता गजमयीव सृष्टिः । भूपालमालामयीव भूमिः । अश्वमयमिव जगत् । निर्गतं सैन्यं बहिः । अखण्डितैः प्रयाणैर्भञ्जन् परबलान् , शोषयन् सरांसि, पङ्कयन् नदीः, समीकुर्वन् विषमाणि, चूर्णयन् शिखराणि, लेखयन् शासनानि, जीवयन् साधुलोकान् , 'लक्षणावतीं' प्राप्तः । दुर्गान्नातिदूरासन्ने भूभागे आवासान् दाप-
२० यामास । **लक्षणसेन**स्तु द्वाराणि पिधाय पूर्मध्ये एव तस्थौ । क्षु(क्षो)भिता पुरी । सङ्कीर्णत्वमापन्नमन्न-पाथो-घृत-तैल-वसन-ताम्बूलादि-[4]वस्तूनाम् । स्थाने स्थाने वार्ता आर्ताः प्रवर्तन्ते[5] । 'कासीपतिस्तु मुत्कलं[6] परदेशं ग्रसते । सार्था एहिरेयाहिरां कुर्वन्ति सुभिक्षमक्षामम् ।

---

१ ख-'महोत्थानां' । २ ख-घ-'दात्रीणा' । ३ क-ख-'मग्राक्षीत्' । ४ ख-'ताम्बूल-दलीदलादिवस्तूनाम्'। ५ क-ख-'प्रावर्तन्ते' ।६ 'मोकळे' इति भाषायाम्

नव्यानि कूपादीनि खनितानि[1]। विचरन्ति स्वैरं सैनिकाः। वर्धन्ते व्यवसायाद् रिद्धयः[2]। लुटयन्ते ग्रामाः। द्वयोर्नृपयोरूर्ध्वमुखैरधोमुखैः शरैर्युद्धानि। गतानि दिनान्यष्टादश। तस्मिन् दिने सायं **लक्षणसेनेन कुमारदेवो** मन्त्री न्यगादि--मन्त्रिन्! इदमस्माभिरनुचितमाचरितं यदयं रिपुर्देशं प्रविशन्नेव न प्रतिस्खलितः। अधुना दुर्गरोधे लोको दुःखी, म्लानग्लानिर्नः; तस्मात् प्रातर्योद्धव्यम्, दण्डं न ददामि। आहूय सामन्ता-ऽमात्यादीन्। **कुमारदेवः** प्राह--देव! युक्तमेवेदम्। ५

मृगेन्द्रं वा मृगारिं वा, द्वय व्याहरतां जनः।
तस्य द्वयमपि व्रीडा, क्रीडादलितदन्तिनः॥ १ ॥[3] १०

त्वयि धृतायुधे वज्रायुधोऽपि[4] कातर एव। तत्कालं मिलिताः प्रधानयोधाः[5]। उक्तो युद्धाभिप्रायः। प्रीतास्ते पीतामृता इव। ऊचुश्च--

मित्रस्नेहभरैर्दिग्धो, रूषितो[6] रणरेणुभिः।
खड्गधाराजलैः स्नातो, धन्यस्यात्मा विशुध्यते ॥१॥[7] १५

उत्तम्भिता नेत्रवैजयन्त्यः[8]। निष्पन्ना वीरकरम्बकाः। सम्पन्नानि पत्न्यादिमुत्कलापनानि। एवं सति **कुमारदेवो** राजान्तिकाद् गृहं गत्वा मन्त्रयते स्म-- अस्माकं प्रभुर्युद्धार्थी, **जयन्तचन्द्र**स्तु बली। 'अस्थाने[9] बलमारम्भो, निदानं क्षयसम्पदः'[10]। तस्मात् किं कर्तव्यम्? आं[11] ज्ञातम्-- **जयचन्द्र**मन्त्री **विद्याधरो**ऽनुसरणीयः। २० स हि पतिपन्नशूरः सकृपो निष्पापो दानी। इति विमृश्य पत्रीमेकां स्वलिखितां सहादाय प्राकारान्नगरस्रोतोद्वारेणैवैकाकी निर्गत्य मध्यरात्रे बहिः सैन्ये मन्त्रिगृहद्वारेऽस्थात्। तत्र द्वाःस्थैर्मध्ये मन्त्रिपं

१ ख-'खातानि'। २ ख-घ-'व्यवसयर्द्धय'। ३ अनुष्टुप्। ४ क-'चक्रायुधोऽपि'। ५ ख-'प्रासन(?)योधाः'। ६ ख--'रूक्षितो०'। ७ अनुष्टुप्। ८ क-'तास्तत्र वैजयन्त्यः'। ९ क-ख-'अन्यथा'। १० घ-'अप्यधी(?) वलमरम्भो(?)'। ११ ग-'आः! ज्ञातम्'।

**विद्याधरं** आत्मानमायान्तमजिज्ञपत् । सद्य आहूतस्तेन । आसितः स्वसमीपे, पृष्टश्च– 'के भवन्तः ?' । मन्त्रिणोक्तम्– अहं **लक्षणसेना**ऽमात्यः **कुमारदेव**स्त्वां द्रष्टुमायासिषम् । किञ्चिद् वक्तव्यमस्ति । तत् तु वक्तुं न शक्यते । पत्री तु लिखिता वक्ष्यति । इत्युक्त्वा
५ **विद्याधर**हस्ते तामार्पिपत् । तत्र श्लोको दृष्टः—

उपकारसमर्थस्य, तिष्ठन् कार्यातुरः पुरः ।
मूर्त्या यामार्तिमाचष्टे, न तां कृपणया गिरा ॥१॥[2]

अस्य श्लोकस्यार्थं चिरं परिभाव्य **विद्याधरो**ऽचिन्तयत्– अयं महीयान् मदन्तिकमागतः । **जयन्तचन्द्रा**पसारणमीहते दण्डं च
१० न दित्सते । मय्येव[3] भारमारोपयति । तस्मान्निस्तार्योऽसौ व्यसनसागरात् ।

स एव पुरुषो लोके, स एव श्लाघ्यतामिह ।
निर्भयं सर्वभूतानि, यस्मिन् विश्रम्य शेरते ॥१॥[4]

इति ध्यात्वा **कुमारदेवं** जगाद— मा भैषीः, दण्डं मा दाः,
१५ प्रातरत्रास्मत्सैन्यं न स्थास्यत्येव, गच्छ । इत्युक्त्वा **कुमारदेवं** सत्कृत्य व्यस्राक्षीत् । गतः स स्वस्वामि[5]**लक्षणसेन**सविधम् ।

इतश्च **विद्याधरो जयन्तचन्द्रा**न्तिकं गत्वा विज्ञप्तवान्— राजेन्द्र ! अद्य देवस्यात्रागतस्य दिनाष्टादशकं गतम् । **कुमारदेवेन** स्वयमेत्य ममाष्टादश हेमलक्षाणि प्रवेशितानि, [6]अतोऽभयं
२० देहि, प्रसीद, स्वस्थानं गच्छ, 'कास्या'मपि मुक्तायां निर्वाहो नास्ति, दुर्ग्रहं च दुर्गम् । इति श्रुत्वा 'कासी'न्द्रः सद्यो रात्रावेव चलितः, दशक्रोशी गत्वा स्थितः स्वनगर्याभिमुखीभिः पटकुटीभिः । 'लक्षणावती'लोको विस्मितो हृष्टश्च । **लक्षणसेनेन कुमारदेवः** पृष्टः– किमिति गतो **जयन्तचन्द्रः** ? । मन्त्रिणोक्तम्– देव ! त्वां

---

१ ग–'किं' । २ अनुष्टुप् । ३ क–'ममाप्येवं सा(भा)र०' । ४ अनुष्टुप् । ५ क–'स्वस्थाने' । ६ ग-पुस्तके 'अतः' इत्यधिकः पाठः' ।

युद्धोद्यतं श्रुत्वा 'कासी'न्द्रः क्षुभीतः प्राणत्राणार्थं गतः। अन्यैव[1] तव पिण्डशक्तिः।

> गतिरन्या गजेन्द्रस्य, गतिरन्या खरोष्ट्रयोः।
> गतिरन्यैव सिंहस्य, लीलादलितदन्तिनः ॥१॥[2]

> कः सिंहस्य चपेटपाटिनमहामातङ्गकुम्भस्थल-
> स्थूलास्थिस्थपुटीभवत्परिसरां लीलागुहां गाहते?।
> कः काकोदरभर्तुरुद्धतविपज्वालावलीढस्फुरत्-
> फूत्कारावलिघोरमास्य कुहर साडम्बरश्चुम्बति? ॥२॥[3]  5

अथ[4] चापल्याड्ढौकते कश्चित् तयोः तथापि क्षेमः कुतः?। अतः स्वकीयमन्तुक्षमणोपायोऽय तस्य। कास्यासन्न गतः 'कास्या'ऽधि- 10 पोऽपि **विद्याधर**मादिशत्– 'लक्षणावती'शदण्डधन चतुर्दिग्मि- लितेभ्योऽर्थिभ्यो देहि येन यशांसि प्रैधन्ते। **विद्याधरो**ऽपि स्वामिनं [5]निगदति– देव! **कुमारदेवेन** मह्य रत्नमेकं दण्डपदे [6]दत्तम्। तेन सद्यः कथ हेम निष्पद्यते?। राजोचे– तर्हि रत्नं दर्शय। अथ तेन पत्रीगतः श्लोकोऽदर्शि, **कुमारदेवा**गमनवृत्ता- 15 न्तश्च प्रोक्तः। **विद्याधर**मुखाच्च तदवधार्य **जयन्तचन्द्रो** जजल्प अनल्पधीः– मन्त्रिन्! तदैव किं नेयं पत्री दर्शिता [7]येन तेभ्यो विशिष्टां कृपां कुर्मस्तदैव। त्वया स्वधनार्पणाङ्गीकारेणैव वय तत उत्थापिताः। प्रापितो दण्डोऽस्मभ्यं किल तेन। अथ हेमाष्टादश- लक्षाणि कोशादाकृष्यार्थिभ्यो देहि। अष्टादश हेमलक्षास्तु कृपा- 20 प्रसादपदे **लक्षणसेनाय**, अष्टौ हेमलक्षाः **कुमारदेवाय** प्रेषय। तथैव कृत **विद्याधरेण**। प्रविष्टौ 'कासीं' तौ। स्फीतं राज्य भुङ्क्तः। षड्विंशतिहेमलक्षेषु तत्र गतेषु **लक्षणसेनेन कुमारदेवः** पृष्टः—

---

१ 'अन्यैव' इत्यारभ्य 'क्षमणोपायोऽय तस्य'पर्यन्त पाठ ग–पुस्तके नास्ति। २ अनुष्टुप्। ३ शार्दूल०। ४ घ–'अपचापल्या०'। ५ ग–'स्माह'। ६ क–'दत्त- मस्ति'। ७ ख-घ-'तेन'।

किमिदम्? । कुमारः स्मितपूर्वकमाचष्ट- त्वां विरोध्य कः सुखी तिष्ठेत्? । ततोऽरिणा दण्डस्तेऽर्पितः । पिप्रिये पृथ्वीपतिः । मुमुदे प्रजाः । ववृते महोत्सवः । एवं मन्त्रिणः कालज्ञाः सुगूढाशयाः लोक-भूपयोः कार्यं कुर्युः[1] ॥

॥ इति लक्षणसेनकुमारदेवप्रबन्धः[2] ॥ २० ॥



[1] क-'कुर्युरिति' । २ 'समाप्त. इत्यधिको घ-पाठः ।

[२१]

## ॥ अथ मदनवर्मप्रबन्धः ॥

'चौलुक्य'वंश्यो मूलराज-चामुण्डराज-वल्लभराज-दुर्लभ-राज-भीमान्वये कर्णदेवजन्मा मयणल्लदेविकुक्षिभूर्'द्वादशो रुद्र' इति विदितविरुदः श्रीजयसिंहदेवनामाऽभून्महीपतिः । सो'ऽणहिल्लपत्तना'न्निर्गत्यामितैः सैन्यै'र्मालव'देशराजधानीं 'धारा' द्वादशभिर्वर्षैर्जग्राह । प्रतोलीत्रयं स्फोटयित्वा यशःपटहकुञ्जरेण लौहीमर्गलामन्वभञ्जत् । साऽद्यापि ' देवपत्तने ' सोमनाथाग्रे दृश्यते । यशःपटहो मृत्वा व्यन्तरोऽभूत । जयसिंहो मध्ये परपुरं प्रविष्टो मालवेन्द्रं जीवग्राहमग्रहीत् । द्वादश वर्षाणि जयसिंहस्य खड्गो निष्प्रत्याकारोऽस्थात्, नरचर्मघटितमेव प्रत्याकारं करोमीति प्रतिज्ञावशात्, अत एव हस्त्यारूढं नरवर्माणं भूमौ पातयामास । वितस्तिमात्रं चर्माहिसत्कमुदतीतरत् । अत्रान्तरे प्रधानैर्विज्ञप्तम्—राजन्! राजाऽवध्य एव इति नीतिवचः । तस्मान्मोक्तुमर्होऽयम् । ततो मुक्तः सः । काष्ठपिञ्जरे क्षिप्तः । नरवर्मचर्माऽन्यचर्मभ्यां सिद्धराजेन निजकृपाणे प्रत्याकारः कारितः । ततः कवीश्वरैर्विविधं स्तूयते सः—

> एक'धारा'पतिस्तेऽद्य द्विधारेणासिना जितः ।
> किं चित्रं यदसौ जेतुं शतधारमपि क्षमः ॥१॥
>
> क्षुण्णाः क्षोणिभृतामनेन कटका भग्नाऽस्य 'धारा' ततः
> कुण्ठः सिद्धपतेः कृपाण इति रे मा मंसत क्षत्रियाः ।
> आरूढप्रबलप्रतापदहनः सम्प्राप्तधाराश्चिरात्
> पीत्वा मालवयोषिदश्रुसलिलं हन्ता यमेधिष्यते ॥२॥

१ ग–'राजदुर्लभराज०' । २ ग– 'नामा महीपतिरभूत्' । ३ लोहमयीम् । ४ अनुष्टुप् । ५ ग–पुस्तके इदं पद्यं नास्ति । ६ शार्दूल० ।

ततो दक्षिणापथे 'महाराष्ट्र'-'तिलङ्ग'-'कर्णाट'-'पाण्ड्या'दि-
राष्ट्राण्यसाधयत् । अनन्तं धनं सङ्घटितम् । ततो 'गूर्जर'-
धरां प्रति व्याघुटत् । यावद् देशसीमसन्धौ सैन्यनिवेशं कृत्वा स्थित-
स्तावत् सायं एकदा [1]महद्‌र्ध्या सभायामुपविष्टोऽस्ति प्रत्यक्ष इव
५ [2]सुरपरिवृढः । तावत् कश्चिद् वैदेशिको [3]भट्ट एत्याशीर्वादं भणित्वा
सभा दृष्ट्वाऽवादीदिदम्, यथा—अहो 'परमार'वंशधूमकेतोः श्री**सिद्ध-
राज**स्य सभा **मदनवर्मण** इव मनोविस्मयजननी । तदाकर्ण्य
**सिद्धेन्द्र**स्तमेव [4]भट्टं पुर उपवेश्य पप्रच्छ—[5]भट्ट ! कोऽसौ **मदनवर्मा** ?
क्व नगरे क्व राज्यं करोति ? । [6]भट्टः प्राह—देव ! पूर्वस्यां 'महोबकं' नाम
१० पत्तनं स्फारम् । तत्र **मदनवर्मा** नाम पृथ्वीपालः प्राज्ञस्त्यागी
भोगी धर्मी नयी **नल** इव [7]**पुरूरवा** इव **वत्सराज** इव पुनरवतीर्णः
[8]पृथ्व्याम् । तं राजानं तच्च पुरं यः खलु नित्यं पश्यति सोऽपि वर्ण-
यितुं न पारयति, केवलं पश्यन्नन्तर्मनसं मूक इव स्वादं तद्गुणं
जानाति । अस्माकं वचसि प्रायो लोकस्य विश्वासो नास्ति, वावदू-
१५ कत्वात्, परं प्रेषय [9]कञ्चित् परमाप्तं निजं मन्त्रिणं ज्ञं येन स तामृद्धिं
दृष्ट्वाऽत्रागत्य देवपादेभ्यो निवेदयति । एवं [10]भाट्टीं वाचमवधार्य
**सिद्धराजो** मन्त्रिणमेकं कतिपयजन[11]युतं द्रष्टुं तत्र तेनैव [12]भट्टेन
सह प्राहैषीत् । गतौ तौ भट्ट-मन्त्रिणौ । 'महोबक'पत्तनं दर्शित-
भट्टेन मन्त्रिणा । दृष्ट्वा निर्विलम्बं उपराजमेत्य यथास्थितमभाणीत्—
२० अवधारय स्वामिन् ! गतस्तत्राहम् । दर्शितं [13]भट्टेन तत् पत्तनम् ।
तदा [14]वसन्तोत्सवस्तत्र प्रवर्तते । गीयन्ते वसन्ताऽऽन्दोलकादि-
रागैर्गीतानि । भ्रमन्ति दिव्यशृङ्गारा नार्यः । मकरध्वजलक्षभ्रान्ति-
मुत्पादयन्तो विलसन्ति युवानः । क्रियन्ते प्रतिरथ्यं छण्टनानि

---

१ क-घ-'महर्द्धौ' । २ इन्द्रः । ३ ग-'भद्र' । ४ ग-'भद्र' । ५ ग-'भद्र' । ६ ग-'भद्रः' । ७ ग-'पुरुषोत्तमे' । ८ ग-'पृथिव्याम्' । ९ घ-'किञ्चित्' । १० क-'भद्रोक्ता' । ११ क-'युक्तं' । १२ ग-'भद्रेण' । १३ क-घ-'भट्टेन प्राप्तः' । १४ क-'वसन्तमासोत्सवः' ।

यक्षकर्दमैः[1] । प्रासादे प्रासादे सङ्गीतकानि । देवे देवे महापूजा । भोजनवारासाराः प्रतिसदनम् । राजकीयसत्राकारे तु दालिकूरा-वस्त्रावणानि[2] मुत्कलानि न मुच्यन्ते, किन्तु गर्तायां नियन्त्र्यन्ते तदा सघण्टो हस्ती निमज्जति । राजाऽश्ववाराः परितः पुरं भ्रमन्तो बीटकानि ददते लोकाय । कर्पूरैर्धूलिपर्वोदयः । रात्रौ विपणीन् वणिजो न संवृणन्ति, उद्घाटान् विमुञ्चन्ति, प्रातरागत्योप-विशन्ति । एवं नीतिः व्यवसायोऽप्याचारमात्रेणैव सिद्धार्थत्वात् । [3]तत्र देशे लोहखानिवत् सुवर्णरूप्यखानीर्वहन्ति तेन सर्वः कोऽपि । राजा तु कीदृगप्यास्ते मया स न दृष्टः । इदं तु श्रुतं स नारीकुञ्जरः सभायां कदापि नोपविशति । केवलं हसितललितानि तनोति प्रत्यक्ष इन्द्रः ।

एवं वचः श्रुत्वा **सिद्धराजो** सैन्यरक्षायां सैन्यं नियुज्य महता सैन्येन 'महोबकं प्रति प्रतस्थे । [4]तस्थौ तदासन्ने भूप्रदेशे क्रोशा-ष्टकेन । क्षु(क्षो ?)भितो देशः । स्थानाच्चालित 'महोबक'म् । प्रधानै-**र्मदनवर्मा** दिव्योद्यानस्थः स्त्रीसहस्रसमावृत्त एत्योचे—स्वामिन् ! **सिद्धराजो** गौर्जर उपनगरमागतोऽस्ति, स कथं पश्चान्निवर्तनीयः ? । **मदनवर्मणा** स्मित्वा भणितम्—**सिद्धराजः** सोऽयं 'धारा'या[5] द्वादश वर्षाणि निग्रहाय अस्थात् । स 'कबाडी' राजा वाच्यो भवद्भिः—यदि नः पुरं भुवं च जिघृक्षति तर्हि युद्धं करिष्यामः । अथार्थेन तृप्यसि तदाऽर्थं गृहाणेति । ततो यद् याचते स वराकस्तद् देयं भवद्भिः, न वयं धने दत्ते त्रुट्यामः । सोऽपि जीवतु चिरं यो वित्तार्थं कृच्छाणि कर्माणि कुर्वाणोऽस्ति । राज्ञो वचोऽनुगृहीत्वा मन्त्रिणः [6]परचक्रमगुः । तावता **सिद्धसेनेन** कथापितम्—दण्डं

---

१ 'कर्पूरा-ऽगुरु-कस्तूरीकक्कोलर्यक्षकर्दमः" इत्यमरकोशे द्वितीये काण्डे षष्ठे श्लोके । २ ख–'वस्त्रावणानि' । ३ ग–पुस्तके 'तत्र० सर्वः कोऽपि' इत्यधिकः पाठः । ४ 'क्रमेण गच्छन्' इत्यधिको ग–पाठः । ५ ग–'माऽयं यद्धारायां' । ६ ख–घ–'परमगु' ।

दत्त्वा मन्त्रिभी राजवाक्यं दूतमुखेन भाणितम्— यदि अर्थमीहसे
तदाऽर्थं लाहि; भूमिं चेत् तर्हि युद्धामहे वयम् । मदनवर्मदेवाय
ज्ञापितमत्र भवदागमनम् । तेन अस्मत्प्रभुणा उक्तम्— 'कबाडी'
राजाऽर्थेन तर्पणीयः सः । सिद्धराजस्तल्लीलया विस्मितः पण्णवतिं
५ कोटीः कनकस्यायाचीत् । दत्तास्ताः प्रधानैः । सद्यः देशः सुखं
तस्थौ ।[1]तथापि पश्चान्न याति । तदा प्रधानैर्भाणितम्—राजन् ! अर्थो
लब्धस्त्वया, कथमथ न प्रतिगच्छसि[2] । सिद्धेशेन भणितं मन्त्रि-
पुरः—तं लीलानिधिं भवत्प्रभुं दिदृक्षे[3] । तेऽप्येत्य मदनवर्माण-
मभणत्— अर्थेन तोषितः स क्लेशी राजा, परं भणति राजेन्द्रं
१० द्रष्टुमीहे । ततो मदनवर्मणा निगदितम्—तर्हि एतु सः । ततः सैन्यं
तथास्थमेव मुक्त्वा मितसैन्यस्तत्रोद्याने आगतः सिद्धराजः
यत्र महाप्राकारस्थे सौधे मदनवर्माऽस्ति । प्राकाराद् बहिर्योध-
लक्षास्तिष्ठन्ति । प्रतोलीं यावदागत्य मध्ये अचीकथत् द्वास्थैः-
आगतमस्माभिः 'महोवक'प्रभुणा भणितम्- जनचतुष्केण-
१५ सहागच्छत । आगतो मध्ये सिद्धराजः । यावत् पश्यति काञ्चन-
तोरणानि सप्तप्रवेशद्वाराणि अग्रे ददर्श रजतमहारजतमयीर्वापीः,
[4]नानादेशभाषाविचक्षणाः शशाङ्कमुखीर्विशालनितम्बस्थलास्तारुण्य-
पुण्यावयवाः स्त्रीः [5]पणव-वेणु-वीणा-मृदङ्गादिकलासक्तं परिजन-
जनम् । स्फीतानि गीतानि शुश्राव । 'नन्दनो'द्यानाधिकमुद्यानं,
२० हिमगृहाणि, हंससारसादीन् खगान्, उपकरणानि हैमानि,
कदलीदलकोमलानि वसनानि, जनितानङ्गरागान् उत्तुङ्गान्
पुष्पकरण्डांश्चैषत । एवं पश्यन् पश्यन् पुरः पुरो गच्छन् साक्षा-
दिव मदनं मधुरे वयसि वर्तमानं मितमुक्ताफलप्रायभूषणं सर्वाङ्ग-
लक्षणं काञ्चनप्रभं मधुरस्वरं तामरसाक्षं [6]तुङ्गघ्राणं उपचितगात्रं

१ 'तथापि० याति' इत्यधिको ग-पाठः । २ ख-घ- सिद्धसेनभाणितं मन्त्रिपुरुहूतास्तं'(?) । ३ ग-'दर्शयथ' । ४ ख-घ-'नानादेशवेश(ष)भाषा०' । ५ वादित्रविशेष., नागु नगारु । ६ घ-'तुङ्गघोणं' ।

मदनवर्माणमपश्यत्। 'मदनवर्माऽभ्यभ्येत्याश्लिष्य हेमासनं दत्त्वा तमभाणीत्—सिद्धेन्द्र! पुण्यवद्यास्माकं येन त्वमतिथिः सम्पन्नोऽसि। सिद्धराजः प्राह— राजन्! आवर्जनावचनमिदं मिथ्या; यत् तु मन्त्रिणामग्रे 'कत्राडी' इत्युक्तं तत् सत्यम्। मदनवर्मा जहास—सिद्धेश! केन वा विज्ञप्तमिदम्? । सिद्धेशः प्राह— तैरेव मन्त्रिभिस्तावकैः। कोऽभिप्रायो मन्निन्दाभणने देवस्य? । मदनवर्मा आह—देव! कलिरयम्, अल्पं जीवितम्, मिता राज्यश्रीः, तुच्छं बलम्, तत्रापि पुण्यैः स्फीतं राज्यं लभ्यते, तदपि चेत् न भुज्यते, रुल्यते विदेशेषु, तत् कथं न कत्राडिकस्त्वम्। सिद्धेशेनोक्तम्—सत्यं सत्यम्, एतादृशः कर्बाटिक एवाहम्। त्वमेवात्र धन्यो यस्येत्थं शर्माणि। त्वयि दृष्टेऽस्माकं जीवितं सफलम्। चिरं राज्यं भुङ्क्ष्व। इत्युक्त्वा तस्थौ। मदनवर्मणोत्थाय निजं परिजनकोशदेवतावसरादि सर्वं दर्शितम्। प्रेमाऽवृधत्। विंशत्युत्तरं पात्रशतं स्वाङ्गसेवकं सिद्धराजाय व्यतरत्। तेन प्रीतो जयसिंहदेवः सैन्यं गृहीत्वा 'धारां' जित्वा पत्तनं 'अणहिल्लपुरं' प्रविष्टः। तेषां १२० मध्यादर्धं पथि मृतं मार्दवात्, शेषं पत्तने प्रविष्टम्। पत्तनप्रवेशोत्सवे श्रीपालकविना सिद्धराजोपश्लोकना—

काव्यम्—

हे विश्वत्रयसूत्रधार! भगवन्! कोऽयं प्रमादस्तव<br>
न्यस्यैकत्र निवेशं यस्य परतस्तान्येव वस्तूनि यत्।<br>
पाणिः पश्य स एष यः किल बलेर्वाक्सैव धर्मस्य या<br>
चारित्रं च तदत्र यद् रघुपतेः 'श्रीचौलुक्य'चन्द्रे नृपे ॥१॥

पुनः—

मानं मुञ्च 'सरस्वति'! त्रिपथगे! सौभाग्यभङ्गीं त्यज<br>
रे 'कालिन्दि'! तवाऽफला कुटिलता 'रेवे'! रयस्त्यज्यताम्।

---

१ विवेक (?)। २ ग—'कर्बाटिकत्वम्'। ३ 'सर्वं' इत्यधिको ग—पाठः। ४ ख—'धारामध्ये'। ५ ख—राजा वर्णितः'। ६ शार्दूल०।

श्रीसिद्धेशकृपाणपाटितरिपुस्कन्धोच्छलच्छोणित-
स्रोतोजातनदीनवीनवनितारक्तोऽम्बुधिर्वर्तते ॥ २ ॥[1]

एवमन्यैरपि[2] भणितानि ॥

॥ इति मदनवर्मप्रबन्धः ॥ २१ ॥



१ शार्दूल० । २ ग–'रपि कविभिर्भणितानि' ।

## [ २२ ]

## ॥ अथ रत्नश्रावकप्रबन्धः ॥

उत्तरस्यां दिशि 'काश्मीरेषु' देशेषु 'नवहुल्ल' नाम महर्द्धिमत् पत्तनम् । तत्र विक्रमाक्रान्तभूचक्रो **नवहंसो** नाम भूपालः । तस्य राज्ञी रूपश्रीहसितरम्भागर्वा **विजयादेवी**नाम्नी । तत्रैव पत्तने ५ **पूर्णचन्द्रः** श्रेष्ठिराजोऽभूत् । तन्नन्दनास्त्रयः **रत्नः, मदनः, पूर्णसिंहश्च** । त्रयोऽपि जैनाः श्रीमन्तः प्रियवदाः सात्त्विकाः प्राज्ञाः राजपूज्याः प्रारम्भसिद्धाः । **रत्नस्य** पत्नी **पउमिणि**रिति ख्याता । पुत्रस्तु **कोमल** इति नाम बालो वर्तते । तदा श्री**नेमिनाथ**-निर्वाणादष्टसहस्री वर्षाणां व्यतीताऽस्ति । अस्मिन्नवसरेऽतिशय- १० ज्ञानी **पट्टमहादेव**नामा[1] 'नवहुल्ल'पत्तनपरिसरे समवासार्षीत् । देवैर्भूमिः शोधिता । उदकैश्छोटिता । कनकपद्म मण्डितम् । तत्र **पट्टमहादेव** उपविष्टः । मध्ये नगरस्य तदागमनं ज्ञापितमुद्यान-पालेन लोकाय नृपाय च । प्रथममागतो नृपः सान्तःपुरपरिच्छदः **सरत्न-मदन-पूर्णसिंहः** । अपरोऽपि लोकस्तथैव । श्रेष्ठिनी १५ **पउमिणि**रपि सपुत्रा[3] तत्रागता । एवं सभायां देव-दानव मानव-विद्याधरादिवृन्दसुन्दरायां गुरुर्देशनां प्रारेभे—

यास्यामीति जिनालये स लभते ध्यायंश्चतुर्थं फल
षष्ठं चोत्थितमुद्यतोऽष्टममथो गन्तुं प्रवृत्तोऽध्वनि ।
श्रद्धालुर्दशमं बहिर्जिनगृहात् प्राप्तस्ततो द्वादश २०
मध्ये पाक्षिकमीक्षिते जिनपतौ मासोपवास फलम् ॥१॥[4]

सयं पमज्जणे पुन्नं, सहस्सं च विलेवणे ।
सयसाहस्सिया माला, अणंतं गीयवाइअ ॥२॥[6]

---

१ घ–'कस्मीरेषु नव०' । २ क-ख–'महादेविनामा' ।
३ ख-घ–'तत्र सपुत्रा' । ४ शार्दूल० ।
५ छाया– शत प्रमज्जने पुण्य सहस्र च विलेपने ।
शतसाहस्रिका मालाऽनन्त गीतवादितम् ॥ ६ अनुष्टुप् ।

पूजाकोटिसमं स्तोत्रं, स्तोत्रकोटिसमो जपः।
जपकोटिसमं ध्यानं, ध्यानकोटिसमो लयः ॥३॥[१]

इदं सामान्यतः सर्वजिनसेवाफलम्। 'शत्रुञ्जये' तु सविशेषं तदेव, असङ्ख्यानां यतीनां सिद्धत्वेन सिद्धक्षेत्रत्वात्।

५ धूवे[३] पक्खोवासो, मासक्खवणं कपूरधूवंमि।
कत्तिअमासक्खवणं, साहू पडिलाभिए लहइ ॥१॥[४]

इति वचनात्। 'शत्रुञ्जया'दपि 'रैवत'सेवा महाफला। 'रैवतो' हि 'शत्रुञ्जयै'कदेशत्वात् 'शत्रुञ्जय' एव, श्री**नेमि**कल्याणकत्रयभावादतिशायितमप्रभावश्च। **नेमिनाथ**स्य माहात्म्यं मिथ्यादृशोऽपि

१० **प्रभासपुराणे** एवं प्रवदन्तः श्रूयन्ते—

पद्मासनसमासीनः श्याममूर्तिर्दिगम्बरः।
**नेमिनाथः शिवे**त्याख्यो, नाम चक्रेऽस्य **वामनः** ॥१॥[५]

वामनावतारे हि **वामनेन** 'रैवते' **नेमिनाथाग्रे** बलिबन्धसामर्थ्यार्थं तपस्तेपे इति तत्र कथा।

१५ कलिकाले महाघोरे, सर्वकल्मषनाशनः।
दर्शनात् स्पर्शनाद् देवि!, कोटियज्ञफलप्रदः ॥२॥[६]

ईश्वरोक्तमिदं **प्रभासपुराणे** एवम्, तस्माद् येन **नेमिनाथो** वन्दितो 'रैवत'गिरिमारुह्य तेन किल परमपदं श्रद्धालुना गृहीतमेवेति तत्त्वम्। इत्येतां देशनां श्रुत्वा **रत्नः** श्रावक उत्थाय गुरोरग्रे प्रतिज्ञां

२० चक्रे— मया ससङ्घेन यदा 'रैवते' **नेमिः** प्रणतो भविष्यति, तदा द्वितीया विकृतिर्ग्रहीतव्या। तदैव एकभक्तं भोक्तव्यम्। तावन्तं च कालं यावद् ध्रुवं भूमिशय्या-ब्रह्मचर्ये धार्ये। वरं प्राणांस्त्यजामि, परं **नेमिनाथं** नमाम्येवेति। ततः स्वगृहमायातो राजा

---

१ घ–'गुणो जपः'। २ अनुष्टुप्।
३ छाया—धूपे पक्षोपवासो मासक्षपणं कर्पूरधूपे।
कार्तिकमासक्षपणं साधुः प्रतिलाभितो लभते ॥ ४ आर्या।
५-६ अनुष्टुप्। ७ क–'रैवत'।

लोकश्च । रत्नश्रावकोपरोधात् पद्ममहादेवस्तत्रास्थात् । रत्न-स्तूपायन दत्त्वा राजानमूचे—राजन् ! मा नेमियात्रायै 'रैवत'-गमनाय विसृज । राज्ञोक्तम्—स्वैरं धर्मः समाचर्यताम् । अस्माकं मतमेतत् । यद् विलोक्यते तद् गृहाण । रत्नो जहर्ष । सङ्घ-ममेलयत् । गज-रथ-तुरग-पदातिरूप महत्तमं सैन्यं नृपाल्लेभे । ५ यस्य यन्न्यून तस्य तत् पूरयामास । अमारि-चैत्यपरिपाटि-शान्तिक-भोजनवार-प्रतिलाभना—बन्दिमोक्ष-लोकसत्कारांश्चकार । गणितं मुहूर्त्तम् । चलितो देवालयः । राजा महोत्सवकरः परमसखा । करभशतैर्धनानि चेलुः । श्रेष्ठिनी पउमिणिर्नृपपत्नीं विजयदेवीं वालवयस्यां भेटयितुं जग्मुषी, पादयोस्तस्याः पेतुषी १० आपृच्छे—स्वामिनि ! यात्रायै यास्यामि । भवद्वियोगदुःखं दिन-कतिपयानि धर्मलोभतः सोढुमीहेऽहम् । राज्ञी अपि सास्तुमूचे—सखि ! तत्र गता धनकृशतया कार्पण्य कृत्वा मा लज्जापात्रं मा कृथाः । स्वैर ददीथाः । अमूनि धनानि भूषणानि वसनानि च गृहाण । इत्युक्त्वा भूरि ददे । पदानि कतिपयानि सम्प्रेषयत् । निवृत्ता १५ राज्ञी । श्रेष्ठिनी सङ्घमध्यमध्यास्त । श्रीपद्ममहादेवो गुरुः सह व्यवहरत् । तेन सनाथः सङ्घः । नित्य धनस्य स्वैरं व्ययः । कोटीश्वराः साधर्मिकाः परःसहस्राः । चन्द्रहासव्रणाङ्का भटाः शतसहस्राः । कं भीः ? । एव पथि तीर्थानि वन्दमानो रत्नः सङ्घपतिर्बान्धवद्वययुतः सपुत्रः सपत्नीकस्तावद् ययौ यावद् २० 'रोला'-'तोला'ख्यौ द्वौ पर्वतौ स्तः । तत्र प्राप्तः । इह किल 'शत्रुञ्जय'मध्ये भूत्वा 'रैवतं' गच्छतां लोकानां 'रोला'-'तोलौ' गिरी न स्तः; परं 'भद्रेश्वर'पथे गच्छतां स्तः । तत्र 'रोला''तोल'-योरद्रयोर्मुखे मिलित्वा तोड्कद्वयमिव जातमास्ते । तत्र परिसरे

---

१ सखीम् । २ क- 'सास्रमूचे' । ३ ग-'धनकृच्छ्रतया' । ४ ख-'धनपतिधनानि' । ५ ग- 'यथेच्छं गृहाण' । ६ ग-'तेन वव' । ७ ग-पुस्तके 'पर' इत्यधिकः पाठः । ८ 'तोडो' इति भाषायाम् ।

सङ्घ आवासितः । दिनं सर्वं स्नात्र-चैत्यवन्दना-दान-पूजा-भोजना-
दीनि स्वैरं ववृतिरे । रात्रौ सुखं स्थितम् । प्रातः पुरो गमनाय
संनह्याचलत् सङ्घः । यावदग्रयानं गिरिमुखसङ्कटपथेन चलितुं
प्रवृत्तं तावता कश्चिदेको मषीश्यामो व्यात्तवक्त्रो नरसिंहवपुरट्ट-
५ हासी बहुगव्यूतोच्चो दंष्ट्राकरालास्यो नखैर्लोकं दारयितुं प्रववृते ।
भक्षयामि भक्षयामि च ऊचे । [1]तद् दृष्ट्वा भीतो लोकः पश्चा-
न्निवृत्य गच्छति । तद् [2]राजपुत्रैर्ज्ञातम् । तैर्गत्वा स कालरूपः प्र-
बभाषे—कस्त्वम् ? कथं जनमुपद्रवसि ? । देवो वा दैत्यो वा
राक्षसो वा येन [4]तन्नाम्ना पूजयामः । स कालमूर्तिर्वदति—किं रे
१० बाढं वदथ ? । यदि पुरः पदमेकं व्रजिष्यथ तदा सर्वान् एकैकशश्च-
[5]र्विष्याम्येव । इति गदति सति तस्मिन् सङ्घरक्षपालैर्भट्टै[6]र्व्याघुट्य
रत्नो विज्ञप्तः—देव ! एवमेवं वृत्तान्तः । पुरो गन्तुं न लभ्यते,
अभाग्यात् । [7]एवं दंष्ट्राचर्विता लोकाः पुरः पतिताः [8]प्रेक्ष्यन्ताम् ।
तदाकर्ण्य कर्णकटुकं विषण्णो रत्नः । क उपायः ? । का गतिः ? ।
१५ का मतिः ? इति कलकालितः सङ्घः । विशेषतः स्त्रीजनः । स्थाने स्थाने
वृन्दशो वार्ताः । केचिद् वदन्ति— पश्चान्निवृत्य गम्यते । अयं सर्वं
भक्षयिष्यत्येव । जीवन्नरो भद्रशतानि पश्यतीति । अपरे त्वाहुः—
म्रियते चेद् म्रियताम्, गम्यते पुरः, नेमिरेव शरणम् । केचिद्
द्रुमलतान्तरितास्तस्थुः । अन्ये ज्योतिषमपश्यन् । इतरे सङ्घप्रस्थान-
२० मुहूर्तदातारमानिन्दिषुः । इत्येवं विषमे वर्तमाने सङ्घपतिरत्नेन
भट्टाः प्रभाषिताः—गत्वा पृच्छत तं घोरं नरं त्वं कथं प्रसीदसि,
येन तत् कुर्मः पुरो व्रजामः । गता भट्टाः । भाषितं रत्नवचनं
तदग्रे । तेनोक्तम्—अहमेतस्या गिरिभुवोऽधिष्ठाता । एकं सङ्घ-
प्रधानमानुषं भक्षयामि, ततस्तृप्यामि; अन्येषां नोपद्रवामि; प्रतिज्ञां

---

१ क- ख- 'उक्त' । २ 'तद् दृष्ट्वा' इत्यधिको ग-पाठः । ३ 'रजपूत' इति भाषायाम् । ४ 'तन्नाम्ना' इत्यधिको ग-पाठः । ५ ग-'चर्वयिष्या०' । ६ ग-'भट्टै०' । ७ ग- 'एव तद्दंष्ट्रा०' । ८ ग- 'प्रेक्ष०' ।

च न लब्धे । [1]तेन भट्टास्तत् सम्यग् निर्णीय तदालापं रत्नाय ऊचुः । रत्नेनैकत्रोपवेशिताः सर्वे लोकास्तथा सन्नद्धा एव भणिताश्च ते लोकाः-पुण्यं मे महद् येनासौ कोऽपि घोरपुरुष एकं मानुषं जिघृक्षति । तद्भक्षणात् तृप्तश्चेच्छेषं न भक्षयति; तस्माद् यूयं याता नेमिं वन्दध्वम् । मयाऽस्मै [2]स्वाङ्गं देयम् । अहो लाभोदयः ! । इयत्कालं विविधयत्नपालितं देहं सङ्घार्थे उपकृतम् । एवमुक्त्वा तूष्णीके सङ्घेशे राजपुत्राः प्रभणन्ति– नररत्न ! रत्न ! त्व चिरं जीव । अस्माकं मध्ये एकतरेण स भ्रायतु (?) । वयं हि सेवकाः । सेवकानां च धर्मोऽयं यन्मृत्वाऽपि प्रभुरुद्धरणीयः, अन्यथा धर्म-यशो-वृत्तिक्षयात् । १०

[4]ते मुग्गडा हराविया ये (जे) परिविद्धा ताहं ।
अवरप्परजोयं [5]तह सामिउ गजिउ जाहं ॥१॥

सङ्घप्रधानसाधर्मिका ऊचुः—हे रत्न ! त्व चिरं जीव । युवाऽसि राजपूज्योऽसि, सहस्रलक्षजनपोषकोऽसि; वय विनश्वरकलेवरव्ययेन स्थिरं धर्मं जिघृक्षामहे । १५

[6]जई रक्खिज्जइ तो कुहइ, अह डज्झइ [7]तउ च्छारुं ।
एयह [8]दुट्ठकलेवरह ज वाहियह तं सारु ॥१॥

मदन-पूर्णसिंहभ्रातरौ जगदतुः ––आवयोस्त्वं ज्येष्ठो भ्राता, ज्येष्ठो भ्राता पिता यथा । पितुरायत्तश्च पुत्रप्रायो लघुभ्राता । किं रामाग्रे युद्ध्वा लक्ष्मणेन न प्राणास्तृणीकृताः ? । २०

---

१ ग–'ते भट्टा०' । २ क– 'प्राचुः' । ३ ग– 'स्वधान' ।

४ छाया– ते मुद्गरा हारापिता ये परिविद्धास्तेषाम् ।
अपरप्रयोग तथा स्वामी गर्जितो येषाम् ॥

५ घ– 'तय हंसामि' ।

६ छाया–यदि रक्ष्यते तर्हि कथ्यते अथ दह्यते तर्हि भस्म ।
एतस्य दुष्टकलेवरस्य यद् वाह्यते तत् सारम् ॥

७ घ–'जइ उत्खप्पइ तो कहइ' । ८ घ–' तउ चारु ' । ९ घ–' दट्टुकले० ' ।

स्नेहो न ज्ञायते देव !, प्रणामान्न मृदूक्तितः ।
ज्ञायते तु क्वचित् कार्ये, सद्यः प्राणप्रदानतः ॥१॥[1]

पउमिणिर्ब्रूते—कुलस्त्रियः पत्यधीनाः प्राणाः । पत्यौ लोकान्तरिते जीवन्त्यपि मृताः, शृङ्गाराद्यभावात् । यथा—

५ शशिना सह याति कौमुदी, सह मेघेन तडिद् विलीयते ।
प्रमदाः पतिवर्त्मगा इति, प्रतिपन्नं हि विचेतनैरपि ॥१॥[2]

भर्तरि मृते नार्याऽनुमर्तव्यम्—तावद् यदि मयि मृतायां त्वं जीवसि तदा किं न लब्धं मया ? । कोमलः प्राह—तात !

एकदेहविनिर्माणा—दधमर्णीकृतैः सुतैः ।
१० यशोधर्ममय देह—द्वयं पित्रोर्विनिर्यतम्[3] ॥१॥[4]

इत्येव वदतस्तान् सर्वान् युक्तिभिर्बाढं निषेध्य[5] स्वयं मर्तु स्थिताः । सङ्घो वहन् कृतः । कालपुरुषेणोपद्रवो न कृतः । गते तु सङ्घे रत्नः श्रीनेमिपरायणः स्थिरः तस्थौ । पउमिणिर्नाग्रे गता । परत्र स्थित्वा कायोत्सर्गमधात्, कोमलोऽपि तथैव[6] । कापुरुषेण रत्नो
१५ गिरिगुहायामेकस्यां क्षिप्त । द्वारि शिलां दत्त्वा पुच्छं आच्छोटयति । सिंहनादैः खं बधिरयति । तथापि रत्नो न बिभेति । हृदि स्थिरो जिनरागः ।

अत्रान्तरे कूष्माण्डीं वन्दितुं 'रैवत'शिखरे क्षेत्रपतयः सप्त कालमेघ १ मेघनाद २ गिरिविदारण ३ कपाट ४ सिंह-
२० नाद ५ खोटिक ६ रैवत ७ नामानो मिलिताः । ते देवीं वन्दित्वा ऊचुः—देवि ! क्वापि पर्वतो धडधडायते । ईदृशं क्वापि पूर्वं न वृत्तं[7] यादृगधुना वर्तते । ततः पश्य किमिदम् ? । क्वापि पुरुषो महानेक उपद्रूयमाणोऽस्ति केनापि क्रूरेण । अम्बया

---

१ अनुष्टुप् । २ वियोगिनी वैतालीयसुन्दरीत्यपराह्वया । ३ क– 'विनिर्यंते', ख– 'वितीर्यते', ग– 'वितीर्यते' । ४ अनुष्टुप् । ५ घ– 'युक्तिभिर्निषिध्य' । ६ घ– 'तथा' । ७ ग– 'जातं' ।

ज्ञातं ज्ञानेन । तैः सह तत्र गता । पउमिणि-कोमलौ दृष्टौ तथा कायोत्सर्गस्थौ । कृपाभक्ती जाते । गुहाद्वारं गत्वा स आक्षिप्त-क्रूरः । रे किमिदं करोषि ? । युध्यस्व चेत् समर्थोऽसि । रत्नं रक्षामो वयं क्षेत्रपालाः । अहं अम्बा जगदम्बा । तथोक्ते घुर्घुरितः सः । युद्धं ववृते । यावता सोऽम्बया पादे धृतः शिरः परितो ५ भ्रामयित्वा स्फालयिष्यते ग्रावण्युग्रे तावत् प्रत्यक्षो दिव्यमूर्तिः पुरतो नरो ददृशे । रत्नश्च पुरः दिव्याभरणाङ्गरागी सप्रियः सपुत्रः सुखी । ऊचे च स दिव्याङ्गः—अम्बे ! क्षेत्रपाः ! श्रीरत्न ! शृणुत । यदा 'रैवत'महिमानं गुरुर्जगौ तदाऽनेन रत्नेन प्रतिज्ञा कृता---मया प्राणव्ययेनापि नेमिर्वन्दनीय एवेति, तदाऽहं वैमानिकः सुरः १० शङ्करो नाम तत्र उपगुरु विषण्ण आसम् । मया न सोढा साऽस्य सन्धा । [1]तेनात्रागत्य[2] एवमुपद्रुतोऽयं रत्नः महासत्त्वः । धन्याऽस्य जाया[3], पुण्यवानङ्गजः, श्लाघ्या यूय सङ्घभक्ताः साहाय्यकराश्च । अहं यदि सत्येनैव युध्येयं तदा भवद्भिर्न जीयेय, पर क्रीडा-मात्रमेतदमलिनमनसा कृतमिति । रत्नैर्वृष्ट्वा रत्नमालिङ्ग्य सङ्घमध्ये १५ मुक्त्वा स्वयं द्यां ययौ । अम्बाद्या गिरिमगुः । सङ्घो 'रैवतक'-मारुरोह । नेमिं ननाम । लेप्यमूर्तौ नेमौ तथा स्नात्र जलैस्तेने यथा बिम्बं घटीद्वयेन गलित्वा मृद्भूय भूम्या सह मिलितम् । विषण्णाः सर्वेऽपि । विशेषतस्तु रत्नः । अचिन्तयच्च धिग् मामाशातनाकारिणं येन एवंविधतीर्थध्वसपापजिनभाजनं[4] जातोऽस्मि । २० [5]अथ तदा भोक्तव्यं यदा तीर्थं पुनः स्थापितं भविष्यति । इत्युक्त्वा बान्धवौ सङ्घरक्षायै नियुज्याऽम्बां ध्यात्वा तपस्तेपे । षष्ठ्युपवासान्ते अम्बा प्रत्यक्षीभूय तं 'काञ्चनबलाना'ख्ये इन्द्रनिर्मिते निशि निनाय । तीर्थे तत्र द्वासप्ततिजिनबिम्बानि महाकायान्यदीदृशत् । तत्राष्टादश हैमानि, अष्टादश रत्नानि, अष्टादश राजतानि, अष्टा- २५

---

१ 'सुरः' इत्यधिको ग- पाठः । २ घ- 'अत्रागत्य' । ३ पत्नी । ४ ग- 'तीर्थविध्वंस०' । ५ ग - पुस्तके 'अथ' इत्यधिकः पाठः ।

दश शैलमयानि, एवं द्वासप्ततिः । तत्रैकस्मिन् रत्नमये बिम्बे **रत्नः** स्वनामसाम्यादिव तुष्टो विलग्नः । इदमर्पय मे स्वामिनि ! येन तत्र स्थाने रोपयामीत्यम्बा**मूचे** । **अम्बा**ऽप्याह स्म—वत्सक ! तीर्थमिदं महत् । आगमिष्यति शनैः शनैः कलिः । तत्र लोको हीन-
५ सत्त्वोऽर्थलुब्धः पापकारी सर्वधर्मबाह्यो भावी । तदग्रतो रत्नं बिम्बं न छुटिष्यति । महत्याशातना भाविनी, ततः तस्मादिदमाश्मनं गृहाण । **रत्नेन** तथेत्यूरीकृतम् । उदित च— मातः ! कथमिदं महन्मयाऽऽनेयम् ? । देव्योक्तम्—आमसूत्रतन्तुभिरेभिर्वेष्टय । इतश्चलमाने यत्र तु पश्चाद् विलोकयिष्यासि तत्रैव स्थास्यति । इत्य
१० **म्बिका**गिरा चलितो **रत्नो** बिम्बं गृहीत्वा यावत् कियतीमपि भुवं पुरो याति तावद् विस्मितः पश्चादालुलोके कि**मम्बा**ऽऽगच्छति न वेति । तत्रैव तस्थौ बिम्बं उदुम्बरोपरि[1] । न चलति स्थानान्मनुष्यलक्षैरपि । ततः परावृत्त्य द्वारस्य प्रासादस्य रचना कृता । साऽद्यापि तथैव तत्रैवास्ते । एवं प्रतिज्ञा सम्पूर्य **रत्नः** ससङ्घो 'रैवता'द्
१५ व्याघुट्य 'शत्रुञ्जये' **ऋषभं** प्रणम्य अन्यान्यपि तीर्थानि वन्दित्वा 'नवहुल्ल'पत्तनं प्रविष्टः । राजा स्वयमभ्यागतः । गृहे गृहे मङ्गलानि, साधर्मिकवात्सल्यानि ऋद्धिवृद्धि[2] । आचन्द्रार्कं स्थायि यशो ललौ । **रत्न**स्थापित **नेमि**बिम्बमिदं यद् वन्द्यमानमास्तेऽधुना । तस्य तु स्तुतिरेवं प्राक् कविकृता—

२० न खानिमध्यादुदखानि सूत्रैर्नासूत्रि टङ्कैरुदटङ्कि नैव ।
अद्योति न द्योतनकैर्नवाहै—रवाहि योऽमन्त्रि न सिद्धमन्त्रैः ॥१॥[3]
अनादिरव्यक्ततनूरभेद्यः, प्रभामयोऽनन्तबलः सुसिद्धः ।
तरीस्तरीतुं भविनां भवाब्धिं, स **नेमिनाथः** कृपयाऽऽविरासीत् ॥२॥[4]

॥ इति रत्नश्रावकप्रबन्धः ॥ २२ ॥



---

१ 'उदम्बरोपरि॰ द्वारस्य' इत्यधिको ग-पाठः । २ ग–'च प्रवर्तितानि । ३ इन्द्रवंशा (?) । ४ उपेन्द्रवज्रा ।

[ २३ ]

## ॥ अथ आभडप्रबन्धः ॥

'अणहिल्ल'पुरे 'श्रीमाल'वंश्यः श्रेष्ठी **नृपनागः**। तत्पत्नी **सुन्दरी**। तज्जः श्री**आभडः**। तस्मिन् दशवर्षदेश्ये मातापितरौ द्यां गतौ। श्रीर्नष्टा तथाऽप्याभडः सुजनाश्रितो व्यवसायज्ञ इति ५ ववृधे। पूर्वजकीर्त्या[1] कन्या लब्धा। परिणीतः। वृत्त्यर्थं मणिकारकाराणां गृहे घुर्घुरान् घर्षयति। लोष्टिकान् पञ्चोपार्जति। [2]तेषां मध्ये लोष्टिकमेकं धर्मे व्ययति। द्वौ कुटुम्बवृत्तिकार्ये। द्वौ सञ्चये विधत्ते। चतुर्दशेऽब्दे पुत्रो जातः। तस्य रतन्यप्राप्तिरल्पा। अतश्छागीगवेषणाय **आभडो** बहिर्ग्रामं गतः। तत्र आवाहे प्रातर्दन्त- १० धावनं कुरुते। अत्रान्तरे आगतं अजायूथम्। ता आवाहे सर्वाः पयः पातुं लग्नाः। पयः कम्बुधवलमपि सहसा नागवल्लीदलच्छायं जातम्। विस्मित **आभडः**। छागीषु पयः पीत्वा निवृत्तासु यावद् गवेषयति तावदेकस्याः कण्ठे [3]टोकरकं तन्मरकतरत्नगर्भं ज्ञात्वा तेन सहसा [4]विक्रिये। बालोऽजीवत्। [5]रत्नं तु शिराणे उद्द्योतितं १५ महातेजःपुञ्जमयम्। परीक्षकाणां दर्शितम्। तैरमूल्यं भणितम्। तदनु **जेसिङ्गदेव**नृपायार्पितम्। तुष्टेन राज्ञा एका स्वर्णकोटी दापिता। नखपृष्ठमात्र हि तल्लक्षं लभते। **आभडो**ऽपि तेन महर्द्धिर्जातः। सुभिक्षं च तदा। व्यवहारी जातः। श्री**जयसिंह**राज्यं तदा ऋद्धम्। **आभडस्य** वहिकास्तिस्रः— एका रोक्यवही, अ- २० परा विलम्बवही, तृतीया पारलौकिकवही। [6]को भावः?। धरणवन्धनयातनाः कस्यापि न करोति कृपाम्भोधिः। ३६ वेलातटेषु धनर्द्धिः महालाभाः। पूगहट्टिका १ निजसदन २ श्रीहेमसूरिपौषध-

---

१ ग-- पुस्तके 'पूर्वजकीर्त्या' इत्यधिक पाठः। २ घ-'तत्र लोष्टिक०'। ३ घण्टिकाम्, 'टोकरी' इति भाषायाम्। ४ ग-'विक्रीता'। ५ 'रत्नं तु० स्वर्णकोटी दापिता' इत्यधिको ग-पाठः। ६ ग-'एतावता को भावः?'।

शाला ३ मापापिष्टकेष्टकचिताऽकारि। अमारिकारकश्रीकुमारपाल-
देवसमये महाव्यापस्तस्य ।

एकदा श्रीहेमसूरिभिः साधर्मिकवात्सल्य महाफलमिति राज्ञे व्याख्यातम् । राज्ञा आभड उक्तः—त्रुटितधन श्रावककुलं दीनारसहस्रं दत्त्वोद्धार्यम् । वर्षान्ते लेख्यकं वयमवधाराप्याः । आभडेन वर्षान्ते राज्ञे लेख्यक दर्शितम् । एका कोटिरायाता । राजा यावद् दापयति तावदाभडेन विज्ञप्तम्— देव ! भूभुजां कोशो द्विधा—स्थावरो जङ्गमश्च । तत्र स्थावरो हेमादिभाण्डागारः, जङ्गमो वणिग्जनः । वणिग्धनमपि स्वामिधनमेवेति । [1]राजोवाच—एवं मा वादीः । लोभपिशाचो मां छलयति । तावन्मात्रं तत्कालमेवानाय्य दापितम् । राजा तुष्टः । एवं व्रजति काले राजा कुमारपालदेवः श्रीहेमश्च वृद्धौ जातौ । श्रीहेमसूरिगच्छे विरोधः । रामचन्द्र-गुणचन्द्रादिवृन्दमेकतः, एकतो बालचन्द्रः । तस्य च बालचन्द्रस्य राजभ्रातृजेन [2]अजयपालेन सह मैत्री । [3]एकदा प्रस्तावे राज्ञो गुरूणामाभडस्य च रात्रौ मन्त्रारम्भः । राजा पृच्छति— भगवन्नहमपुत्रः । क स्वपदे रोपयामि ? । गुरवो ब्रुवन्ति—प्रतापमल्लं दौहित्र राजानं कुरु धर्मस्थैर्याय । अजयपालात् तु त्वत्स्थापितधर्मक्षयो भावी । अत्रान्तरे आभडः प्राह—भगवन् ! यादृशस्तादृशः [4]स्वकीय एवोपकारी । पुनः श्रीहेमः—अजयपालं राजानं मा [5]कृथाः । एवं मन्त्रं कृत्वोत्थितास्त्रयः । स मन्त्रो बालचन्द्रेण श्रुतः । अजयपालाय च [6]कथितः । 'हैम'-गच्छीयरामचन्द्रादिषु द्वेषः । आभडे तु प्रीतिः । श्रीहेमसूरेः स्वर्गगमनम् । ततो दिनद्वात्रिंशता राजा कुमारपालोऽजयपाल-दत्तविषेण परलोकमगमत् । अजयपालो राज्ये निषण्णः । श्री-

१ 'राजोवाच' इत्यारभ्य 'दापित'पर्यन्तः पाठोऽधिको ग-पुस्तकेऽस्ति । २ घ-'भ्रातृव्येन' । ३ 'एकदा प्रस्तावे' इत्यधिको ग-पाठः । ४ ग-'आत्मीयो भव्य' । ५ 'सर्वथैव' इत्यधिको ग-पाठ. । ६ ग-'कथितः ।अतो हेम०' ।

**हेम**द्वेषाद् **रामचन्द्रा**दिशिष्याणां तप्तलोहविष्टरासनयातनया मारणं कृतम्। राजविहाराणां बहूनां पातनम्। लघुक्षुल्लकाना-ह्वाय्य प्रातः प्रातर्मृगयां कर्तुं अभ्यासयति, पूर्वमेते चैत्यपरि-पाटीमकार्षुरित्युपहासात्। **बालचन्द्रो**ऽपि स्वगोत्रहत्याकारापक इति ब्रुवद्भिर्ब्राह्मणैर्नृपमनस उत्तारितः। लज्जितो 'मालवा'न् गत्वा मृतः। पापं पच्यते हि सद्यः। प्रासादपातनं दृष्ट्वा श्रावकलोकः खिद्यते। **आम्बडः** पूर्वप्रतिपन्नत्वान्मान्योऽपि वक्तुं न शक्नोति, उग्रत्वाद् राज्ञः। पंरं तेन प्रपञ्चेन तु रक्षा कारिता। कथम्? एकदा **आम्बडेन** नृपवल्लभः कौतुकी **सीलणो** नाम भूरिहेम-दानेन प्रार्थितः—तथा कुरु यथा शेषप्रासादा उद्धरन्ति। तेनो-क्तम्—निश्चिन्तैः स्थेयम्, रक्षिष्याम्येव। **सीलणेन** साण्ठकसौ-धमेकं कृतम्। धवलितं चित्रितं च। पुत्राः पञ्च कर्णे एवमेव-मुपराजं कर्तव्य इति शिक्षिताः। गतो नृपान्तिकं **सीलणो** वदति—देव! जरा मे शिरसि स्थिता। पुत्रपौत्रवान् जातः। अधुना तीर्थयात्रायै विदेशान् यामि यद्यादेशः स्यात्। राज्ञोक्तम्—यथा रुचिः तथा चेष्टस्व। तदनु तत्सौधं पुत्रांश्चादाय महासभास्थे नृपे आगत्। पुत्रा भलापिताः क्षितिपतये। पुत्राश्च भापिता राज्ञि पश्यति सति—एतन्मे सौधं यत्नतो रक्ष्यम्। मम यशः-शरीरमेतत्। यत्ननिष्पादितमिति। तैस्तथेति प्रतिपेदे। नृपादि सर्वं आपृच्छ्य पुरस्तात् कियतीमपि भुवं यावत् **सीलणो** याति किल तावत् तैस्तत् सौधं लकुटैरास्फाल्य सद्यो भग्नम्। खटत्कारं श्रुत्वा **सीलणो** व्याघुटितो वदति—रे हताशाः! अस्मादपि कुनृ-पात् कुपुत्रा यूयम्। अनेनात्मीये पितरि मृते सति तद्धर्मस्थानानि

---

१ ग-पुस्तके 'जात' इत्यधिकः पाठः। २ क-घ-'लघुत०'। ३ ग-पुस्तके 'परं तेन' इत्यधिकः पाठः। ४ क-'कारापिता, तदा हा कथम्?'। ५ घ-'सीलणो भूरि०'। ६ 'साठानो' इति भाषायाम्। ७ ग-'बहुयत्न०'। ८ 'नृपादि सर्वं' इत्यधिको ग-पाठः।

पातितानि, भवाद्भिः पुनरहं पदशतकमपि गच्छन् न प्रतीक्षितः। राजा ललज्जे। चैत्यानामपातनमादिशति स्म। तस्य कुत्सितस्य राज्ञो मातापुत्रयोर्बलाद् विप्लवं कारयितुं रुचिरुत्पन्ना। वण्ठांस्तथा कारयति। एकदा एकेन वण्ठेन छन्न-
५ धृतह्रस्वकङ्कलोहकर्तृ[1](त्रि)कया जघ्ने। दिनकतिपयानि **कीर्तिपाल**-नामा राजपुत्रो 'गूर्जर'धराया[2] लोकरक्षामकरोत्। छत्र-चामरादीनि न तस्य। तस्मिन् 'मालव'सैन्ये मृते 'गूर्जर'धरायां **भीमदेवो** राजाऽऽसीत्। स दीर्घजीवी, पर[3] विकलः पुण्याधिकः। तस्य सोढू मोढू द्वे गड्डरिके। ते द्वे स्नपयति। सर्वाङ्गावयवविभूषिते
१० कारयति। सुखासने उपवेशयति। ग्रामेषु ससैन्यो भ्रमयति। ग्रामाः सैन्यकैर्भक्ष्यन्ते। एवं बहुकालो गतः।

एकदा देशपालैः सम्भूय राजा विज्ञप्तः—देव! निरर्थकं किमिति स्वदेशं भक्षापयसि? अन्न-घृत-वसनादिव्ययो वृथाऽयम्। तदा राजा आह—कथामेकां शृणुत।

१५ क्वचिद् वेलाकूले पूर्वं जलवेगाहतो मीनस्तटे लग्नः। तदा तत्र दुर्भिक्षं घोरम्। अन्नाभावे क्षुधार्तो लोकः। अतः सर्वोऽपि जनो कुठाराद्यैश्छेदं छेदं तं मीनं भक्षयितुं गृह्णाति, तथापि स न म्रियते, महाकायत्वात्। अत्रावसरे क्षुधितः पत्नीप्रेरितः कोऽपि विप्रस्तन्मीनमांसं ग्रहीतुमगमत्। तं अपरलोकैश्छिद्यमानं पश्यतस्तस्य
२० स्वभावदयालोर्विप्रस्य दयाऽऽसीत्—न छिनद्मि[4]। तदा व्यन्तरानुप्रवेशात् स मत्स्यो विप्रमाह—भो छिन्द्धि माम्। अन्येऽपि खादन्तः सन्ति। तवोपकृतो भव्यः। विप्रः प्रोचे—दया मे, न छिनद्मि। मीनो वदति—तर्हि शृणु, अयं पापी लोको मां म्रियमाणं मारयति। अहं तु मृत्वाऽत्र तटे राजा भविष्यामि **पुरन्दरो** नाम।
२५ राजकुलेऽवतरिष्यामि। त्वं ममोपाध्यायो भविष्यसि। अहं प्राग्

---

१ क–'कर्तिकया'। २ क–'गुर्जरधराया'। ३ 'पर' इत्यधिको ग–पाठः। ४ ग–'तेन न छिनत्ति'।

वैरादमुं लोकं नवनवभङ्गीभिः कदर्थयिष्यामि । त्वया कस्याप्यर्थे विज्ञप्तिर्नैव करणीया । त्वां तु सत्पुरुषं अहं गुरुबुद्ध्या पूजयिष्यामि । इति जल्पन् मृतः स मीनः यशोक्तो राजा पुरन्दरो नाम समभूत् । विप्रस्तु गुरुः । तं लोकं कृतपरमागस स राजाऽपीडत् । विप्रस्तु तदुक्तं स्मरन् न ऊचे किञ्चित् । तस्माद् भो ग्रामण्योऽहमपि तद्भयात् कोऽप्य[illegible]मि । कोऽ[illegible] लोकस्, तस्माद् सर्वर्द्धिर्मे [illegible] । [illegible] कारयामि । एवं श्रुत्वा स्थितस्तूष्णीं लोकः । [illegible] ।

एवं राज्ये आभडस्तथैव ऋद्धिमान् । आभडस्य च [1]चाम्पलानाम्नी बालविधवा वाग्मिनी [illegible] तनया गृहव्यापारान् करोति कारयति । एकदा लोभात् किञ्चिचोरयन् भाण्डागारिको रुष्टेनाभडेन निष्कासितः। स कोपादुपभीमभूप गत ऊचे च —राजन् ! आभडस्य अनन्ता ऋद्धिः ; एवमेव तां गृहाण । राजाऽऽह—[2]कोऽप्यस्याप्यन्यायोऽस्ति ? । भाण्डागारिक ऊचे-नास्ति । तर्हि परधनं कथं वृथा गृह्यते ? । भाण्डागारिक प्राह— छलं किमपि क्रियते । राजाऽऽह—तथाऽहं करिष्यामि । [3]इति विचार्य भाण्डागारिकं स्वसौध एव स्थापयित्वा छगीमासं दासीशिरसि स्थालस्थं कृत्वा प्राहैषीत् । आगता सा दासी मध्याह्ने आभडसदनद्वारम् । तदा आभडो ध्यानेन जिनमर्चयति । [4]चाम्पलया स्वय द्वारमुद्घाटि । दासी मध्यमागता । स्थालं दर्शितम् । [5]चाम्पलया मांसं दृष्ट्वा तदेव भाण्डागारिकविक्रियेयमित्यूहाञ्चक्रे । मध्ये आनीता सगौरवं सा पृष्टा—किमेतत् ? । दास्याह—[6]राज्ञा उत्सवे गौरवाय वः प्रस्थापितमद: । एतन्मांसं चाम्पलया स्थालान्तरे लातम् । सपादलक्षमूल्यहारो गहेऽर्पितः ।

---

१ ग-'चाम्पलदेनाम्नी' । २ क-'न कोपि०' । ३ 'इति विचार्य' इत्यधिको ग-पाठः । ४-५ ग- 'चाम्पलदेव्या' । ६ ग-'राज्ञा महिणोमेतसीं' ।

दास्यै कण्ठाभरणम् । स्थालं मौक्तिकैर्वर्द्धापितम् । दासी हृष्टा उप-
राजं वव्राज । भोजनादनु **आभडः** पुत्र्या जगदे—तात ! निष्का-
सितभाण्डागारिकप्रेरितनृपकर्तव्यमेतत् । मया दास्यै रीढा न कृता ।
यास्यति श्रीः, परं उपायं कुरु । सर्वं स्वधनं टिप्पयित्वा राज्ञे दर्शय
५ कथय च—गृहाण स्वामिन् ! यदि ते रुचिरस्ति । तथैव चक्रे सः ।
नृपो विस्मितो लज्जितो हृष्टश्च । भाण्डागारिकं तटे धृत्वा राजोचे—
रे मूढ ! यस्मै विधिर्द्रव्यं दत्ते तस्मै तद्रक्षोपायबुद्धिमपि दत्ते ।
ततो माऽत्र वृथा मत्सरी स्याः । पुनरेव **आभड**पादयोर्लगितः सः ।
तृणमपि तत्सत्कं राज्ञा न गृहीतमेव । एवं धनी अखण्डभाग्यः
१० चिरायुः नीरुक् **आभडः** मरणावसरे पुत्रोपकाराय स्वसदने
चतुष्कोण्यां निधिचतुष्कं न्यास्थत् । मृतः स्वयं समाधिना ।
**चाम्पला**[1]ऽपि द्यां गता । पुत्रैर्बाह्ये धने गते सति ते निधयः सम्भा-
लिताः, परं न लभ्यन्ते । अञ्जनं च दापितम् । **अञ्जनी** भणति—
केऽपि श्यामाङ्गा मुद्गरपाणयोऽधोऽधो वनं नयन्ति । किं मुधा
१५ क्लिश्यध्वे ? । जाता निराशाः सामान्यवणिजोऽभवन् । तस्मात्
पुरुषाणां पुण्योदय एव धनवृद्धिनिबन्धनं, न कुलम् ।

॥ इत्याभडप्रबन्धः ॥ २३ ॥



१ ग—'चाम्पलदेव्यपि' ।

[ २४ ]

## ॥ श्रीवस्तुपालप्रबन्धः[1] ॥

श्रीवस्तुपाल-तेजः-पालौ मन्त्रीश्वरावुभावास्ताम ।
यौ भ्रातरौ प्रसिद्धौ, कीर्तनसङ्ख्यां तयोर्ब्रूमः ॥१॥[2]

[3]पूर्वं गूर्जरधरित्रीमण्डनायां 'मण्डली'महानगर्यां श्रीवस्तुपाल-तेजःपालाद्या वसन्ति स्म । [4]अन्यदा श्रीमत्'पत्तन'वास्तव्य'प्राग्वाटा'ऽन्वयठक्कुरश्री[5]चण्डपात्मजठक्कुरश्रीचण्ड[6]प्रसादाङ्गजमन्त्रि-श्री[7]सोमकुलावतंसठक्कुरश्रीआसराजनन्दनौ कुमारदेवीकुक्षिसरो-वरराजहंसौ श्रीवस्तुपाल-तेजःपालौ श्री'शत्रुञ्जय'-'गिरिनारा'दि-तीर्थयात्रायै प्रस्थितौ । 'हडालक'ग्रामं गत्वा यावत् स्वां भूतिं चि-　१०
न्तयन्तस्तावल्लक्षत्रयं जातं [8]सर्वस्वम् । ततः 'सुराष्ट्रा'त् स्व सौस्थ्य-माकलय्य लक्षमेकमवन्यां निधातु निशीथे महाश्वत्थतल खानया-मासतुः । तयोः खानयतोः कस्यापि प्राक्तनः कनकपूर्णः [9]शौल्वः कलशो निरगात् । तमादाय श्रीवस्तुपालः तेजःपालजायां अ-नुपमादेवीं मान्यतया अपृच्छत्— क्व एतन्निधीयते? । तयोक्तम्—　१५
गिरिशिखरे एवैतदुच्चैः स्थाप्यते यथा प्रस्तुतनिधिवन्नान्यसाद्भवति । तत् श्रुत्वा श्रीवस्तुपालः तद्द्रव्यं श्री'शत्रुञ्जये'-'उज्जयन्ता'दौ [10]अव्यय-यत् । कृतयात्रो व्यावृत्तो 'धवलक्क'पुरमगात् ।

अत्रान्तरे [11]महणदेवी नाम कन्यकुब्जेश्वरसुता जनकात् प्रसन्नाद् 'गूर्जर'धरां कञ्चुलिकापदे लब्ध्वा सुचिरं भुक्त्वा कालेन　२०
मृत्वा तस्यैव 'गूर्जर'देशस्य अधिष्ठात्री महर्द्धिर्व्यन्तरी जाता । सा

---

१ अस्य सारांश श्रीवस्तुपालचरित्ररूपकीर्तिकौमुदीप्रस्तावनायामाङ्ग्लभाषाय निबद्धोऽस्ति । २ आर्या । ३ ख–'पूर्वे' । ४ ग–'एकदा' । ५ ग–'चण्डपस्तदात्मज०' ६ ग–'प्रसादस्तदङ्गज०' । ७ ग–'श्रीसोमस्तत्कुलावगतमन्त्रिश्रीआसराज-तन्नन्दनौ कुमरादेवी०' । ८ ग–'सर्वं स्व' । ९ ताम्रमयः । १० ग–'अव्ययत्' । ११ ग–'महणलदेवी' ।

'धवलक्कके' शय्यायां सुखविश्रान्त राणक.श्रीवीरधवलं प्रत्यक्षीभूय जगाद—राणक ! इयं 'गूर्जर'धरा **वनराज**प्रभृतिभिर्नरेन्द्रैः सप्तभि-'श्चापोत्कट'वंश्यैः षण्णवत्यधिकं शतं वर्षाणां भुक्ता, तदनु **मूल-राज-चामुण्डराज-वल्लभराज-दुर्लभराज-भीम-कर्ण-जयसिंह-**
५ **देव-कुमारपालदेव-अजयपालदेव-लघुभीम-अर्णोराजै**श्चौलुक्यैः[1] सनाथीकृता । सम्प्रति युवां पिता-पुत्रौ **लवणप्रसाद-वीरधवलौ** स्तः । इयं 'गूर्जर'धरा कालवशादन्यायपरैः पापैः स्वाम्यभावात् 'मात्स्य'न्यायेन कदर्थ्यमानाऽऽस्ते म्लेच्छैरिव गौः । यदि युवां **वस्तु-पाल-तेजःपालौ** मन्त्रिणौ कुर्वीथे[2] तदा राज्यप्रतापधर्मवृद्धिर्भवति ।
१० अहं **महणदेवी** सर्वव्यापिभिर्भवत्पुण्यैराकृष्टा वदन्त्यस्मि । इति वदन्त्येव विद्युदिव सहसाऽदृश्या बभूव । राणकश्री**वीरधवलः** पद्मासनस्थस्तल्पोपविष्टश्चिन्तयति— अहो देव्युपदेशः साक्षात् ! । कर्तव्यमेव तन्मन्त्रिद्वयं यद् देव्योक्तम् । यतः—

दृप्यद्भुजाः क्षितिभुजः श्रियमर्जयन्ति
१५ नीत्या समुन्नयति मन्त्रिजनः पुनस्ताम् ।
रत्नावलीं जलधयो जनयन्ति किन्तु
संस्कारमत्र मणिकारगणः करोति ॥१॥[3]

इत्यादि चिन्तयन् प्रातरुत्थितः । पूर्वोक्तमेवोपदेशं **महणदेवी** श्री-**लवणप्रसादा**याप्यदत्त । कृतप्रातःकृत्यौ मिलितौ पिता-पुत्रावेकत्र ।
२० कथितं रात्रिवृत्तमन्योन्यम् । तुष्टौ द्वावपि । तदैव च तेषां कुलगुरुः पुरुषसरस्वती **सोमेश्वर**देवो द्विजः[4] स्वस्त्ययनयोगात् । ज्ञापितोऽसौ तद् वृत्तान्तं ताभ्याम् । सोऽप्युवाच—देवौ ! युवयोः प्राचीनपुण्य-प्रेरिता देवता अपि साक्षात्, तस्मात् तदुक्तमाचरताम् । मन्त्रि-बलं विना न किञ्चिद् राज्यपरिकर्मणम्[5] । मन्त्रिणौ च यौ भवतोरग्रे
२५ प्रतिपादितौ देव्या तावत्रागतौ स्तः । मम मिलितौ राजसेवार्थिनौ

---

१ ग—'राज एवं चौलुक्यैः' । २ ख—'कुर्वीध्वे' । ३ वसन्त० । ४ ख—'श्वरद्विजः' । ५ घ—'क्रमणम्' ।

द्वासप्ततिकलाविदुरौ न्यायनिष्ठौ जैनधर्मज्ञौ स्तः । यथादेशः स्यात् तदाऽऽनीयते । राणकादेशात् पुरोहितेन हि तेन सद्य आनीतौ नमस्कारितौ आसनादिप्रतिपत्त्या गौरवितौ । उक्तौ च– **श्रीलवणप्रसाद**देशाद् **वीरधवलेन** स्वयम्—

आकृतिर्गुणसमृद्धिशंसिनी, नम्रता कुलविशुद्धिसूचिका । ५
वाक्क्रमः कथितशास्त्रसङ्क्रमः, संयमश्च युवयोर्वयोऽधिकः ॥
श्लाघ्यतां कुलमुपैति पैतृकं, स्यान्मनोरथतरुः फलेग्रहिः ।
उन्नमन्ति यशसा सह श्रियः, स्वामिनां च पुरुषैर्भवादृशैः ॥२॥
यौवनेऽपि मदनान्न विक्रिया, नो धनेऽपि विनयव्यतिक्रमः ।
दुर्जनेऽपि न मनागनार्जवं, केन वामिति नवाकृतिः कृता [2] ॥३॥ १०
आवयोश्च पितृ-पुत्रयोर्महा–नाहितः क्षितिभरः [3]परद्रुहा ।
तद् युवां सचिवपुङ्गवावहं, योक्तुमत्र युगपत् समुत्सहे ॥३॥
येन केन न च धर्मकर्मणा, भूतलेऽत्र सुलभा विभूतयः ।
दुर्लभानि सुकृतानि तानि यै–र्लभ्यते पुरुषरत्नमुत्तमम् ॥५॥

अथ **वस्तुपालः** प्राह— १५

देव ! सेवकजनः स गण्यते, पुण्यवत्सु गुणवत्सु चाग्रणीः ।
यः प्रसन्नवदनाम्बुजन्मना, स्वामिना मधुरमेवमुच्यते ॥६॥
नास्ति तीर्थमिह पार्थिवात् परं, यन्मुखाम्बुजविलोकनादपि ।
नश्यति द्रुतमपायपातकं, सम्पदेति च समीहिता सताम् ॥७॥
सप्रसादवदनस्य भूपते–र्यत्र यत्र विलसन्ति दृष्टयः । २०
तत्र तत्र शुचिता कुलीनता, दक्षता सुभगता च गच्छति ॥८॥
किन्तु विज्ञपयिताऽस्मि किञ्चन, स्वामिना तदवधार्यतां हृदि ।
न्यायनिष्ठुरतरा गिरः सतां, श्रोतुमप्यधिकृतिस्तवैव यत् ॥९॥
सा गता शुभमयी युगत्रयी, देव ! सम्प्रति युगं कलिः पुनः ।
सेवकेषु न कृतं कृतज्ञता, नापि भूपतिषु यत्र दृश्यते ॥१०॥ २५

---

१ अतः परं दशमपर्यन्तानां पद्यानां छन्दो रथोद्धता । २ क–ख–'स्वामिन' । ३ घ–'पुरद्रुहात्' । ४ ख–घ–'हृदा' ।

दृष्टिर्नष्टा भूपतीनां तमोभि–स्ते लोभान्धान् साम्प्रत कुर्वतेऽग्रे ।
तैर्नीयन्ते वर्त्मना तेन यत्र, भ्रामन्त्याशु व्याकुलास्तेऽपि तेऽपि॥११॥[1]

[2]न सर्वथा कश्चन लोभवर्जितः, करोति सेवामनुवासरं विभोः ।
तथापि कार्यः स तथा मनीषिभिः, परत्र बाधा न यथाऽत्र बाध्यता ॥
५ ॥१२॥[3]

पुरस्कृत्य न्यायं खलजनमनादृत्य सहजा-
नरीन् निर्जित्य श्रीपतिचरितमादृत्य च यदि ।
समुद्धर्तुं धात्रीमभिलषसि तत् सैष शिरसा
धृतो देवादेशः स्फुटमपरथा स्वस्ति भवते ॥ १३ ॥[4]

१० किञ्च सम्प्रति आवां 'मण्डली'नगरात् सेवार्थिनौ वः समीपमागतौ स्तः सकुटुम्बौ । लक्षत्रयी द्रव्यस्य नो गृहेऽस्ति । यदा देवौ पिशुनवचने लगतः तदा एतन्मात्रस्वापतेयसहितौ दिव्यं कारयित्वा आवा मोक्तव्याविति । अत्र काहलिकं मर्यादीकृत्य परिग्रहस्य धीरा देवयोश्च भवतु इति राणकाभ्यां धीरां दत्त्वा दाप-
१५ यित्वा प्रधानमुद्रानिवेशस्तेजःपालस्य करे कृतः । 'स्तम्भ'तीर्थ-'धवलक्क'योस्त्वाधिपत्य वस्तुपालस्य निवेशितम् । एवं श्रीकरणमुद्रायां लब्धायां अन्यैव तयोः स्फूर्तिरुदलासीत्, देवतासान्निध्यात् सहजबुद्धिबलोदयाच्च । स्वगृहमायातो **वस्तुपालः** श्रीजिनराजं पूजयामास । अथ तत्त्व क्षणमचिन्तयत्—

२० उच्चैर्गर्वं समारोप्य, नर श्रीराशु नश्यति ।
दैन्यदत्ताऽवलम्बोऽथ, स तस्मादवरोहति ॥१॥[5]
अन्धा एव धनान्धाः स्यु–रिति सत्यं तथा हि ते ।
अन्योक्तेनाध्वना गच्छ–न्त्यन्ये हस्तावलम्बिनः ॥२॥
धनी धनात्यये जाते, दूरं दुःखेन दूयते ।
२५ [6]दीपहस्ता प्रदीपेऽस्ते, तमसा बाध्यतेऽधिकम् ॥३॥

---

१ शालिनी । २ ग–पुस्तके पद्यमिदं नास्ति । ३ वंशस्थविलम् । ४ शिखरिणी ।
५ अतः परं दशमपर्यन्तानां पद्याना छन्दो'ऽनुष्टुप्' । ६ ख–'दीपहस्तप्रदीपस्ते' ।

[1]छत्रच्छायाछलेनामी, धात्रा चक्रे निवेशिताः ।
भ्रमन्तोऽपि स्वमात्मानं, मन्यन्ते स्थिरमीश्वराः ॥४॥
कालेन सौनिकेनेव, नीयमानो जनः पशुः ।
क्षिपत्येष धिगासन्ने, मुखं विषयशाड्वले ॥५॥
कायः कर्मचरोऽयं तन्-मात्रकार्याऽतिलालना । ५
भृतिमात्रोचितो ह्येष, प्रपुष्टो विचिकीर्षति ॥६॥
प्रयोजकान्यकार्येषु, नश्यन्त्याशु महापदि ।
दुर्मित्राणीव खान्येषु, बन्धुबुद्धिरधीमताम् ॥७॥
विषयामिषमुत्सृज्य, दण्डमादाय ये स्थिताः ।
संसारसारमेयोऽसौ, बिभ्यत् तेभ्यः पलायते ॥८॥ १०
दुःखाग्निर्वा स्मराग्निर्वा, क्रोधाग्निर्वा हृदि ज्वलन् ।
न हन्त शान्तिमायान्ति, देहिनामविवेकिनाम् ॥९॥
विधौ विध्यति सक्रोधे, [2]वर्म धर्मः शरीरिणाम् ।
स एव केवलं तस्मा-दस्माकं जायतां गतिः ॥१०॥

इत्यादि ध्यात्वा वस्त्राणि परावृत्य श्रीवस्तुपालः सपरिजनो १५ बुभुजे । गृहीतताम्बूलो राजकुलमगमत् । एवं दिनसप्तके गते प्रथमं तद्राज्यजीर्णाधिकारी एक एकविंशतिलक्षाणि वृहद्द्रम्माणां दाण्डितः । पूर्वमविनीतोऽभूत् । तदनु विनयं ग्राहितः । तैर्द्रव्यैः कियदपि हयपत्तिलक्षणं सार सैन्य कृतं तेजःपालेन । पश्चात् सैन्यबलेन 'धवलक्क'प्रतिबद्धग्रामपञ्चशतीग्रामण्यश्चिरं सञ्चित धनं हक्कयैव द- २० ण्डिताः । जीर्णव्यापारिणो [3]निश्चोतिताः । एवं मिलितं प्रभूतं स्वम् । ततः सबलसैन्यसङ्ग्रहपटुतेजसं श्रीवीरधवलं सहैवादाय सर्वत्र देशमध्येऽभ्रमन् मन्त्री । अदण्डयत् सर्वम् । ततोऽद्भुतऋद्धिर्वीरधवलः । तेजःपालेन जगदे-देव ! 'सुराष्ट्र'राष्ट्रेऽत्यन्तधनिन-

१ ख-'यत्रच्छाया०' । २ ख-'वर्मवर्मशरी०', घ-'वर्मधर्मशरी०' । ३ 'नीचोवाया' इति भाषायाम् ।

ष्ठकुरास्ते दण्डयन्ते । ततोऽचलदयम् । 'लब्धास्वादः पुमान् यत्र, तत्रासक्तिं न मुञ्चति' ।

अथ 'वर्धमान'पुर'गोहिल'वाट्यादिप्रभून् दण्डयन्तौ प्रभु-मन्त्रिणौ 'वामनस्थलीं' आगाताम् । तटे चतुरकान् दत्त्वा स्थितो **वीरधवलः** ।
५ 'वामनस्थल्यां' तदानीं यौ प्रभुसहोदरौ तौ **साङ्गण-चामुण्ड-राज**नामानौ उद्दामस्थामानौ राणश्रीवीरधवलस्य श्यालकौ[1] । इति सौजन्यमर्यादां पालयंस्तद्भगिनीं निजजायां नाम्ना **जयतल**देवीं बहुपरिजनपरिवृतां मध्ये प्राहैषीत्[2] । सा गत्वा सहोदरौ अभाषिष्ट— भ्रातरौ ! भवतां भगिनीपतिरदण्डदण्डनः अभङ्गभञ्जनः 'गूर्जर'-
१० धरायां प्रतिग्रामं प्रतिपुरं दण्डयन् भवतोर्दण्डनायात्रागतोऽस्ति । दीयतां धना-ऽश्वादि सारम् । एतद् भगिनीवचः श्रुत्वा मदोद्ध्मातौ तौ प्रोचतुः—मन्ये स्वसस्त्वं ततः समायाता सन्ध्यर्थम् ; यतो माऽस्मद्-बान्धवयोः समरारूढयोरहं निर्धवाऽभूवम् । एतां मा स्म चिन्तां कृथाः । अमुं त्वत्पतिं हत्वाऽपि ते चारु गृहान्तरं करिष्यावः । न
१५ च निषिद्धोऽसौ विधिः, राजपुत्रकुलेषु दृश्यमानत्वात् । ततो **जयतल**-देव्याह—समानोदर्यौ ! नाहं पतिवधभीता वः समीपमागाम् ; किन्तु निष्पितृगृहत्वभीता । स[3] हि नास्ति वो मध्ये यस्तं जगदेकवीरं 'ऊ[4]-**परवटा**'ख्यहयारूढं नाराचान् क्षिपन्तं कुन्तं वेल्लयन्तं खङ्गं खेलयन्तं वा द्रष्टुमीशिष्यते । कालः साक्षादरीणां सः अदृष्टपर-
२० शक्तिः सर्वोऽपि भवति बलवान् । इत्येवं वदन्त्येव ततो निर्गत्य सा सती पतिसविधं गत्वा तां वार्तामुच्चैरकथयत् । तन्निशम्य **वीरधवलः** क्रोधकरालाक्षो भृकुटीभङ्गभीषणभालानुकृतभीमः सन् सङ्ग्राममम-मण्डयत् । तौ द्वावपि वीराधिवीरौ ससैन्यौ आगतौ । सङ्घटितो रणः । पतितानि योधसहस्राणि पक्षद्वयेऽपि । रजसाऽऽच्छादितं गगनम् ।

---

१ 'साळा' इति भाषायाम् । २ ख–घ– 'देवीं० मध्ये प्राहैषीत् बहुपरिजनपरिवृताम्' । ३ क–'सा' । ३ ग–'अपर०' । ४ घ–'शल्यं' ।

गतः स्वपरविभागः । **वीरधवलो** हत इति सैन्यद्वये [1]व्याचक्षे । क्षणार्धेन **वीरधवलो** दिव्याश्वा[2]धिरूढः सारसुभटयुक् **साङ्गण-चामुण्डराजयो**र्मेलापके गत्वा प्रसृतः । ऊचे च— रे सौराष्ट्राः ! [3]गृह्णीतं करे शस्त्रं यद्यस्ति तेजः । इत्युक्त्वा तच्चक्रे यद् देवैर्दिवि शिरो धूनितं कुर्वद्भिर्ददृशे । हतौ **साङ्गण-चामुण्डराजौ** । असि- 5
मुखैः [4]शोधितं रणक्षेत्रम् । पालिताः स्व परे च पालनार्हाः । प्रविष्टो **वीरधवलो** 'वामनस्थली'मध्यम् । गृहीतं श्यालकयोः कोटिसङ्ख्यं पूर्वजशतसञ्चितं कनकम्, चतुर्दश शतानि दिव्यतुरङ्गमाणाम्, पञ्च सहस्राणि तेजस्वितुरङ्गमाणाम्, अन्यदपि मणिमुक्ताफलादि । जितं जितमित्युद्घोषः समुच्छलितः । स्थितस्तत्र मासमेकम् । ततो 10
[5]वाजामा-नगजेन्द्र-चूडासमा-वालाकादिस्वामिनः प्रत्येकं गृहीतधनाः कृताः । द्वीपवेटपत्तनेषु प्रत्येकं बभ्राम । धनभाण्डं मिलितम् । एवं 'सौराष्ट्र'जयं कृत्वा समन्त्री राणो 'धवलक्क' प्राविक्षत् । उत्सवा उत्सवोपर्यपुस्फुरन् । तत्र प्रस्तावे चारणेन दोधकपादद्वयं पठितम्—

[6]'जीतउ छहिं जणेहिं, सांभलि समहरि [7]वाजियइ । 15

एतावदेव पुनः पुनरपाठीत्, नोत्तरार्धम् । गतश्चारणः स्वस्थानम् । तत्र राजवंश्याः षण्णां जनानां मध्ये आत्मीयं नाम न्यासयितुं रात्रौ तस्मै प्रत्येकं लक्षमदुः । सोऽपि समग्रहीत् । एवं ग्राहं ग्राहं परिपारिते एकदा प्रातः सभायां बहुजनाकीर्णायां [8]राणकाग्रे उत्त-राधमप्यपाठीत्— 20

[9]'बिहुं भुजि वीरतणेहिं चहुं पगि **ऊपरवट** तणे ॥ १ ॥

---

1 ख–घ–'व्याचक्रे' । २ घ–'श्वारूढः' । ३ ख–'गृह्णीत' । ४ ग–'योधितं' ।
५ ख–वाडाकादि०' ।
६ छाया—जितं षड्भिर्जनैः श्रुत्वा समरे गर्जति (?) ।
७ ग'वाजतइ' । ८ ख–'राणाग्रे' ।
९ छाया—द्वाभ्यां भुजाभ्यां वीरस्य चतुर्भिः पादैः ऊपरचटस्य ।

[1]इति श्रुत्वा सर्वेऽपि चमत्कृता राजन्यकाः । अहो प्रपञ्चेनानेनास्मान् वञ्चयित्वा निर्यासे तत्त्वमेवोक्तम् । पुनः सविशेषं ददुः, [2]स्वामिभक्तत्वात् । तदा 'भद्रेश्वर'वेलाकूले **भीमसिंहो** नाम प्रतीहारस्तिष्ठति । स आत्मबली कस्याप्याज्ञां न मन्यते धनी च । तस्मै
५ **वीरधवलो** राजा आदेशमदीदपत्—सेवको भव । सोऽपि [3]प्रत्यदीदपत्—सेवको भव । यद् दीयते तल्लभ्यते इति न्यायः । **वीरधवलस्तद्विग्रहाय** 'गूर्जर'धराराजपुत्रानमेलयत् बहुसैन्यं च । **भीमसिंहोऽपि** बलेन प्रबलः । उभयपक्षेऽपि बलवत्ता ।

अत्रान्तरे 'जावालि'पुरे 'चाहमान'कुलतिलकः श्री**अश्वराज**-
१० शाखीयः **केतुपुत्रसमरसिंहनन्दनः** श्री**उदयसिंहो** नाम राजकुले राज्यं भुनक्ति । तस्य दायादास्त्रयः सहोदराः **सामन्तपालाऽनन्तपाल-त्रिलोकसिंह**नामानो दातारः शूराः तद्दत्तग्रासेन तृप्तिमदधतो 'धवलक'मागत्य श्री**वीरधवलं** द्वास्थेनावभाणन्—देव! वयं असुकवंश्यास्त्रयः क्षत्रियाः सेवार्थिनरा आगताः स्मः ।
१५ यद्यादेशः स्यात् तदा आगच्छामः । राणकेनाहूतास्ते । तेज-आकृति-श्रमादिभिः शोभनाः । रुचितास्ते तस्य । परं पृष्टाः—को ग्रासो नः कल्पते ? । ते प्रोचुः—देव ! प्रतिपुरुषं 'छ्रणसा'-पुरीयद्रम्मायां लक्षं लक्षं ग्रासः । राणकेनोक्तम्— इयता धनेन शतानि भटानां सङ्गच्छन्ते । किमधिकं यूयं करिष्यथ ? । न
२० दास्यामीयत् । इति कथयित्वा ते बीटकदानपूर्वं विसृष्टाः । तदा मन्त्रि**वस्तुपाल-तेजःपालाभ्यां** विज्ञप्तम्—स्वामिन् ! न एते [4]विमुच्यन्ते । पुरुषसङ्ग्रहाद् धनं न बहु मन्तव्यम् ।

वाजि-वारण-लोहानां, काष्ठ-पाषाण-वाससाम् ।
नारी-पुरुष-तोयानां, अन्तरं महदन्तरम् ॥ १ ॥[5]

२५ एवं विज्ञप्तमपि राणकेन नावधारितम् । मुक्ता एव ते गताः प्रति-

---

१ 'इति श्रुत्वा' इत्यधिको ग-पाठः । २ 'स्वामिभक्तत्वात्' इत्यधिको ग-पाठः । ३ घ-'प्रत्यादीदपत्' । ४ ग-'मुच्यन्ते' । ५ अनुष्टुप् ।

भटतटम्[1]। श्रीभीमसिंहप्रतीहारेण[2] भेटितास्ते । उक्तो वीरधवल-कृतः कार्पण्यव्यवहारः । तुष्टो भीमसिंहः । कृतं तदिष्टवृत्तिर्द्विगुण्यम् । तैश्चोक्तम्—देव ! शीघ्रमेव कथापय वीरधवलाय अस्मद्बलेन, यथा—यदि क्षत्रियोऽसि तदा शीघ्रं युद्धायागच्छेः; अन्यथा अस्मदीयो भूत्वा जीवेः । प्रेषितो भीमसिंहेन भट्टः । उक्तः समेत्य वीरधवलस्तत्[3] । एवं श्रुत्वा[4] वीरधवलः ससैन्यश्चलितः । भट्टपुरः प्राहैषीत् । 'पञ्चग्रामा'ग्रे[5] युद्धमावयोः । तत्र क्षेत्रं कारयन्नस्मि । शीघ्रमागच्छेरित्याचाख्यापयत् । सोऽपि तत्र ग्रामे समेतः सैन्येन सबलः । सङ्घटिते सैन्यद्वयम् । वर्तन्ते भटानां सिंहनादाः । नृत्यन्ति पात्राणि । दीयन्ते धनानि । पूज्यन्ते[6] शस्त्राणि । बध्यन्ते महावीराणां टोडराणि । त्रिदिनान्ते युद्धं प्रतिष्ठितम् । उत्कण्ठिता योधाः[7] । 'नेदीयानिह बाहूनामाहवो हि महामहः' । सङ्ग्रामदिनादर्वाग् मन्त्रिवस्तुपाल-तेजःपालाभ्यां स्वामी विज्ञप्तः—देव ! त्रयो मारवाः[8] सुभटास्त्वया न सङ्गृहीतास्ते परबले मिलिताः । तद्बलेन भीमसिंहो निर्भीर्गर्जति । इति अवधार्यम् । चरैरपि निवेदितमेतन्नौ । राणकेनोक्तम्— यदस्ति तदस्तु, किं भयम् ? । 'जयो वा मृत्युर्वा युधि भुजभृतां कः परिभवः ?' । मन्त्रिणा ज्यायसोक्तम्— स्वामिन् ! कार्मुककरे देवे के परे परोलक्षा अपि ? । यदुक्तम्—

> कालः केलिमलङ्करोतु करिणः क्रीडन्तु कान्तासखाः
> कासारे[9] बत कासराः सरभस गर्जन्त्विह स्वेच्छया ।
> अभ्यस्यन्तु भयोज्झिताश्च हरिणा भूयोऽपि झम्पागति
> कान्तारान्तरसञ्चरव्यसनवान् यावन्न कण्ठीरवः ॥ १ ॥[10]

---

१ घ–'भटम्' । २ घ–'प्रतीहार' भेटित. स उक्तो' । ३ घ–'पतः । ४ 'एवं श्रुत्वा' इत्यधिको ग–पाठः । ५ घ–'ग्रामाग्रामे' । ६ ' पूज्यन्ते॰ टोडराणि ' इत्यधिकः पाठो ग–पुस्तके वर्तते । ७ ग–'योद्धा । ८ मरुभूमिजाताः । ९ ख–'साका(कासा)रे कनकासराः' । १० शार्दूल॰ ।

कण्ठीरवे तु दृष्टे कुण्डाः सर्वे वन्याः। अन्यच्च—प्रभो! अस्मदीय-
सैन्ये 'डोडीया'वंशीयो जेहुलः 'चौलुक्यः' सोमवर्मा 'गुलकुल्यः'
क्षेत्रवर्माऽस्ति। देवस्तु किं वर्ण्यते कल्यर्जुनः? । एवं वार्तासु
वर्तमानासु द्वाःस्थ एत्य व्यजिज्ञपद् राणकम्— देव! पुरुष एको
५ द्वारि वोऽस्ति, कस्तस्यादेशः? । भ्रूसंज्ञया राणकस्तममोचयत्।
मध्यममागत्य स उवाच—देव! सामन्तपाला-ऽनन्तपाल-त्रि-
लोकसिंहैस्त्यक्तैर्भीमसिंहमाश्रितैः कथापितमस्ति—देव! त्रि-
भिर्लक्षैर्ये भटास्त्वया स्थापिता भवन्ति तैरात्मानं सम्यग् रक्षेः।
प्रातः कुमार्यां आरेण्यां (?) त्वामेव प्रथमतममेष्यामः। इति श्रुत्वा
१० हृष्टेन राणेन ससत्कारं स प्रैषि। कथापितं च—एते वयमागता
एव प्रातर्भवद्भिरपि ढौक्यम्। सर्वेषामपि तत्रैव ज्ञास्यते भुजसौष्ठवम्।
गतः स तत्र। प्रातर्मिलित च बलद्वयम्। वादितानि रणतूर्याणि।
अङ्गेषु भटानां वर्माणि न ममुः। दत्तानि दानानि।
तैस्तु त्रिभिर्मारवैरात्मीयं वर्षलभ्यं द्रव्यलक्षत्रयं भीमसिंहात् सद्यो
१५ लात्वाऽर्थिभ्यो ददे। स्वयमश्वेष्वारूढाः। प्रवर्तन्ते प्रहाराः।
उत्थितमान्ध्यं शस्त्रैः। पतन्ति शराः कृतान्तदूताभाः। आरूढं
प्रहरमात्रमहः। सावधानो वीरधवलः। दत्तावधाना मन्त्र्यादय-
स्तद्रक्षकाः। अत्रान्तरे आगतास्ते त्रयो मरुवीराः। भाषितः स्वमुखेन
तैर्वीरधवलः—अयं देवः इमे वयम्; सावधानीभूय रक्षात्मानम्,
२० त्वद्योधा अपि त्वां रक्षन्तु। वीरधवलेनाप्युक्तम्—किमत्र विकत्थ-
ध्वे? क्रिययैव दोःस्थाम प्रकाश्यताम्। एवमुक्तिप्रत्युक्तौ लग्नं
युद्धम्। यत्नपरेषु तटस्थेषु रक्षत्स्वपि तैर्भल्लत्रयं वीरधवलस्य भाले
[1]लगितम्। एवं त्वां हन्मः, परं एकं तत्र बीटकं तदा भक्षितमस्मा-
भिरिति वदद्भिस्तैरेव श्रीवीरधवलस्य तटस्थाः प्रहरणैः पातिताः।
२५ तेऽपि त्रयो मारवाः [2]व्रणशतजर्जराङ्गाः सञ्जाताः। राजवीरधवलः

---

१ ग–'लिङ्गितम्'। २ क–ख–'व्रातजर्जराङ्गाः'।

ऊपरवटाऽश्वात् पातितः । ऊपरवटस्तैर्मार्गवैः रत्नोत्तारकैः बन्धितः प्रच्छन्नः । रजसाऽन्धं जगत् । तदा राजश्रीवीरधवलो भुवि पातितो भट्टैरुत्पाट्य लले । तावता पतिता सन्ध्या । निवृत्तं सैन्यद्वयम् । रात्रौ भीमसिंहीयाः सुभटाः सर्वेऽपि वदन्ति । अस्माभिर्वीरधवलः पातितः पातितः । ततो मारवैरभिहितम्— ५
युष्माभिः पातित इति किमत्राभिज्ञानम् ? । तैरुक्तम्—किं भवद्भिः पातितः ? । मारवैरभिदधे—अस्माभिरेव पातितः । ऊपरवटो वदिष्य-ति । उत्तरकादानीय ऊपरवटो दर्शितः । तुष्टो भीमसिंहः । उक्तवांश्च 'शुद्धराजपुत्रेभ्यो दत्तं धनं शतधा फलति; इदमेव प्रमाणम् । रिपुहयहरणं क्षत्रियाणां महान् शृङ्गारः । एवं वार्ताः १०
कुर्वतां भटानां रात्रिर्गता । प्रातर्वीरधवलो व्रणजर्जरोऽपि पट्टभुया-क्षान् 'दीवितुं प्रवृत्तः । भीमसिंहसैन्यहेरिकैर्गत्या तज्ज्ञात्वा तत्रोक्तम्—वीरधवलः कुशली गर्जति । एवं सति यज्जानीथ तत् कुरुथ । अथ भीमसिंहाय तन्मन्त्रिभिर्विज्ञप्तम्- देव ! अयं बद्धमूलो देशेशः । अनेन विरोधो दुरायतिः, तस्मात् सन्धिः श्रेष्ठः । भीम- १५
सिंहेन मानितं तद्वचनम्, परं सङ्ग्रामडम्बरः कृतः । अन्योन्य-मपि यावद् मिलितौ द्वौ । तावद् भट्टैरन्तरा प्रविश्य मेलः कृतः । ऊपरवटाश्वो राणाय दापितः । भीमसिंहेन 'भद्रेश्वर'मात्रेण धृति-र्धरणीया । बिरुदानि न पाठनीयानि । इति व्यवस्थाऽऽसीत् । एवं कृत्वा श्रीवीरधवलो दानं तन्वन् 'धवलक्क'मागात् । २०
शनैः शनैः प्राप्तपरमप्राणो भीमसिंहमपराध्य तं मूलादुच्छेद्य एकवीरां धरित्रीमकरोत् । एवं 'धवलक्के' कुर्वतस्तस्य क्षुभितैः प्रभूतैः परराष्ट्रनृपतिभिः स्वं दत्तम् । तेन स्वेन सैन्यमेव मिलितम् । चतुर्दश शतानि महाकुलानि राजवंश्यानां राजपुत्राणां मेलितानि ।

---

१ ख–'सिद्धराज०' । २ क–'दवितु', ग–'धादितु', ग 'क्रीडितुम्' । ३ घ–'सैन्यकैहेरिकैः०' । ४ 'एवं सति' इति ग–पुस्तकेऽधिकः पाठः । ५ क–ख–घ–सेनेन गतं' ।

तानि समभोजन-वसन-भोग-वाहनानि श्रीतेजःपालस्य सहचारिणी-छायावत् समजीवितमरणत्वेन स्थितानि । तद्बलेन सैन्यबलेन स्वभुजाबलेन च सर्वं जीयते ।

इतश्च 'महीतटा'ख्यदेशे 'गोध्रा(धरा?)'नाम नगरं वर्तते यत्र[1]
५ तत्तत्कार्येषु सङ्ग्रामे मृतानां राजपुत्राणां एकोत्तरशतसङ्ख्यानि स्वयं तु लिङ्गानि उदभूवन्[2] । तत्र **घूघुलो** नाम मण्डलीकः । स 'गूर्जर'धरासमागन्तुकसार्थान् गृह्णाति । राणश्रीवीरधवलस्याज्ञां न मन्यते । तस्मै मन्त्रिभ्यां **वस्तुपाल-तेजःपालाभ्यां** भट्टः प्रेषितः । अस्मत्प्रभोराज्ञां मन्यस्व, अन्यथा **साङ्गण-चामुण्डराजादीनां**
१० मध्ये मिल, इति कथापितम् । तच्छ्रवणात् क्रुद्धेन तेन तेनैव भट्टेन सह स्वभट्टः प्रस्थापितः । तेनागत्य राजश्रीवीरधवलाय कज्जलगृहं शाटिका चेति द्वयं दत्तम् । उक्तं च-ममान्तःपुरं सर्वोऽपि राजलोक इति नः प्रभुणा ख्यापितमस्ति । राणेन स भट्टः सत्कृत्य प्रहितः गतः स्वस्थानम् । राणेन भाषिताः सर्वे[3] निजभटाः । उक्तं च-
१५ **घूघुल**निग्रहाय बीटकं को ग्रहीष्यति ? । कोऽपि नाद्रियते । तदा **तेजःपालेन** गृहीतम् । चलितः प्रौढसैन्यपरिच्छदः । गतस्तद्देशा-दर्वाग्भागे । कियत्यामपि भुवि स्थित्वा सैन्यं कियदपि स्वल्पमग्रे प्रास्थापयत् । स्वयं महति मेलापके गुप्तस्तस्थौ । अल्पेन सैन्येनाग्रे गत्वा 'गोध्रा'गोकुलानि वालितानि । गोपालाः शरैस्ताडिताः ।
२० तैरन्त'गोध्रक' पूत्कृतम्-गावो ह्रियन्ते कैश्चित्[4] । क्षात्रं धर्मं पुरस्कृत्य ततो धावत धावत । इति शब्दे श्रुते **घूघुलो** विचिन्तयति[5]-नवीनमिदम् । केनास्मत्पद्रमागत्य[6] गावो ह्रियन्ते ? ।

वृत्तिच्छेदविधौ द्विजातिमरणे स्वामिग्रहे गोग्रहे
सम्प्राप्ते शरणे कलत्रहरणे मित्रापदां वारणे ।

---

१ ग-'गोधिरा'। २ 'यत्र' इत्यारभ्य 'उदभूवन्'पर्यन्तः पाठो नास्ति ग-पुस्तके । ३ ख-घ-'स्वे सर्वे । घूघूल०' । ४ ख-'गोकुलानि' । ५ ग-'व्यचिन्तयत्' । ६ 'पादर' इति भाषायाम् ।

आर्तत्राणपरायणैकमनसां येषां न शस्त्रग्रह-
स्तानालोक्य विलोकितुं मृगयते सूर्योऽपि सूर्यान्तरम् ॥१॥

इति वदन्नेव ससेनस्तुरङ्गमारूढो [2]गतोऽनुपदं गोहर्तॄणाम् । गोहर्तारोऽपि घूघुलाय दर्शनं ददते शरान् सन्दधते । न च स्थित्वा युध्यन्ते । इत्येवं खेदयद्भिस्तैस्तावन्नीतो घूघुलः यावन्मन्त्रिणो महति वृन्दे प्रविष्टः । ततो ज्ञातमीदृशं छद्मेदं मन्त्रिणः । भवतु तावत्, घूघुलोऽस्मि । निजाः सुभटाः समराय प्रेरिताः । स्वयं सविशेषमभियोगं दधौ । ततो लग्नः संहर्तुम् । [3]मन्त्रिपृतनाऽपि ढुढौके । चिरं रणरसभरोऽभूत् । भग्नं घूघुलेन मन्त्रिकटकं कान्दिशीकं [4]दिशो दिशं गच्छति । तदा मन्त्रितेजःपालेन स्थिरं अश्वस्थितेन तटस्थाः सप्तकुलीनाः शुद्धराजपुत्रा भापिताः— अरिस्तावद् बली । आत्मीयं तु भग्नं सकलं बलम् । नष्टानामस्माकं का गतिः ?। किं यशः ? । यशो विना जीवितव्यमपि नास्त्येव । तस्मात् कुर्मः समुचितम् । तैरपि सप्तभिस्तद्वचोऽभिमतम् । व्याघुटिताऽष्टौ घ्नन्ति नाराचादिभिः परसेनाम् । तावन्मात्र स्ववृन्दं सङ्घटित दृष्ट्वा अपरेऽपि सत्त्वं धृत्वा वलिताः । तदा तेजःपाल एकत्र निजासेऽम्बिकादेवीं अपरत्र कपर्दियक्ष पश्यति । अतो जय निश्चित्य [6]प्रहरंस्तावद् ययौ यावद् घूघुलः । गत्वा भाषितः—मण्डलिक ! येनास्मन्नाथाय कज्जलगृहादि प्रहीयते तद् भुजबलं दर्शय । घूघुलोऽपि प्रत्याह— इदं तद्भुजबलं पश्य । इत्युक्त्वा निबिडं युयुधे । द्वन्द्वयुद्ध मन्त्रिमण्डलीकयोः सञ्जातम् । अथ मन्त्री सहसा दैवतबलभुजाबलाभ्यां तमश्वादपीपतत् । जीवन्त बद्ध्वा काष्ठपञ्जरेऽचिक्षिपत् । [7]स्वसेनान्तर्निनाय । स्वयं बहुपरिच्छदो 'गोध्रा'नगर प्रविवेश । अष्टादश कोटीर्हेम्नां कोशं, अश्वसहस्राणि चत्वारि, मूटक शुद्धमुक्ताफलानां,

१ शार्दूल० । २ ख-घ-'जातोऽनुपदी गो०' । ३ ग-'मन्त्रिकटकेनापि' । ४ ग-'दिशोर्दिशं' । ५ 'यलं' इत्यधिको ग-पाठः । ६ ख-घ-'प्रसर०' । ७ घ-'स्वसैन्यान्त०' । चतुर्विंशति० २८

दिव्यास्त्राणि, दिव्यवस्त्राणि इत्यादि सर्वं जग्राह । घूघुलस्थाने आत्मीयं सेवकं न्यास्थत् । वलितो मन्त्री गतो 'धवलक्क'म् । दर्शिता घूघूलश्रीः श्रीवीरधवलाय । तत्कज्जलगृहं तद्गले बद्धं शाटिका च वण्ठैः परिधापिता । तदा घूघूलः स्वजिह्वां दन्तैः खण्डयित्वा मृतः । ५ जातं वर्द्धापनं 'धवलक्के' । श्रीवीरधवलेन महत्यां सभायामाकार्य श्रीतेजःपालः परिधापितः । प्रसादपदे[1] स्वर्णं भूरि ददे । तदवसरे कवीश्वरसोमेश्वरे च दृक् सञ्चारिता श्रीवीरधवलेन । ततः सोमेश्वरदेवः प्राह—

मार्गे कर्दमदुस्तरे जलभृते गर्ताशतैराकुले
१० खिन्ने शाकाटिके[3] भरेऽतिविषमे दूरं गते रोधसि ।
शब्देनैतदहं ब्रवीमि महता कृत्वोच्छ्रितां तर्जनी—
मीदृक्षे गहने विहाय धवलं वोढुं भरं कः क्षमः ? ॥१॥[4]

विसृष्टा सभा । मिलितौ वस्तुपाल-तेजःपालावेकत्र । कृताः कथाश्चिरम् । तुष्टौ द्वौ [5]मन्त्रयेते स्म—धर्मे एव धनमिदं पुण्यलब्धं व्यय- १५ नीयम् । ततः सविशेषं तथैव कुरुतः । ततः कविना केनाप्युक्तम्—

पन्थानमेको न कदापि गच्छे—दिति स्मृतिप्रोक्तमिव स्मरन्तौ ।
तौ भ्रातरौ संसृतिमोहचौरे, सम्भूय धर्मेऽध्वनि सम्प्रवृत्तौ ॥१॥[6]

अथ श्रीवस्तुपालः शुभे मुहूर्ते 'स्तम्भ'तीर्थं गतः । तत्र मि- २० लितं चातुर्वर्ण्यम् । दानेन तोषितं सर्वम् । तत्र च [7]सदीकनामा [8]नौवित्तिको वसति । स च सर्ववेलाकूलेषु प्रसरमाणविभवो महाधनाढ्यः बद्धमूलः अधिकारिणं नन्तुं नायाति । प्रत्युत तत्पार्श्वेऽधिकारिणा गन्तव्यम् । एवं बहुः कालो गतः । पूर्वं मन्त्रीन्द्रस्तं भट्टे-

---

१ घ–'भूरि २ बहुसुवर्णं ददे' । २ घ–'दुस्तरेऽतिविषमे' । ३ शाकटके[न] भरे च विषमे' । ४ शार्दूल० । ५ ख–'मन्त्रयेतां तस्माद् धर्मे' । ६ उपजातिः । ७ ग–'सैदनामा' । ८ घ– 'वहाणवटी' इति भाषायाम् । ९ क-ख-'स्तु' ।

नोवाच—अस्मान् नन्तुं किमिति नागच्छसि ?। स[1] प्रतिवक्ति—तव नवेयं रीतिः। प्रागपि नागच्छामि। यत् तु स्यान्न्यूनं तव त[2]दा तत् पूरयामि स्थानस्थः। तच्छ्रुत्वा मन्त्री रुष्टः कथापयामास—पुरुषो भूत्वा तिष्ठेः। शास्मि त्वां दुर्विनीतम्। ततस्तेन 'वड्ड'आख्यवेला-कूलस्वामी राजपुत्रः पञ्चाशद्वंशमध्यस्थखादिरमुशलस्य एकख[3]ड्ग- 5
प्रहारेण छेदने प्रभुः प्रभूतसैन्यत्वात् 'साहणसमुद्र' इति ख्यातः शङ्खाख्य उत्थापितः। तेन [4]भाणितं मन्त्रिणे—मन्त्रिन्! मदीयमेकं नौवित्तकं न सहसे ?। मदीयं [5]मित्रमसौ। तस्माद् वचनात् क्रुद्धो मन्त्री तं [6]प्रत्यवोचत्—श्मशानवासी भूतेभ्यो न बिभेति। त्वमेव प्रगुणो भूत्वा युधि [7]तिष्ठेः। इति श्रुत्वा सन्नद्धबद्धो भूत्वा सोऽप्यागतः। १०
[8]मन्त्रिवस्तुपालोऽपि 'धवलक्कका'द् भूरि सैन्यमानाय्याभ्यषेण-यत्। रणक्षेत्रे मिलितौ द्वौ। प्रारब्धं रणम्। शङ्खेन निर्दलितं मन्त्रिसैन्यं पलायिष्ट दिशो दिशि। तदा श्रीवस्तुपालेन स्वस्य राजपुत्रो माहेचक्रनामा भाषितः—इदं अस्मन्मूल[9]घट्टं वर्तते त्वं च वर्तसे। तत् कुरु येन श्रीवीरधवलो न लज्जते। ततोऽसौ राज- १५
पुत्रः स्वैरेव कतिपयैर्मित्रराजपुत्रैः सह तमभिगम्योवाच—शङ्ख! नेयं 'वड्ड'आख्या तव [10]ग्रामटिका क्रीडा, क्षत्रियाणां स ग्रामोऽयम्। शङ्खोऽप्याह—सुष्ठु वक्तुं वेत्सि। नाय तव प्रभोः पट्टः, किल परिपन्थिनः प्रदेशः। किं नु सुभटस्य क्रीडाक्षेत्रमिदम् ?। इत्येवं वादे जाते द्वन्द्वरणे साहेचकेन मन्त्रिणि पश्यति मन्त्रिप्रता- २०
पाच्छङ्खः पातितः। समरे जातो जयजयकारः। मन्त्रिणा तद्राज्यं गृहीतम्। 'वेला'[11]कूलर्द्धीनां क्व सङ्ख्याः ?। ततः 'स्तम्भ'तीर्थ-

---

१ ख-घ-'स वक्ति—न न चेयं रीतिः'। २ ग-पुस्तके 'तदा' इत्यधिकः पाठः। ३ ख-घ-'खड्गेन छेदने'। ४ क ख-'भणितं'। ५ 'मित्र.' इत्यधिको ग-पाठः। ६ घ-'प्रत्यवोचत्'। ७ घ-'तिष्ठेथाः। सन्नद्ध० स। मन्त्रि०'। ८ ग-'मन्त्रिणा वस्तुपालेनापि'। ९ ग-घट्ट त्वमेव वर्तसे। अथ तत्'। १० ग-'ग्रामसीम आंबटकक्रीडा, किन्तु'। ११ ख-'कूलनृपऋद्धीनां'।

मुक्तोरणमुत्पताकमविशत् । ततो मन्त्री प्रविष्टः 'सदीकसदनम्[1] ।
तस्य भट्टान् सप्तद्विगुणितशतानि सन्नद्धान् हत्वा तं जीवग्राहं
जग्राह । विब्रुवाणं तं कृपाणेन जघान । ततो गृहं तदीयमामूल-
चूलं खानितं[2] पातितं च । हेमेष्टिकानां सङ्ख्या न । तथा मणि-
५ मुक्ताफलपदकानां प्रमाणं केनापि न ज्ञातम् । केचिद् वृद्धा
वदन्ति—तत्र तेजनतूरिकायाः करण्डश्चटितः श्रीमन्त्रीश्वरस्य ।
आयातो मन्त्री स्वधवलगृहम् । तोषितः स्वस्वामी वीरः परिग्रह-
[3]लोकश्च । ततः कवीश्वराणां स्तुतिः—

श्रीवस्तुपाल ! प्रतिपक्षकाल !, त्वया प्रपेदे पुरुषोत्तमत्वम् ।
१० तीरेऽपि वार्धेरकृतेऽपि मात्स्ये, रूपे पराजीयत येन शङ्खः ॥१॥[4]

तावल्लीलाकवलितसरित् तावदभ्रंलिहोर्मि-
स्तावत् तीव्रध्वानितमुखरस्तावदज्ञातसीमा ।
तावत् प्रेङ्खत्कमठमकरव्यूहबन्धुः ससिन्धु-
र्लोपामुद्रासहचरकरक्रोडवर्ती[5] न यावत् ॥१॥[6]

१५ ततश्चोक्षवाटि-नौवित्तिकवाटयोः पार्थक्यं कृतम् । मन्त्रिणा
आ महाराष्ट्रेभ्यः साधिता भूः । 'वेला'कूलीयनरेन्द्राणां नरेन्द्रान्त-
राक्रम्यमाणानां मन्त्री प्रतिग्रहप्रेषणेन सान्निध्यं कृत्वा जयश्रियं
अर्पयति । इति कारणात् ते तुष्टाः [7]बोहित्थानि सारवस्तुपूर्णानि प्राभृ-
ते प्रहिण्वन्ति । अम्बिका-कपर्दिनौ निधानभुवं रात्रौ समागत्य
२० कथयतः । ते निधयो मन्त्रिणा खातं खातं गृह्यन्ते । तद्भाग्यात्
दुर्भिक्षस्य नामापि नाभूत् । विड्वराणि दूरे नष्टानि । मुद्गल-
बलानि वारंवारमागच्छन्ति जघ्निरे एकदा, पुनर्नानयुः । पल्लीवनेषु
दुकूलानि नागोदराणि च बद्धानि । ग्रहीता कोऽपि न । ग्रामे ग्रामे

---

१ ग-'सैदसदनम्' । २ ख-घ-'खात' । ३ घ-'लोकश्च दर्शनभट्टविप्रलोकश्च । ततः स्तुति.' । ४ उपजातिः । ५ ख-'वक्त्री' । ६ मन्दाक्रान्ता । ७ नावः ।

मण्डितानि सत्राणि । सत्रे सत्रे मिष्टान्नानि । उपरि ताम्बूलानि च । तत्र ग्लानार्थं वैद्या विविधाः प्रस्थापिताः । मन्त्रिव्यवस्थया दर्शनद्वेषो न । वर्णद्वेषो न । प्रतिवर्षं स्वदेशे सर्वनगरेषु वारतिस्रस्तिस्रः श्वेताम्बरेभ्यः प्रतिलाभना शेषदर्शनानामप्यर्चा । मन्त्रिश्रीवस्तुपालस्य पत्न्यौ द्वे **ललितादेवि(वी)-सोपूनाम्न्यौ** कल्पवल्लिकामधेनू इव । **ललितादेव्याः** सुतो मन्त्रिजयन्तसिंहः सुहवदेवि(वी)जानिः प्रत्यक्षचिन्तामणिः । **तेजःपालदयिताऽनुपमाऽनुपमैव** । पठितं च कविना— ५

लक्ष्मीश्चला शिवा चण्डी, शची सापत्न्यदूषिता ।
गङ्गा न्यग्गामिनी वाणी, वाक्साराऽनुपमा ततः ॥१॥[4]

श्री'शत्रुञ्जया'दिषु 'नन्दीश्वरे'न्द्रमण्डपप्रभृतिकर्मस्थायाः प्रारम्भिषत । आरासणादिदलिकानि स्थलपथेन जलपथेन च तत्र तत्र प्राप्यन्ते । तपसामुद्यापनानां च प्रकाशः । १०

एकदा तौ भ्रातरौ द्वावपि मन्त्रिपुरन्दरौ महर्द्धिसङ्घोपेतौ श्रीपार्श्वं नन्तु 'स्तम्भनक'पुरमीयतुः । प्रथमदिने ससङ्घौ तौ श्रीपार्श्वस्य पुरः श्रावकश्रेणिपुरःसरौ स्थितौ । तदा गीतगानरासादिमहारसः प्रवर्तते । तदवसरे तत्रत्यसङ्घोपरोधात् तत्रत्याध्यक्षाः सूरयो **मल्लवादिनः** समाकारिताः । ते यावद् देवगृहं प्रविशन्ति तावत् पठन्ति— १५

अस्मिन्नसारे संसारे सारं सारङ्गलोचनाः ।

मन्त्रिभ्यां श्रुतं चिन्तितं च—अहो मठपतिगृहवद् देवगृहेऽपि शृङ्गाराङ्गारगर्भं पदद्वयं कथयन्नस्तीति । देवनमस्कारादिकमुचितमिह तन्नाधीते; तस्माददृष्टव्योऽसौ । उपविष्टः सूरिः सः । अन्येऽपि सूरयः शनशः पङ्क्तौ निषण्णाः । मङ्गलदीपान्तेऽपरसूरिभिर्मल्लवादिन एवाऽऽशीर्वादाय प्रेरिताः । मन्त्री पुरस्तिष्ठति । 'अस्मिन्नसारे ससारे सारं' इत्यादि पादद्वयं भणितं तैः व्याख्यातं च तदेव । २० २५

---

१ घ–'ताम्बूलानि वैद्याः दर्शन०'। २ घ–'सची'। ३ क–'गतः'। ४ अनुष्टुप् । ५ ग–'तैरेव पठितम्' । ६ ख–'पद्य प्रस्तौति' । ७ ग–'तत् किं ना०' ।

मन्त्री हस्तेन वन्दित्वा विरक्तो गतः स्वोत्तारकम् । एवं दिनाः पद्यार्धपाठश्च[1] । मन्त्र्यवज्ञा चारोहत् प्रकर्षे । अष्टम्यां रात्रौ मन्त्री मुत्कलापनिकां कर्तुं देवरङ्गमण्डपे निविष्टः । पुरो धनबदरकाणां राशयः । कोऽपि कविराह—

५ श्रीवस्तुपाल ! तव भालतले जिनाज्ञा
वाणी मुखे हृदि कृपा करपल्लवे श्रीः ।
देहे द्युतिर्विलसतीति रुषेव कीर्तिः
पैतामहं सपदि धाम जगाम नाम ॥१॥[2]

अपरस्तु—

१० अनिस्सरन्तीमपि गेहगर्भात्, कीर्तिं परेषामसतीं वदन्ति ।
स्वैरं भ्रमन्तीमपि वस्तुपाल !, त्वत्कीर्तिमाहुः कवयः सतीं तु ।२।[3]

इतरस्तु—

सेयं समुद्रवसना तव दानकीर्तिः
पूरोत्तरीयपिहितावयवा समन्तात् ।
१५ अद्यापि कर्णविकलेति न लक्ष्यते यत्
तन्नाद्भुतं सचिवपुङ्गव ! वस्तुपाल ! ॥ ३ ॥[4]

[5]कश्चित् तु—

क्रमेण मन्दीकृतकर्णशक्तिः, प्रकाशयन्ती च बलिस्वभावम् ।
कैर्नानुभूता सशिरःप्रकम्पं,जरेव दत्तिस्तव वस्तुपाल ! ॥४॥[6]

२० तेभ्यः कविभ्यः सहस्रलक्षाणि ददिरे । एवं गायनभट्टादिभ्योऽपि । यावज्जातं प्रातरेव तदा मल्लवादिभिः स्वसेवकाश्चैत्यद्वारद्वयेऽपि नियुक्ताः । एकं द्वारं अन्यदिशि एक च मठदिशि । उक्तं च तेभ्यः-मन्त्री चैत्यान्निःसरन् ज्ञापनीयः । क्षणेन वस्तुपालो मठद्वारान्निर्गच्छति यावत् तावता सेवकज्ञापिताः सूरयः समागत्य सम्मुखाः

१ ग–'पाठश्चक्रे नवनवभङ्ग्या व्याख्यातः । अष्ट०' । २ वसन्त० । ३ उपजातिः । ४ वसन्त० । ५ ग–'पुनः कश्चिदूचुः' । ६ उपजातिः । ७ ग–'चास्ति तेभ्यः' ।

स्थिताः । मन्त्रिणा रीढया भूप्रणाम इव कृतः । आचार्यैरभिहितम्—

दूरे कर्णरसायनं निकटतस्तृष्णाऽपि नो शाम्यति ।

विजीयताम् । तीर्थानि पूज्यन्ताम् । मन्त्री कौतुकात् तथैव तस्थौ, किं-
पर्यवसानेयं प्रस्तावनेति ध्यानात् । ऊचे च—न विद्मः परमार्थं
किमेतदभिधद्ध्वे । आचार्यैरुक्तम्—पुरो गम्यतां गम्यताम् । भवता ५
कार्याणि भूयांसि । मन्त्री सविशेषं पृच्छति । सूरयो वदन्ति—
सचिवेन्द्र ! श्रूयताम्—

'मरु'ग्रामे क्वचित् ग्रामाराः स्थूलबहुला लोमशाः पशवो
वसन्ति । पर्षदि निषीदन्ति । कपोलझल्लरीं वादयन्ति । तत्रैकदा
'वेला'कूलीयचरः पान्थ आगमत् । नवीन इति कृत्वा ग्राम्यैराहूतः । १०
पृष्टः—त्वं कः ? क्वत्यः ? । तेनोक्तम्—अहं समुद्रतटेऽवा-
त्सम् । पान्थः पुरो यामि । तैः पृष्टम्—समुद्रः केन खानितः ? ।
तेनोचे—स्वयम्भूः । पुनस्तैः पृष्टम्—कियान् सः ? । पान्थेनोक्तम्—
अलब्धपारः । किं तत्रास्ति इति पृष्टे पुनस्तेनाचख्ये—

ग्रावाणो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी १५
मुक्तौघाः सिकताः प्रवाललतिकाः सेवालमम्भः सुधा ।
तीरे कल्पमहीरुहाः किमपरं नाम्नाऽपि रत्नाकरः[4]

इति पादत्रयं पठित्वा व्याख्याय पुरो गतः पान्थः । तेषु ग्राम्ये-
ष्वेकः सकौतुकः पृच्छं पृच्छं समुद्रतटमगात् । दृष्टः कल्लोलमाला-
चुम्बितगगनाग्रः समुद्रः । तुष्टः सः । अचिन्तयच्च—इतो ऋद्धयः २०
सर्वा लप्स्यन्ते । प्रथमं तृषितः सलिलं पिबामि । इति गत्वा पीतं
तत् । दग्धः कोष्ठः । ततः पठति इति—

दूरे कर्णरसायनं निकटतस्तृष्णाऽपि नो शाम्यति ।

---

१ ग–'प्रभुप्रणाम' । २ ग–'झल्लभीं (?)' । ३ क-'तत्रास्ते' । ४ शार्दूल० ।
५ ग–'तेन' ।

वरि वियरा(रया ?) जहिं जणु पियइ घुट्टु घुट्टु चुल्लुएहिं ।
सायरि अत्थि बहुतुं जलु छइ खारुं किं तेण ? ॥१॥

तैरेव पदैर्नष्टः स्वास्पदं गतः । तथा वयमपि स्मः । मन्त्रिणोक्तम्—कथं तथा यूयं यथा स ग्राम्यः ? । सूरयस्तारमूचुः—महामात्य ! वयमत्र श्रीपार्श्वनाथसेवकाः त्रैविद्यविदः सर्वर्धयः अत्रस्थाः शृणुमः, यथा—'धवलकके' श्रीवस्तुपालो मन्त्री सरस्वतीकण्ठाभरणो भारतीप्रतिपन्नपुत्रो विद्वज्जनमधुकरसहकारः सारासारविचारवेधास्ते । इति तदुत्कण्ठितास्तत्रागन्तुम् । ईश्वरत्वाच्च न गच्छामः क्वापि । पुनश्चिन्तितं च कदाचिदत्र तीर्थिनत्यै एताऽत्र मन्त्री । तस्य पुरो वक्ष्यामः स्वैरं सूक्तानि । इति ध्यायतामस्माकं मन्त्रिमिश्रा अत्रागताः । यावत् पठ्यते किमपि तावदसत्सम्भावनयाऽवज्ञापरा यूयं स्थिताः । ततः किं पठ्यते ? । गच्छत गच्छत; उत्सूरं भवति । मन्त्री प्राह— मम मन्तुः क्षम्यतां, किमेतत् पठितुमारेभे भवद्भिः? । आचार्या जगदुः—देव ! यदा युवां बान्धवौ श्रावकश्रेण्यग्रे राजराजेश्वरौ दिव्यभूषणौ श्रावकाश्च धनाढ्या दृष्टाः गीताद्युच्छ्रयश्च तदा एतन्नश्चित्ते बभूव—जगति स्त्रीजातिरेव धन्या यद्गर्भे जिनचक्रयर्धचक्रिनल-कर्ण-युधिष्ठिर-विक्रम-सातवाहनादयो जाताः । सम्प्रत्यपि ईदृशाः सन्ति । तस्मात् श्रीसाम्ब-श्रीशान्ति-ब्रह्मनाग-आमदत्त-नागडवंश्यश्रीआभूनन्दिनी कुमारा देवी श्लाघ्या यया एतौ कलियुगमहान्धकारमज्जज्जिनधर्मप्रकाशनप्रदीपौ ईदृशौ नन्दनौ जातौ । इत्येवं चिन्तयतामस्माकं पद्यपादद्वयं वदनादुद्गतम् । जिननमस्कारादि विस्मृतम् । पश्चार्द्धं तु शृणुत ।

यत्कुक्षिप्रभवा एते, वस्तुपाल ! भवादृशाः ॥ १ ॥[6]

---

१ छाया—वर लघुजलप्रवाह.(?) यत्र जनः पिबति घुट्टु घुट्टु (सहर्षं) चुलुकैः ।
सागरेऽस्ति बहु जलमस्ति क्षारं किं तेन ? ॥

२ ग-पुस्तके 'अत्रस्थाः' इत्यधिकः पाठः। ३ घ-'अप्यागताः' । ४ ग-'ममापराधः' । ५ क-'प्रकाशप्रदीपौ' । ६ अनुष्टुप् ।

सविस्तरतरं व्याख्यानं कृतम् । लज्जितः सचिवेन्द्रः । पादौ लगित्वा सूरीन् क्षमयित्वा [1]चलितः । क्रोशान्ते ग्राम एक आगात् । तत्र स्नातभुक्तविलिप्तः । तदनु स्वभृत्यं सचिवमेकमाकार्य आदिक्षत् । इयं वाहिनी हेमसहस्रदशवदरकयुक् सूरिभ्यो मठे देया । गतो मन्त्रिसेवकस्तत्र । भाषिताः सूरयः । मन्त्रिदत्तमिदमवधार्यताम् । 5
आचार्यैर्दृष्टम् । अश्वमारुह्य भटशतोल्लालितकृपाणजलप्लावितरवास्तत्र गताः यत्र श्रीवस्तुपालः । उदितश्च तैः—मन्त्रिन् ! किमहमुचितभाषी ? किं चारणः ? किं वा बन्दी ? किं नु सर्वसिद्धान्तपारगः सम्यग् जैनसूरिः ? । मया मनःप्रमोदेन यद् [2]व उपश्लोकनमुक्तं तन्मूल्यभूतामिमां वो दत्तिं कथं गृह्णामि ? । न मयेदं वित्ताया- 10
भिहितम् । किन्त्विदं अन्तर्मनसं ध्यात्वा भणितं यथाऽद्यापि जयति जिनपतिमतम् । मन्त्री प्राह—भवन्तो निःस्पृहत्वान्न गृह्णन्ति । वय तु दत्तत्वान्न प्रतिगृह्णीमः । तर्हि कथमनेन हेम्ना भवितव्यमिति शिक्षा दत्त । ततः सूरिभिर्जगदे जगदेकदानी मन्त्री—स्वगृहाय सम्प्रति गंस्यते भवद्भिस्तीर्थाय कस्मैचिद् वा ? । मन्त्री आह—प्रभो ! 15
'भृगुपुरं' श्रीसुव्रततीर्थवन्दनार्थं गच्छन्तः स्मः । आचार्याः प्राहुः—तर्हि लब्ध इदहेमव्ययोपायः । तत्र लेप्यमयी प्रतिमाऽऽस्ते । तत्र स्नात्रसुखासिका न [5]पूर्यते श्रावकाणाम् । तस्मादनेन हेममयीं स्नात्रप्रतिमां निर्मापयत । मन्त्रिणो ध्वनित मनः । तत् तथैव च कृतम् । ततः समायातः स्वसदनं [6]'गूर्जर'मन्त्री । 20

अन्येद्युरादर्शे प्रातर्वदनं पश्यता सचिवेन पलितमेकमालोकि अपाठि च ।

अधीता न कला काचित्, न च किञ्चित् कृतं तपः ।

---

१ 'चलितः' इत्यधिको ग-पाठः । २ युष्माकम् । ३ 'तीर्थकृद्वारकसदृशं एवंविधः पुरुषरत्नैः धन' इत्यधिको ग- पाठः । ४ ग- 'दानवीर ! मन्त्रिन् !' । ५ घ-'निपूर्यते' । ६ ख-घ-'गूर्जरेन्द्रमन्त्री' ।

दत्तं न किञ्चित् पात्रेभ्यो, गतं च मधुरं वयः ॥१॥[1]

आयुर्यौवनवित्तेषु, स्मृतिशेषेषु या मतिः ।
सैव चेज्जायते पूर्वं, न दूरे परमं पदम् ॥२॥[2]

आरोहन्ती शिरःस्वान्ता–दौन्नत्य तनुते जरा ।
५ शिरसः स्वान्तमायान्ती, दिशते नीचता पुनः ॥३॥[3]

लोकः पृच्छति मे वार्ता, शरीरे कुशलं तव ।
कुतः कुशलमस्माक–मायुर्याति दिने दिने ॥४॥[4]

ततोऽधिकं जिनधर्मे रेमे ।

अथैकदा द्वावपि भ्रातरौ राणश्रीवीरधवलं व्यजिज्ञपताम्—
१० देव ! देवपादैरियं 'गूर्जर'धरा साधिता, राष्ट्रान्तराणि करदानि कृतानि; यद्यादेशः स्यात् तदा राज्याभिषेकोत्सवः क्रियते । राणकेनोक्तम्—मन्त्रिणौ ! ऋजू भक्तिजडौ युवाम् ।

अजित्वा सार्णवामुर्वी–मनिष्ट्वा विविधैर्मखैः ।
अदत्त्वा चार्थमर्थिभ्यो, भवेयं पार्थिवः कथम्? ॥१॥[5]

१५ ततो राणकमात्रत्वमेवास्तु । इत्युक्त्वा व्यसृजत् तौ ।

एकदा मन्त्रिभ्यां श्रीसोमेश्वरादिकविभ्यो विपुला वृत्तिः कृता भूम्यादिदानैः । ततः पठितं सोमेश्वरेण—

सूत्रे वृत्तिः कृता पूर्वं, दुर्गसिंहेन धीमता ।
विसूत्रे तु कृताऽस्माकं, वस्तुपालेन मन्त्रिणा ॥१॥[6]

२० श्रीवीरधवलोऽपि सेवकान् सुष्ठु पदवीमारोपयन् जगत्प्रियोऽभूत् । किमुच्यते तस्य? । पश्यत पश्यत श्रीवीरधवलो ग्रीष्मे चन्द्रशालायां सुप्तोऽस्ति । वण्ठश्चरणौ चम्पयत्येकः । राणकः पटीपिहितवदनो जाग्रदपि वण्ठेन सुप्तो मेने । ततश्च रणाङ्गुलिस्था रत्नाङ्का मुद्रा जगृहे । मुखे च चिक्षिपे । [7]राणेन किमपि
२५ नोक्तम् । उत्थितो राणः । भाण्डागारिकपार्श्वाद् गृहीत्वाऽन्या मुद्रा

---

१–६ अनुष्टुप् । ७ ग-'राणकेन' ।

तादृगेव पादाङ्गुलौ स्थापिता । द्वितीयदिने पुनः राणस्तत्रैव चन्द्रशालायां प्रसुप्तः । वण्ठश्चरणौ चम्पयति । राणकस्तथैव पटीस्थगितवदनोऽस्ति । वण्ठः पुनः पुनः मुद्रामालोकते । अहो प्राक्तनी चेयम् । ततो राणेन्द्रः प्राह—भो वण्ठ ! इमां तु मुद्रां मा ग्रहीः; या कल्ये गृहीता सा गृहीता । एतद्वचनाकर्णन एव वण्ठो भीत्या वज्राहत इवास्थात् । यतः—

हसन्नपि नृपो हन्ति, मानयन्नपि दुर्जनः ।
स्पृशन्नपि गजो हन्ति, जिघ्रन्नपि भुजङ्गमः ॥ १ ॥[1]

तां तस्य दीनतां दृष्ट्वा [2]राणेन भणितम्—वत्स ! मा भैषीः । अस्माकमेवायं कार्पण्यजो दोषो येन तेऽल्पा वृत्तिः । इच्छा न पूर्यते । ततो बह्वपाये चौर्ये बुद्धिः । अतः पर हय आरोहाय दीयमानोऽस्ति, लक्षार्धं वृत्तौ । इत्याश्वासितः सः ।

अतो वीरधवलः क्षमापरत्वाज्जगद्वल्लभः सेवकसदाफलत्वेन पप्रथे । स सहजदयार्द्र इति कारणान्मन्त्रिभ्यां रहः कथान्तरे 'शान्ति'-पर्वणि द्वैपायनोक्तभीष्मयुधिष्ठिरोपदेशद्वारायात द्वैपायनोक्तद्वात्रिंशदधिकारमयेतिहासशास्त्रीयाष्टाविंशाधिकारस्थं शिवपुराणमध्यगतं च मांसपरिहार व्याख्याय व्याख्याय प्रायो मांस-मद्य-मृगयाविमुखकृतः । पुन'र्मलधारि'श्रीदेवप्रभसूरिसविधे व्याख्यां श्रावं श्रावं सविशेषं तेन तत्त्वपरिमलितमतिर्विरचितः ।

अन्येद्युर्वस्तुपालो ब्राह्मे मुहूर्ते विमृशति—यद्यर्हद्यात्रा विस्तरेण क्रियते तदा श्रीः फलवती भवेत् ।

[4]वञ्चयित्वा जनानेतान्, सुकृतं गृह्यते श्रिया ।
तत्त्वतो गृह्यते येन, स तु धूर्तधुरन्धरः ॥ १ ॥[5]

---

१ ग– पुस्तके ' स एव ' इत्याधिक्यम् । २ अनुष्टुप् । ३ ग– ' राणकेन ' ।
४ ग–पुस्तके तु पद्यमिदम् –
'श्रीणां स्त्रीणां च ये वश्या–स्तेऽवश्यं पुरुषाधमाः ।
स्त्रियः श्रियश्च यद्वश्या–स्तेऽवश्यं पुरुषोत्तमाः ॥१॥' ५ अनुष्टुप् ।

नृपव्यापारपापेभ्यः, सुकृतं स्वीकृतं न यैः ।
तान् धूलिधावकेभ्योऽपि, मन्ये मूढतरान् नरान् ॥ २ ॥[1]

इत्यादि विमृश्य **तेजःपालेन** नित्यभक्तेन साम्मत्यं कृत्वा 'मलधारि' श्री**नरचन्द्र**सूरिपादानपृच्छत्—भगवन् ! या मे चिन्ताऽधुना सा निष्प्रत्यूहं सेत्स्यति ? । प्रभुभिः शास्त्रज्ञकिरीटैरुक्तम्—जिनयात्रा-चिन्ता वर्तते, सा सेत्स्यति । **वस्तुपालेन** गदितम्—तर्हि देवालये [2]वासनिक्षेपः क्रियताम् । श्री**नरचन्द्र**सूरयः प्राहुः—मन्त्रीश ! वयं ते मातृपक्षे गुरवः, न पितृपक्षे । पितृपक्षे तु 'नागेन्द्र'गच्छीयाः श्री**अमरचन्द्र**सूरिश्री**माहेन्द्र**सूरिपदे श्री**विजयसेन**सूरय **उदय-प्रभ**सूरिसञ्ज्ञकशिष्ययुजो विशालगच्छाः 'पीलूआई'देशे वर्तन्ते ते वासनिक्षेपं कुर्वन्तु, परं न वयम् । यदुक्तम्—

[3]जा जस्स ठिई जा जस्स संतई पुव्वपुरिसकयमेरा ।
कंठट्ठिए वि जीए सा तेण न लंघियव्व त्ति ॥१॥[4]

अथ मन्त्र्याह—अस्माभिर्भवदन्तिके त्रैविद्यषडावश्यक-**कर्मप्रकृत्या**-द्यधीतम् । यूयमेव गुरवः । प्रभुभिरुक्तम्—नैवं वाच्यम्, लोभपि-शाचप्रवेशप्रसङ्गात् । ततो मन्त्रिभ्यां 'मरु'देशाद् गुरवः शीघ्रमा-नायिताः । मुहूर्तप्रतिष्ठादेवालयप्रस्थापनं वासनिक्षेपणं कुलगुरुभिः कृतम् । साधर्मिकवात्सल्यं शान्तिकं मारिवारणं स्वामिपूजनं लोक-रञ्जनं चैत्यपरिपाटीपर्यटनं च विहितम् । अथ प्रतिलाभना । तत्र मिलिताः कवीश्वराः नरेश्वराः सङ्घेश्वराः । दत्तानि [5]कौशेय-कटक-कुण्डल-हारादीनि लोकेभ्यः । यतिपतिभ्यस्तु तदुचितानि वस्त्र-कम्बल-भोज्यादीनि । तदा श्री**नरचन्द्र**सूरिभिः सङ्घानुज्ञातैर्व्याख्या कृता ।

---

१ अनुष्टुप् । २ ग—'वासक्षेपः' ।

३ छाया—या यस्य स्थितिर्या यस्य सन्ततिः पूर्वपुरुषकृता मर्यादा ।
कण्ठस्थितेऽपि जीवे सा तेन न लङ्घितव्येति ॥ ४ आर्या ।

५ ग—'कौशवकटक०' ।

चौलुक्यः परमार्हतो नृपशतस्वामी जिनेन्द्राज्ञया
निर्ग्रन्थाय जनाय दानमनघं न प्राप जानन्नपि ।
स प्राप्तस्त्रिदिवं स्वचारुचरितैः सत्पात्रदानेच्छया
त्वद्रूपोऽवततार 'गूर्जर'भुवि श्रीवस्तुपालो ध्रुवम् ॥१[1]

ध्वनितः सङ्घः । अथ चलितः सुशकुनैः ससङ्घो मन्त्री । मार्गे सप्तक्षेत्राण्युद्धरन् श्री'वर्धमान'पुरासन्नमावासितः । 'वर्धमान'पुरमध्ये तदा बहुजनमान्यः श्रीमान् रत्ननामा श्रावको वसति । तद्गृहे[2] दक्षिणावर्तः शङ्खः पूज्यते । स रात्रौ करण्डान्निर्गत्य स्निग्ध-गम्भीरं घुमघुमायते[3] नृत्यति च । तत्प्रभावात् तस्य गृहे चतुरङ्गा लक्ष्मीः । शङ्खेन रात्रौ रत्न आलेपे—तव गृहेऽहं चिरमस्थाम् । इदानीं तव पुण्यमल्पम् । मां श्रीवस्तुपालपुरुषोत्तमकरपङ्कजप्रण-यिनं कुरु । सत्पात्रे मद्दानात् त्वमपीह परत्र च सुखी भवेः[4] । व्यक्तं तज्ज्ञात्वा रत्नो विपुलसामग्र्याऽभिमुखो गत्वा मन्त्रीशं ससङ्घं निमन्त्र्य स्वगृहे बहुपरिकरं भोजयित्वा परिधाप्योचे— एवमेवं शङ्खादेशो मे । गृहाणेमम् । मन्त्र्याह—न वयं परधनार्थिनः । पिशुनाच्छङ्खसत्तां ज्ञात्वा तं ग्रहीष्यति स्वयं मन्त्री, तस्मात् स्वय-मेव ददामीत्यपि मा शङ्किष्ठाः, निर्लोभत्वादस्माकमस्मत्प्रभूणां च । इत्युक्त्वा विरते मन्त्रिणि रत्नेन गदितम्—देव ! मद्गृहावस्था-नमस्मै न रोचते । ततः किं क्रियते ?, गृहाणैव । ततो गृहीतो मन्त्रिणा शङ्खः । तत्प्रभावोऽनन्तः । शनैः शनैः सङ्घः श्री'श-त्रुञ्जय'तलहट्टिकामाट[5][6] । तत्र ललितासरःप्रासादादिकीर्तनानि पश्यन् प्रमुदितः ससङ्घः सचिवः । आरूढः 'शत्रुञ्जया'द्रिं विवेकं च भावं च । तत्र मन्त्री प्रथमं ऋषभं वन्दते । तदा काव्यपाठः—

---

१ शार्दूल० । २ ग–' गेहं ' । ३ ख–' घुमुघुमा० ', घ–' घुलघुमा० ' । ४ ग–'भव तस्याभिप्रायं व्यक्तं' । ५ 'तळेटी' इति भाषायाम् । ६ ग–'हट्टिकां प्राप्तः' ।

आस्यं कस्य न वीक्षितं ? क न कृता सेवा ? न के वा स्तुताः ?
तृष्णापूरपराहतेन विहिता केषां च नाभ्यर्थना ? ।
तत् त्रात 'विमला'द्रिनन्दनवना कल्यैककल्पद्रुम[1] !
त्वामासाद्य कदा कदर्थनमिदं भूयोऽपि नाहं सहे ॥ १ ॥[2]

५ अथावारितसत्रमेरुध्वजारोपणेन्द्रपदार्थिरञ्जनादीनि कर्तव्यानि विहितानि । देवेभ्यो हैमानि[3] आरात्रिक-तिलकादीनि दत्तानि । कुङ्कुम-कर्पूरा-ऽगुरु-मृगमद-चन्दन-कुसम-परिमलमिलदलिकुलझङ्कारभारपूरितमिव गगनमभवत् । गीतरासध्वानिभिर्दिक्कुहराणि अभ्रियन्त । पूर्वं मन्त्रिश्रीउदयनदत्ता देवदायाः सर्वेऽपि सविशेषाः

१० कृताः । देवद्रव्यनाशनिषेधार्थं चत्वारि श्रावककुलानि अद्रौ मुक्तानि । **अनुपमा** दानाधिकारिणी[5] । तस्याः साधुभ्यो दानानि ददत्याः किल महति वृन्दे पतता घृतकडहट्टकेन क्षौमाण्यभ्युक्तानि । तदा याष्टिकेन कडहट्टभृते साधवे यष्टिप्रहारलेशो दत्तः । मन्त्रिण्या देशनिर्वासनं समादिष्टम् । भणितं च—रे न वेत्सि यद्यहं तैलिकपत्नी

१५ कान्दविकपत्नी[6] वाऽभविष्यं तदा प्रतिपद तैलघृताभिष्वङ्गान्मलिनान्येव वासांस्यभविष्यन् । एवं तु वस्त्राभ्यङ्गो भाग्यलभ्यः दर्शनप्रसादादेव स्यात् । य इदं न मन्यते तेन नः कार्यमेव न । इत्युक्तं च । अहो दर्शनभक्तिरिति ध्वनितं सर्वम् ।

एकदा मन्त्रीश्वरो **नाभेयपुर** आरात्रिके स्थितोऽस्ति दिव्यधवल-

२० वासाश्चान्दनतिलको दिव्यपदकहारभूषितोरस्थलः । सूरीणां कवीनां श्रावकश्राविकाणां च नतिः[7] । तिलकं तिलकोपरि । पुष्पस्रक् पुष्पस्रगुपरि । तदा सूत्रधारेणैकेन दारवी[8] **कुमारदे**व्या मातुर्मूर्त्तिर्महन्त(?)कायनवीनघटिता दृष्टौ कृता । उक्तं च तेन—मातुर्मूर्त्तिरियम् । तदा मन्त्रीश्वरेणाशिखानखं दृष्टा मूर्तिः । दृष्ट्वा च

---

१ ग–'द्रुम–', घ–'द्रुमः' । २ शार्दूल० । ३ ग–'आभरणानि तिलका०' । ४ ग–घ–'मलदलि०' । ५ 'कृताऽस्ति' इत्यधिको ग–पाठः । ६ घ–'कान्दविका वा' । ७ घ–'नतः' । ८ काष्ठमयी ।

रुदितं प्रथममश्रुमात्रं, ततोऽव्यक्त इतरो ध्वनिः, ततो व्यक्ततरः । सर्वे तटस्थाः पृच्छन्ति–देव ! किं कारण रुद्यते ? । हर्षस्थाने को विषादः ? । श्रुतशील इव नलस्य, उद्धव इव विष्णोः, अभय इव श्रेणिकस्य, कल्पक[1] इव नन्दस्य, जाम्बक इव वनराजस्य, विद्याधर इव जयन्तराजस्य, आलिग इव सिद्धराजस्य, उदयन इव कुमारपालस्य त्वं मन्त्री वीरधवलस्य । विपद्भीताः पर्वता इव सागरं त्वामाश्रयन्ति भूपाः । तार्क्ष्येणेव पन्नगास्त्वया हताः सपत्नाः पृथिवीपालाः । चन्द्राय इव चकोरास्तुभ्यं स्पृहयन्ति स्वजनाः । हिमवत इव गङ्गा त्वत्प्रभवति राजनीतिः । भानोरिव पद्मास्तवोदयमीहन्ते सूरयः । विष्णाविव त्वयि रमते श्रीः । तन्नास्ति यन्नास्ति ते । एवं सति किमर्थं दुःखं ध्रियते ?[2] । ततो मन्त्रिणोक्तम्–इदं दुःखं यन्मे भाग्यं सङ्घाधिपत्यादिविभूतिर्मातृमरणादनन्तरं सम्पन्ना, यदि तु सा मे माता इदानीं स्यात् तदा स्वहस्तेन मङ्गलानि कुर्वत्यास्तस्या मम च मङ्गलानि कारयतः पश्यतश्च लोकस्य कियत् सुखं भवेत् ! । परं किं कुर्मः ? । धात्रा हताः स्मः, एकैकन्यूनीकरणेन । ततः श्रीनरचन्द्रसूरिभिः 'मलधारि'भिरभिहितम्–मन्त्रीश्वर ! यथा त्वं सचिवेषु तथाऽत्र देशे प्रधानराजसु सिद्धराजो[3]ऽव्यजीयत । स मालवेन्द्रं जित्वा 'पत्तन'मागतो मङ्गलेषु क्रियमाणेष्वपाठीद्, यथा–

> माऽस्म सीमन्तिनी कापि, जनयेत् सुतमीदृशम् ।
> बृहद्भाग्यफलं यस्य, मृतमातुरनन्तरम् ॥१॥[4]

तस्मात् हृदयं अधःकृत्वा स्थीयते विवेकिभिः । न सर्वेऽपि नृणां मनोरथाः प्रपूर्यन्ते । इत्याद्युक्त्वा मन्त्री बलादारात्रिकमङ्गलदीपादिः कारितः । ततो चैत्यवन्दना गुरुवन्दनं च । तदा श्रीनरचन्द्रसूरिभिराशीर्दत्ता–

---

1 घ–'कल्पक' । 2 'एव० ध्रियते' इति ग–पाठः । 3 घ–'व्यजयत' । 4 अनुष्टुप् ।

तवोपकुर्वतो धर्मं, तस्य त्वामुप[1]कुर्वतः ।
**वस्तुपाल**! द्वयोरस्तु, युक्त एव समागमः ॥१॥[2]

इत्यादि । अथ रात्रौ तन्मयतया **नाभेय**पूजाध्यानदानपूजाः । तदा कवयः पठन्ति । एकः कश्चित्—

५ ये पापप्रवणाः स्वभावकृपणाः स्वामिप्रसादोल्बणा-
स्तेऽपि द्रव्यकणाय मर्त्यभषणा जिह्वे भवत्या स्तुताः ।
तस्मात् त्वं तदघापघातविधये बद्धादरा सम्प्रति
श्रेयःस्थानविधानधिक्कृतकलिं श्री**वस्तुपालं** स्तुहि ॥१॥[3]

अपरस्तु—

१० [4]सूरो रणेषु [5]चरणप्रणतेषु सोमो
[6]वक्रोऽतिवक्रचरितेषु बुधोऽर्थबोधे ।
नीतौ गुरुः कविजने [7]कविरक्रियासु ।
[8]मन्दोऽपि च ग्रहमयो न हि **वस्तुपालः** ॥२॥[9]

अन्यस्तु—

१५ श्री**भोज**वदनाम्बोज–वियोगविधुरं मनः ।
श्री**वस्तुपाल**वक्त्रेन्दौ, विनोदयति भारती ॥३॥[10]

इतरस्तु—

श्रीवासाम्बुजमाननं परिणतं पञ्चाङ्गुलिच्छद्मतो
जग्मुर्दक्षिणपञ्चशाखमयतां [11]पञ्चापि देवद्रुमाः ।
२० वाञ्छापूरणकारणं प्रणयिनां जिह्वैव चिन्तामणि-
र्जाता यस्य किमस्य शस्यमपरं श्री**वस्तुपाल**स्य तत् ॥४॥

सर्वत्र लक्षदानम् । अष्टाह्निकायां गतायां **ऋषभदेवं** गद्गदोक्त्या मन्त्री आपृच्छत—

त्वत्प्रसादकृते नीडे, वसन् शृण्वन् गुणांस्तव ।

---

१ ग–'कुर्वते' । २ अनुष्टुप् । ३ शार्दूल० । ४ सूर्यः । ५ ख–'चरणे प्रणतेषु' । ६ मङ्गलः । ७ शुक्रः । ८ शनिः । ९ वसन्त० । १० अनुष्टुप् । ११ मन्दार पारिजातक-सन्तान-कल्प-हरिचन्दनेति ।

सङ्घदर्शनतुष्टात्मा, भूयांसं विहगोऽप्यहम् ॥५॥
यद् दाये द्यूतकारस्य, यत् प्रियायां वियोगिनः ।
यद् राधावेधिनो लक्ष्ये, तद् ध्यान मेऽस्तु ते मते ॥६॥

इत्याद्यकथयत् । एवं सङ्घोऽपि चलितः । ससङ्घः सचिवः गरुदेवा-
शिखरादग्रे यावत् कियदपि याति तावत् श्रमवशविगलितच्छिन्न- ५
गात्रवसनान् कत्यपि मालिकान् पुष्पकरण्डकभारितशिरसो-
ऽपश्यत् । पृष्टास्ते–कथमुत्सुका इव यूयम् ? । तैर्विज्ञप्तम्– देव ! वय
दूरात् पुष्पाण्याहार्ष्म । सङ्घः किल 'शत्रुञ्जय'शिखरेऽस्ति । प्रकृष्ट
मूल्यं लप्स्यामहे । तत् पुनरन्यथा वृत्तम् । सङ्घश्चलितः । तस्माद-
भाग्या वयमिति । तेषां दैन्य दृष्ट्वा मन्त्रिणाऽभाणि–अत्रैव स्थीय- १०
तामूर्ध्वैः क्षणम् । तावता पाश्चात्यं सर्वमायातम् । श्रीवस्तुपालेन
स्वकुटुम्बं सङ्घश्चाभाण्यताम्,यथा–भो धन्याः ! सर्वेषां पूर्णस्तीर्थ-
वन्दनपूजाभिलाषः ? । लोकेनोक्तम्–भवत्प्रसादात् पूर्णः । मन्त्र्याह–
किमपि तीर्थमपूजित स्थितमस्ति ? । लोकः प्राह– प्रत्येक सर्वाणि
तीर्थानि पूजितानि ध्यातानि । मन्त्रिमहेन्द्रः प्राह–यद् विस्मृतं तन्न १५
जानीथ यूयम्; वयं स्मारयामः । सङ्घो वदति–किं विस्मृतम् ? ।
मन्त्री गदति–भो लोकाः ! पूर्वं तीर्थमयं पर्वतः यत्र स्वयमृषभदेवः
समवासार्षीत् । ततो नेमिवर्जिता द्वाविंशतिर्जिनाः समवासार्षुः ।
असङ्ख्याः सिद्धाश्च यत्र सोऽद्रिः कथं न तीर्थम् ? । लोकोऽ-
प्याह–सत्यं तीर्थमयं पर्वतः । तर्हि पूज्यताम् । पुष्पादीनि क्वेति २०
चेदकथयिष्यन् तदा इमे मालिका इमानि पुष्पाणि वः पुण्यैरुपा-
स्थिषतेति । ततः सङ्घेन तानि पुष्पाणि गृहीत्वाऽद्रिपूजा कृता ।
द्रम्मेण पुष्पं जातम् । नालिकेरास्फालनवस्त्रदानादिकेलयश्च । तुष्टा
मालिकाः । एवं पराशाभङ्गपराङ्मुख आसराजभूः । ततः शनैः
शनैः पशुतुरङ्गशिश्वाद्यपीडया सङ्घो 'रैवतक'मारुरोह च । नेमिनि २५

१–२ अनुष्टुप् । ३ ग–'जातम्' । ४ ग–'वदति' । ५ क–'श्रयेविंशति०' ।
६ 'द्रम्मे० जातम्' इत्यधिको ग–पाठः । ७ नालफप्रमुख० ।

दृष्टे मन्त्री ननर्त । पपाठ च आनन्दाश्रुनिर्झरिताक्षः—

कल्पद्रुमतरुरसौ तरवस्तथाऽन्ये
चिन्तामणिर्मणिरसौ मणयस्तथाऽन्ये ।
धिग् जातिमेव ददृशे बत यत्र नेमिः
५ श्री'रैवते' स दिवसो दिवसास्तथाऽन्ये ॥१॥[1]

अभङ्गवैराग्यतरङ्गरङ्गे, चित्ते त्वदीये 'यदु'वंशरत्न ! ।
कथं कृशाङ्ग्योऽपि हि मान्तु हन्त, यस्मादनङ्गोऽपि पदं न लेभे ॥२॥[3]

तत्राऽप्यष्टाह्निकादिविधिः प्रागिव । नाभेयभवन-कल्याणत्रय-गजेन्द्रपदकुण्डा-ऽन्तिकप्रासाद-अम्बिका-शाम्ब-प्रद्युम्नशिखरतोर-
१० णादिकीर्तनदर्शनैर्मन्त्री सङ्घस्य नयनयोः स्वादुफलमार्पिपताम् (?)। आरात्रिकेऽर्थिनां ससम्भ्रम मन्त्रिमध्ये झम्पापनं दृष्ट्वा श्रीसोमेश्वर-कविः [5]कवित्वं चकार—

इच्छासिद्धिसमुन्नते सुरगणे कल्पद्रुमैः स्थीयते
पाताले पवमानभोजनजने कष्टं प्रनष्टो बलिः ।
१५ नीरागानगमन् मुनीन् सुरभयश्चिन्तामणिः क्वाप्यगात्
तस्मादर्थिकदर्थनां विषहतां श्रीवस्तुपालः क्षितौ ? ॥१॥[6]

[7]लक्षः सपादोऽस्य दत्तौ मन्त्रिणः । दानमण्डपिकायां निषण्णो निरर्गलं ददत् एवं स्तुतः केनापि कविना—

पीयूषादपि पेशलाः शशधरज्योत्स्नाकलापादपि
२० स्वस्था नूतनचूतमञ्जरिभरादप्युल्लसत्सौरभाः ।
वाग्देवीमुखसामसूक्तविशदोद्गारादपि प्राञ्जलाः
केषां न प्रथयन्ति चेतासि मुदं श्रीवस्तुपालोक्तयः ? ॥१॥[8]

वस्तुपाल ! तव पर्वशर्वरी–गर्वितेन्दुकराजित्वरं यशः ।
क्षीरनीरनिधिवाससः क्षिते–रुत्तरीयतुलनां विगाहते ॥२॥

---

१ वसन्त० । २ घ–'पूर्णे' । ३ उपजातिः । ४ क- ख- 'ष्टाह्निकादि०' । ५ ग–'प्राह' । ६ शार्दूल० । ७ ख–घ–'लक्षास०' । ८ शार्दूल० । ९ रथोद्धता ।

एवं भावं सम्पूर्य देवोत्तमं श्रीनेमिमापृच्छ्य सर्वास्तीर्थचिन्ताः कृताः।[1] निर्माल्यपदं दत्त्वा पर्वतादुदतारीत्, न सतां हृदयात्, नापि महत्त्वात्। अथ खङ्गारदुर्गाद्रि-देवपत्तनादिषु देवान् ववन्दे। तेजःपालं 'खङ्गारदुर्गे' स्थापयित्वा स्वय ससङ्घो वस्तुपालः श्री'धवलक्कके' श्रीवीरधवलमगमत्। स्वागतप्रश्नः स्वामिना　५ कृतः। आरम्भसिद्धिप्रश्नश्च। ततो मन्त्र्याह—

कामं स्वामिप्रसादेन, प्रेष्याः कर्मसु कर्मठाः।
तद् वैभवं बृहद्भानोः, क्वचिदूष्मा जलेऽपि यत्॥१॥[3]

राणकेन ससङ्घः सचिवः स्वसदने भोजितः परिधापितः स्तुतश्च। तेजःपालस्तु 'खङ्गारदुर्ग'स्थो भूमिं विलोक्य　१० 'तेजलपुर'ममण्डयत्, सत्रा-ऽऽराम-पुर-प्रपा-जिनगृहादिरम्यम्। प्राकारश्च 'तेजलपुरं' परितः कारितः। पाषाणबद्धस्तुङ्गः।

अथ वस्तुपालः श्रीवीरधवलपार्श्वे सेवां विधत्ते। देशः सुस्थः। धर्मो वर्तते। एवं सत्येकदा 'ढिल्ली'नगरादेत्य चरपुरुषैः श्रीवस्तुपालो विज्ञप्तः— देव! 'ढिल्ली'तः श्रीमोजदीन-　१५ सुरत्राणस्य सैन्यं पश्चिमां दिशमुद्दिश्य चलितम्। चत्वारि प्रयाणानि व्यूढम्, तस्मात् सावधानैः स्थेयम्। मन्ये 'अर्बुद'-मध्ये भूत्वा 'गूर्जर'धरां प्रवेष्टा[5]। मन्त्रिणा सत्कृत्य ते चरा राणपार्श्वे नीताः। कथापितः स प्रबन्धः। ततो राणकेनाभाणि— वस्तुपाल! म्लेच्छैर्गर्दभिल्लो 'गर्दभी'विद्यासिद्धोऽप्यभिभूतः।　२० नित्यं सूर्यबिम्बनिर्यत्तुरङ्गमकृतराजपाटीकः शिलादित्योऽपि पीडितः। सप्तशतयोजनभूनाथो जयन्तचन्द्रोऽपि क्षयं नीतः। विंशतिवारबद्धसहावदीनसुरत्राणमोक्ता पृथ्वीराजोऽपि बद्धः। तस्माद् दुर्जया अमी। किं कर्ताऽसि? । वस्तुपाल उवाच— स्वामिन्! प्रेषय मां यदुचितं तत् करिष्यामि। ततः साराश्व-　२५

---

१ ग–'सर्वासां तीर्थचिन्ताकृतां'। २ अंशोः। ३ अनुष्टुप्। ४ ग–'पालोऽपि'। ५ क–ख–घ–'अर्बुददिशां गूर्जर०'।

लक्षेण सह चलितो मन्त्री । तृतीयप्रयाणे **महणलदेवीं**[1] कर्पूरादि-
महापूजापूर्वं सस्मार । सा तद्भाग्यात् प्रत्यक्षीभूयोवाच–वत्सक !
मा भैषीः । 'अर्बुद'दिशा यवनाः प्रवेक्ष्यन्ति । तव देशं यदाऽ-
मी प्रविशान्ति तदैतल्लङ्घिता घण्टिकाः स्वराजन्यै रोधयेथाः ।
५ तेऽथ यत्रावासान् गृह्णन्ति तत्र स्थिरचित्तः ससैन्यो युद्धाय
सरभसं ढौकेथाः । जयश्रीस्तव करपङ्कजे एव । इदं श्रुत्वा
**धारावर्षाय** 'ऽर्बुद' गिरिनायकाय स्वसेवकाय नरान् प्रैषयत्
अकथापयच्च— म्लेच्छसैन्य'मर्बुद'मध्ये भूत्वा आजिगमिषदास्ते;
[2]त्वमेतानागच्छतो मुक्त्वा पश्चाद् घण्टिका रुन्ध्याः । तेन
१० तथैव कृतम् । प्रविष्टा यवनाः । यावदावासान् ग्रहीष्यन्ति
तावत् पतितो **वस्तुपालः** कालः । हन्यन्ते यवनाः । उच्छलितो
बुम्बारवः । केचिद् [3]दन्तान्तरं(रे) अङ्गुलीं गृह्णन्ति । अपरे तोबां
कुर्वन्ति । तथापि [4]न च्छुटन्ति । एवं तान् हत्वा तच्छीर्षलक्षैः
शकटानि भृत्वा 'धवलक्क'मेत्य मन्त्री [5]स्वस्वामिनं प्रत्यदर्शयत् ।
१५ श्लाघितश्च तेनायम्–

> न ध्वानं तनुषे न यासि विकटं नोच्चैर्वहस्याननं
> दर्पान्नोल्लिखसि क्षितिं खरपुटैर्नावज्ञया वीक्ष्यसे ।
> किन्तु त्वं वसुधातलैकधवलस्कन्धाधिरूढे भरे
> [6]तीर्थान्युच्चतटीविटङ्कविषमाण्युल्लङ्घयन् लक्ष्यसे ॥१॥[7]

२० ततः परिधापितः । विसृष्टः स्वगृहाय । तत्र मङ्गलकरणाय लोका-
गमः । द्रम्मेण पुष्पं लभ्यते[8] । एवं पुष्पस्रक्क्र्यो लोकैः कृतः ।

इतश्च 'नागपुरे' साधुदेल्हासुतः सा० **पूनडः** **श्रीमोजदीन**-
सुरत्राणपत्नीबीबीप्रतिपन्नबान्धवः[9] अश्वपति-गजपति-नरपतिमान्यो
विजयते । तेन प्रथमं 'शत्रुञ्जये' यात्रा त्रिसप्तत्यधिकद्वादशशत-

---

१ घ–'महणकदेवीं'। २ ग–'त्वयैताना०' । ३ ख–घ–'दन्ताङ्गुलीं'। ४ घ–'न तु छुटन्ति'। ५ ख–घ–'स्वामिनमद०' । ६ घ–'तीर्थान्यद्रितटी०'। ७ शार्दूल० । ८ 'तदवसरेऽपि' इत्यधिको ग–पाठ. । ९ ग–'पत्नीबीबीप्रेमकमलाप्रति०' । ICS

[1]वर्षे **विक्रमात्** १२७३ वर्षे [2]'वब्बेर'पुरात् कृता। द्वितीया सुरत्राणादेशात् षडशीत्यधिके द्वादशशतसङ्ख्ये १२८६ वर्षे 'नागपुरा'त् कर्तुमारब्धा। तत्सङ्घेऽष्टादश शतानि शकटानि। बहवो [3]महाधराः। [4]कुमारः तेन सहितो 'माण्डल्य'पुरं यावदायातः ततः सङ्घसम्मुखमागत्य [5]**तेजःपालेन** 'धवलक्क'मानीतः। श्री- ५
**वस्तुपालः** सम्मुखमागात्। सङ्घस्य धूली पवनानुकूल्याद् यां यां दिशमनुधावति तत्र तत्र स गच्छति। तटस्थैर्नरैर्भणितम्— मन्त्रीश! इतो रजः। इतः पादोऽवधार्यताम्। ततः सचिवेन बभणे— इदं रजः स्प्रष्टुं पुण्यैर्लभ्यते। अनेन रजसा स्पृष्टेन पापरजांसि दूरे नश्यन्ति। यतः— १०

श्रीनाथपान्थरजसा विरजा भवन्ति
तीर्थेषु बम्भ्रमणतो न भवे भ्रमन्ति।
द्रव्यव्ययादिह नरा स्थिरसम्पदः स्युः
पूज्या भवन्ति जगदीशमथार्चयन्तः॥ १॥[6]

ततः सङ्घपतिपूनड-मन्त्रिणो[7]र्गाढालिङ्गन-प्रियालापौ संवृत्तौ। सर- १५
स्तीरे स्थितः सङ्घः। **पूनडः** कुलगुरुमलधारिश्रीनरचन्द्रसूरि-पादान् ववन्दे। रात्रौ श्री**वस्तुपालेन** कथापित **पूनडाय** पुण्यात्मने—प्रातः सर्वसङ्घे[8]नास्मद्रसवत्यतिथिना युष्मता च भवितव्यम्, धूमो न कार्यः। **पूनडेन** तथेति प्रतिपन्नम्। रात्रौ मण्डपो द्विद्वारो रसवतीप्रकारश्च। सर्वं निष्पन्नम्। प्रातरायान्ति नागपुरीयाः। सर्वेषां चरणक्षालन तिलकरचनां च श्री**वस्तुपालः** स्वहस्तेन करोति। एवं लग्ना द्विप्रहरी। मन्त्री तु तथैव निर्विण्णः। तदा तेजः-

---

१ ख– 'वर्षे वत्सरे पुराद् विहिता। द्वितीया'। २ ग–'व्रिम्बर०'। ३ घ–'महामधराः'। ४ ग–'तदनुसारेण शेषः परिवारः। माण्डलिग्रामासन्नो यावदायातः स सङ्घः तावत् सन्मुख०'। ५ घ–'महन्तकतेजःपालेन'। ६ वसन्त०। ७ ग–'गाढमालिङ्गन०'। ८ ग–'नास्मदावासे भोक्तव्यम्, धूमो'। ९ घ–'आदृष्टम्'।

**पालेन** विज्ञप्तम्–अन्यैरपि[1] देव ! वयं सङ्घपदक्षालनादि करिष्यामः, यूय भुग्ध्वम्, तापो भावी । [2]मन्त्री भणति– मैवं [3]वादीः । पुण्यै-रयमवसरो लभ्यते । गुरुभिरपि कथापितम्––

यस्मिन् कुले यः पुरुषः प्रधानः, स एव यत्नेन हि रक्षणीयः ।
५ तस्मिन् विनष्टे हि कुलं विनष्टं, न नाभिभङ्गे त्वरका वदन्ति ॥१॥[4]

तस्माद् भोक्तव्यं भवद्भिः । तापो मा भूत् । [5]मन्त्रिणा गुरून् प्रति पुनरिदं काव्यं प्रहितम्–

अद्य मे फलवती पितुराशा, मातुराशिषि शिखाङ्कुरिताऽद्य ।
यद् युगादिजिनयात्रिकलोकं, पूजयाम्यहमशेषमखिन्नः ॥२॥[6]

१० भोजयता मन्त्रिणा नागपुरीयाणामेकपङ्क्तित्वं दृष्ट्वा शिरो धूनि-तम् । अहो शुद्धा लोका एते ! । एवं भोजयित्वा परिधाप्य च रञ्जितो 'नागपुर'सङ्घः । गतौ **वस्तुपाल-पुनडौ** श्री'शत्रुञ्जयं' ससङ्घौ । वन्दितः **श्रीऋषभः** । एकदा स्नात्रे सति देवार्चको देवस्य नासां पिधत्ते पुष्पैः किल कलसेन नासां मा पीडीदित्या-

१५ शयतः । तदा मन्त्रिणा चिन्तितम्–कदाचिद् दैवाद् देवाधिदेवस्य कलसादिना परचक्रेण वाऽवक्तव्यमङ्गलं भवेत् तदा का गतिः सङ्घस्य इति चिन्तयित्वा **पूनड** आलेपे––भ्रातः ! सङ्कल्पोऽयमेवं मे संवृत्तः–– यदि बिम्बान्तरमश्ममम्माणीमयं क्रियते तदा सुन्दर-तरम्[8] । तत् तु सुरत्राण**मोजदीन**मित्रे त्वयि यतमाने स्यान्नान्यथा ।

२० **पूनडे**नोक्तम्–– [9]तत्र गतैश्चिन्तयिष्यतेऽदः । इत्यादि वदन्तौ 'रैवता'दितीर्थान् वन्दित्वा व्यावृत्तौ तौ । गतः **पूनडो** 'नागपुर'म् । मन्त्री धवलक्के[10] राज्यं शास्ति ।

एवं स्थितेऽन्येद्युः सुरत्राण**मोजदीन**माता वृद्धा हजयात्रार्थिनी

---

१ ग–'देव ! अन्यैरपि सङ्घभक्तिः कारयिष्यते' । २ घ–'मन्त्रिनरेन्द्रेण उक्तम्–मैवं वदत । पुण्यै०' । ३ ख–'वदत' । ४ उपजातिः । ५ ख–घ–'मन्त्रिणा पत्री गुरुभिः प्रैषि । तत्र काव्यम्' । ६ स्वागता । ७ क–'मस्य' । ८ ग–'सुन्दरम्' । ९ ग–'तत' । १० ग–'स्तम्भतीर्थे' ।

'स्तम्भपुर'मागता। नौवित्तगृहेऽतिथित्वेनाऽस्थात्। सा समागता सचिवेन चरेभ्यो ज्ञाता। चराः प्रोक्ताः श्रीमन्त्रिणा—रे यदा इयं जलपथेन याति तदा मे ज्ञाप्या। गच्छन्ती ज्ञापिता तैः। मन्त्रिणा निजकोलिकान् प्रेष्य तस्याः सर्वं कोटीम्त्रकरथं[1] वस्तु ग्राहितम्। सुष्ठु रक्षापित च क्वचित्। तदा नौवित्तैः पूत्कृतमुप- ५
मन्त्रि— देव! जरत्येकाऽस्मद्यूथ्या हजयात्रायै गच्छन्ती त्वत्पद्रे तस्करैर्लुण्टिता। मन्त्रिणा पृष्टम्— का सा जरती[2]। तैरुक्तम्— देव! किं पृच्छसि?। सा मोजदीनसुरत्राणमाता पूज्या। मन्त्रिणा भणितं मायया—अरे वस्तु विलोकयत विलोकयत। दिनद्वय विल-
म्ब्यानीयार्पितं सर्वम्। जरती तु स्वगृहे आनिन्ये। विविधा भक्तिः १०
क्रियते। पृष्टा च किं हजयात्रेच्छा वः?। तयोक्तम्— ओमिति। तर्हि दिनकतिपयान् प्रतीक्षध्वम्। प्रतीक्षाञ्चक्रे सा। तावताऽऽ-
रासणाऽऽश्मीयं तोरणं घटापितम्। आनायित च। मेलयित्वा विलोकितं च। पुनर्विघटितम्। रूतेन बद्धम्। सूत्रधाराः सह प्रगुणिताः। मन्त्रिणश्च मार्गश्चान्तरे त्रिविधोऽस्ति—एको जलमार्गः, १५
अपरः करभगम्यः, इतरस्तु अश्वलङ्घ्यः। यत्र ये राजानोऽयोध्या(?) यथोल्लङ्घ्यन्ते तथा सूत्रं कृतम्। राज्ञां उपदायै द्रव्याणि प्रगुणीकृतानि। एवं सामग्र्या सा प्रहिता तत्र। रचितं तोरणं 'मसीति'[3]-
द्वारे[4]। तत्र दीपतैलादिपूजाचिन्ता तद्राजपार्श्वाद् शाश्वती कारिता। दत्तं भूरि भूरि तत्र। उदभूद् भूरि यशः। व्यावृत्ता जरती। २०
आनीता 'स्तम्भपुर'म्। प्रवेशमहः कारितः। स्वय तदंह्रिक्षालनं चक्रे। एव भक्त्या दिनदशक स्थापिता स्वगृहे। तावता धवल-
किशोरशतपञ्चकं अन्यदपि दुकूलगन्धराजकर्पूरादि गृहीतम्। वृद्धा प्रोक्ता—मातश्चलसि?। यद्यादिशसि तत्र मानं च दापयसि[5] तदाऽ-
हमप्यागच्छामि। तया भणितम्— तत्राहमेव प्रभुः। स्वैरमेहि। पूजा २५

१ ख–'काटीबकस्थं'। २ 'स्वय सह भूत्वा' इत्यधिको ग–पाठः। ३ घ–'मशीति'०। ४ 'मसीद' इति भाषायाम्। ५ घ–'दाप्ससि'।

ते तत्र बहुतरी। श्रीवीरधवलानुमत्या चलितो मन्त्रिमहेन्द्रः। गतो 'ढिल्ली'तटं, राजमातृवचनात्। क्रोशद्वये[1]ऽर्वाग् तस्थौ। सुरत्राणः सम्मुखमागान्मातुः। माता प्रणता पृष्टा च सुखयात्राम्। जरत्या प्रोक्तम्—कथं न मे भद्रं यस्या 'ढिल्यां' त्वं पुत्रः, 'गूर्जर'धरायां तु

५ वस्तुपालः?। राज्ञा पृष्टम्—कोऽसौ?। जरत्या वृत्तान्तः प्रोक्तः तद्विनयख्यातिगर्भः। राजाऽऽह—स किमिति नात्रानीतः?। वृद्धाऽऽह—आनीतोऽस्ति। [2]दर्शयतां तर्हि। अश्ववारान् [3]प्रहित्य आनाय्य दर्शितो वस्तुपालः। दत्तोपदा मन्त्रिणा। आलापितश्च राज्ञा—मात्रा मदधिकस्त्वं पुत्रो मतः, तेन मम बान्धवस्त्वम्। अस्मन्माता

१० त्वां स्तौति। [4]एवं सुखवार्तां कृत्वा महतोत्सवेन स्वमातुरग्रेसरः कृत्वा श्रीवस्तुपालो 'ढिल्ली'पुरं नीतः आवासितश्च साधुपूनडस्यावासे। स्वमुखेन सुरत्राणेन निमन्त्र्य साधुपूनडसदने भोजयित्वा निजधवलगृहे आकारितः सचिवेन्द्रः। सविनयं सत्कृत्य परिधापितः। सुवर्णकोटिमेकां प्रसादपदे दत्त्वा

१५ उक्तश्चेति किञ्चिद् याचस्व। वस्तुपालेनाभिहितम्—देव! 'गूर्जर'धरया सह देवस्य यावज्जीवं सन्धिः स्तात्। उपलपञ्चकं 'मम्माणी'खनीतो दापय। राज्ञा मतं तत्। दत्ता धीरा। तत्फलहीपञ्चकं [5]नृपादेशात् पूनडेन प्रेषितं '[6]शत्रुञ्जया'दौ। तत्रैका ऋषभफलही, द्वितीया पुण्डरीकफलही, तृतीया

२० कपर्दिनः, चतुर्थी चक्रेश्वर्याः, पञ्चमी 'तेजलपुरे' श्रीपार्श्वफलही। वलितः पश्चान्मन्त्रीश्वरः स्वपुरं गतः। प्रणतः स्वस्वामी तेन चिरदर्शनोत्कण्ठाविह्वलेन। पूर्वमपि कर्णाकर्णिकया श्रुतं 'ढिल्ली'गमनवृत्तान्तम्। पुनः सविशेषं मन्त्रिणं पप्रच्छ। सोऽपि निरवशेषमगर्वपरः [7]प्रचख्यौ। तुष्टो वीरधवलः। दत्ता दश-

---

१ ख–'द्वयेन'। २ घ–'दर्शता'। ३ घ–'वारं'। ४ 'एवं० उक्तश्चेति' इति पाठो घ–प्रतौ न वर्तते। ५ घ–'तु पूनडेन प्रैषि'। ६ ग–'शत्रुञ्जयाद्रौ'। ७ ग–ख–'प्राचख्यौ'।

लक्षी हेम्नां प्रसादपदे सा तु गृहादर्वागेव दत्ता वहुमिलितयाचकेभ्यः । मिलितो मन्त्रिगृहे सर्वोऽपि लोकः । स सत्कृत्य प्रेषितः । कवयस्तु पठन्ति—

श्रीमन्ति दृष्ट्वा द्विजराजमेकं, पद्मानि सङ्कोचमहो भजन्ति ।
समागतेऽपि द्विजराजलक्षे, सदा विकासी तव पाणिपद्मः ॥१॥[2] ५
उच्चाटने विद्विषता रमाणा—माकर्षणे स्वामिहृदश्च वश्ये ।
एकोऽपि मन्त्रीश्वर ! **वस्तुपाल** !, सिद्धस्तव स्फूर्त्तिमियर्ति मन्त्रः ।२।[3]

एवं स्तूयमान उत्तमत्वाल्लज्जमानो **वस्तुपालो**ऽधो विलोकयामास । ततो 'महानगर'वासिना **नानक**कविना भणितम्—

एकस्त्वं भुवनोपकारक इति श्रुत्वा सतां जल्पितं १०
लज्जानम्रशिराः [4]स्थिरातलमिदं यद् वीक्षसे वेद्मि तत् ।
वाग्देवीवदनारविन्दतिलक ! श्रीवस्तुपाल ! ध्रुवं
पातालाद् बलिमुद्दिधीर्षुरसकृन्मार्गं भवान् मार्गति ॥३॥[5]

तदैव 'कृष्ण'नगरीयकवि**कमलादित्ये**न भङ्ग्यन्तरमुक्तम्—

लक्ष्मीं चलां त्यागफलां चकार यां १५
साऽर्थिश्रिता कीर्तिमसूत नन्दिनीम्[6] ।
साऽपीच्छया[7] क्रीडति विष्टपाग्रत-
स्तद्वार्त्तयाऽसौ त्रपते यतो महान् ॥४॥[8]

तेषां कवीनां भूरि दानं दत्तम् ।

अथ कदाचन मन्त्रिणा श्रुतम्, यथा—'रैवतका'सन्नं गच्छतां २० लोकानां पार्श्वतो भरटकाः पूर्वनरेन्द्रदत्तं करमुद्ग्राहयन्ति । पोट्टलिकेभ्यः कणमाणकमेकं १ कूपकात् कर्प एकः, एवं उपद्रूयते लोकः । तत आयतिदर्शिना सचिवेन ते भरटकाः 'कुहाडी' नामानं ग्रामं दत्त्वा तं करमुद्ग्राहयन्तो निषिद्धाः । 'अङ्केवालिया'ख्यो ग्रामस्तु **ऋषभनेमि**यात्रिकाणां क्षीणधनानां स्वगृहाप्तियोग्यपाथेय- २५

---

१ ख-घ-'प्रसादेन' । २ उपजातिः । ३ इन्द्रवज्रा । ४ पृथ्वीतलम् । ५ शार्दूल० । ६ घ-'नन्दनीम्'। ७ ख-'सा पीडया' । ८ इन्द्रवंशा ।

द्रम्मपदे दत्त[1] । 'शत्रुञ्जय'-[2]'रैवतक'तल्लहट्टिकानगरयोः सुखासनानि कृत्वा मुक्तानि अन्धज्वरितादीनां यात्रिकाणां तीर्थारोहणार्थम् । तदुत्पाटकनराणां[3] तु ग्रासपदे शालिक्षेत्राणि प्रतिष्ठितानि । तीर्थेषु सर्वेषु देवेभ्यो रत्नखचितानि हैमभूषणानि कारितानि । त्रिदे-
५ शायातसूरिशुश्रूषार्थं सर्वदेशग्रामण्यो नियुक्ताः । कृतं लौकिकतीर्थ-करणमपि स्वस्वामिरञ्जनार्थम्[4], न भक्त्या स्वयं तु सम्यग्दृष्टित्वात् । एवं तस्योपकाराः कियन्त्युच्यन्ते विवेकशिरोमणेः ? ।

एकदा 'स्तम्भ'[5]पुरं गतो मन्त्री 'धवलक्का'त् । तत्र समुद्रतीरे यानपात्रात् तुरङ्गा उत्तरन्तः सन्ति । तदा **सोमेश्वरः** कवीन्द्र
१० आसन्नवर्ती । मन्त्रिणा समस्या पृष्टा—

प्रावृट्काले पयोराशि–रासीद्[6] गर्जितवर्जितः ।

**सोमेश्वरः** पूरयति स्म—

अन्तःसुप्तजगन्नाथ–निद्राभङ्गभयादिव ॥१॥[7]

तुरङ्गमषोडशकमुचितदानेऽत्र दत्तम् । पुनः कदाचिन्मन्त्रि-
१५ णोक्तम्—काकः किं वा क्रमेलकः ? । **सोमेश्वरेण** पूरितं पद्यम्—

येनागच्छन्ममाख्यातो, येनानीतश्च मत्पतिः ।
प्रथमं सखि ! कः पूज्यः, काकः किं वा क्रमेलकः ? ॥२॥[8]

अत्रापि षोडशसहस्रा द्रम्माणां दत्तिः ।

एवं लीला तस्य ।

२० एकदा वृद्धेभ्यः श्रुतमेवंविधम्, यथा—

'प्राग्वाट'वंशे श्री**विमलो**दण्डनायकोऽभवत् । **नेढ-वाहिल**योर्भ्राताऽभवत् । स चिरं'मर्बुदा'धिपत्यमभुनक्, गूर्जरेश्वरप्रसत्तेः । तस्य **विमलस्य** विमलमतेर्वाञ्छाद्वयमभूत्–पुत्रवाञ्छा, प्रासाद-वाञ्छा च । [9]तत्सिद्ध्यै स्वगोत्रदेव्यां **अम्बिका**मुपवासत्रयेणाराराध ।
२५ प्रत्यक्षीभूय सा प्राह–वत्स ! वाञ्छां ब्रूहि । **विमलो** जगौ–पुत्रेच्छा

---

१ घ–'धर्म्मपदे'। २ क–घ–'रैवतोपत्यकानगरयोः'। ३ घ–'तदुग्य(?)नरा०'। ४ ख–'तस्य स्वामि०'। ५ ग–'स्तम्भतीर्थपुर'। ६ ग–'राशिः कस्माद् गर्जित०'। ७–८ अनुष्टुप्। ९ ख–'तत्सिद्ध्यैऽम्बामुप०'।

प्रासादनिष्पत्तीच्छा चा'ऽर्बुदशृङ्गे मे वर्तते । अम्बया प्रोक्तम्— द्वे प्राप्ती न स्तः । एकां ब्रूहि । ततो[1] विमलेन ससारवृद्धिमात्रफलामसारां पुत्रेच्छां मुक्त्वा प्रासादेच्छैव सफलीकर्तुमिष्टा । अम्बयोक्तम्— सेत्स्यति तवेयम्, परं क्षणं प्रतीक्षस्व यावताऽहं गिरिवरा'ऽर्बुदा'-धिष्ठात्र्याः सख्याः श्रीमातुर्मतं गृह्णामि । इत्युक्त्वा गता देवी । तावद् ५ विमलो ध्यानेन तस्थौ । श्रीमातृमतं लात्वा देव्यायाता अभाणीच्च—

पुष्पस्रक्दामरुचिरं, दृष्ट्वा गोमयगोमुखम् ।
प्रासादार्हं भुवं [2]विद्याः, श्रीमातुर्भवनान्तिके ॥१॥[3]

तत् तथैव दृष्ट्वा चम्पकद्रुमसन्निधौ तीर्थमस्थापयत् । पैत्तल-प्रतिमा तत्र महती विक्रमादित्यात् सहस्रोपरि वर्षाणामष्टाशीतौ १० गतायां चतुर्भिः सूरिभिरादिनाथं प्रत्यतिष्ठिपत् । 'विमलवसतिः' इति प्रासादस्य नाम दत्तम् । तास्मिन् दृष्टे [4]जन्मफलं लभ्यते ।

एतत्कथाश्रवणान्मन्त्री दध्यौ—वयं चत्वारो भ्रातरोऽभूम । तन्मध्ये द्वौ स्तः । द्वौ तु मालदेव-लूणिगावल्पवयसौ दिवमगाताम् । मालदेवनाम्ना कीर्तनानि प्रागपि अकारिषत । कियन्त्यपि लूणिग- १५ श्रेयसे तु 'लूणिगवसति''रर्बुदे' काराप्या । एतत् तेजःपालाय प्रकाशितम् । तेन विनीतेन सुतरां मेने । अथ तेजःपालो 'धवल-कक्का'द'ऽर्बुद'गिरिभूषणं 'चन्द्रावतीं' पुरीं गत्वा धारावर्षराणक-गृहमगात् । तेनात्यर्थं पूजितः । किं कार्यं आदिश्यतामित्युक्तं च । मन्त्रिणोक्तम्—'अर्बुद'शिखराग्रे प्रासाद कारयामहे यदि यूयं २० साहाय्याः स्यात । धारावर्षेण भणितम्—तव सेवकोऽस्मि । अहं सर्वकार्येषु धुरि योज्यः । ततो रा[5]ष्ट्रिकगोर्गलिकादयो महादानै-र्वशीकृतास्तथा, यथा [6]निष्पत्स्यमान चैत्यं करैर्न भारयन्ति, 'दानेन भूतानि वशीभवन्ति' इति वचनात् । तत'श्चन्द्रावती'महा-

---

१ 'भार्याश्रीदेव्या वचसा' इत्यधिको ग-पाठः । २ ग-'विन्धाः'। ३ अनुष्टुप् । ४ ग-'जन्म सफलं कथ्यते' । ५ घ-'गोगलिक'०' । ६ ग-'निष्पद्यमानचैत्योपरि प्रद्वेष न भजन्ते दानेन' ।

जनमुख्यं श्रावकं चाम्पलनामानं गृहे गत्वाऽऽललाप । वयं चैत्य-
'मर्बुदे' कारयामहे यदि पूजासान्निध्यं कुरुध्वे । चाम्पलेनापि
स्वस्य कुटुम्बान्तराणामपि देवपूजार्थे नित्यधनचिन्ता कृता । ततो
मन्त्री 'आरासणं' गत्वा चैत्यनिष्पत्तियोग्यं दलवाटकं [1]निरका-
५ शयत् । तद्युग्यैरहकलै(?)श्चार्बुदोपत्यकमानीनयत् । अर्धक्रोशार्ध-
क्रोशान्तरे हट्टानि मण्डापितानि । तत्र सर्वं लभ्यते, पशूनां
नराणां क्षुधादे कृच्छ्रं मा भूदिति । [2]'उम्बरिणी'पथेन प्रासाद-
निष्पत्तियोग्यं दलं द्विगुणमुपरि गिरेः प्रवेशयामास । पुनस्तां पथां
विषमां चकार यथा परचक्रप्रवेशो नो भवेत् । एवं सिद्धे पूर्वकर्मणि
१० शोभनदेवं सूत्रधारमाहूय कर्मस्थाये न्ययुङ्क्त । ऊदलाख्यं [3]शालं
उपरिस्थायिनमकरोत् । अर्थव्यये स्वैरितां च समादिशत् । एवं
सूत्रं कृत्वा तेजःपालो 'धवलक्क'मागमत् । निष्पद्यते प्रासादः ।
श्रीनेमिबिम्बं कषोपलमयं सज्जीकृतं विद्यते । सूत्रधाराणां सप्तशती
घटयति घाटम् । ते तु दुःशीलाः पुरः पुरोऽर्थं गृह्णन्ति । कार्यकाले
१५ पुनः पुनर्याचन्ते । तत ऊदलो मन्त्रितेजःपालाय लिखति—देव !
द्रम्मा विनश्यन्ति । सूत्रधाराः कर्मस्थायात् प्रथमं प्रथमं गृह्णन्ति ।
ततस्तेजःपालेन कथापितम्—द्रम्मा विनष्टा इति किं ब्रूपे ? । विनष्टा
किं कुथिताः ? । न तावत् कुथिताः, किन्तु मनुष्याणामुपकृताः ।
उपकृताश्चेद् विनष्टाः कथं कथ्यन्ते ? । माता मे वन्ध्येति वाक्यवत्
२० परस्परं विरुद्धं ब्रूषे । तस्मात् तत्त्वमिदम्— सूत्रधाराणामिच्छाच्छेदो
न कार्यः, देयमेवेति । ततो दत्ते ऊदलः । तावन्निष्पन्नं यावद्
गर्भगृहं मध्ये श्रीनेमिनाथबिम्बं स्थापितम् । एतच्च कृतं श्रीतेजः-
पालाय विज्ञप्तम् । तुष्टौ द्वौ मन्त्रिणौ । श्रीवस्तुपालादेशात्
तेजःपालोऽनुपमया सहानल्पपरिच्छदोऽर्बुद'गिरिं प्राप्तः । प्रासादं
२५ निष्पन्नप्रायं ददर्श तुतोष (च) । स्नात्वा सद्वस्त्रप्रावरणः सपत्नीको

[1] ग-'निरवकाशयति' । २ ख-'उब्बरणी०', घ-'उम्बरणी०' । ३ ग-'आतम-शालक' ।

मन्त्री **नेमिं** पूजयति स्म । अथ कायोत्सर्गे ध्यानेनोर्ध्वस्तस्थौ चिरम् । क्षणार्धेनाऽनुपमा पतिं तथास्थं मुक्त्वा प्रासादनिष्पत्ति- कुतूहलेन बहिरागात् । तत्र सूत्रधारः **शोभनदेवो** मण्डपचतुः- स्तम्भीं ऊर्ध्वयितुं उपक्रमते । तदा मन्त्रिण्या उक्तम्— सूत्रधार ! मम पश्यन्त्याश्चिरं बभूव । अद्यापि स्तम्भा नोत्तभ्यन्ते । ५ **शोभनदेवे**नोक्तम्— स्वामिनि ! गिरिपरिसरोऽयम्, शीतं स्फीतम्, प्रातर्घटनं विषमम् । मध्याह्नोद्देशे तु गृहाय गम्यते । स्नायते, पच्यते, भुज्यते । एवं विलम्बः स्यात् । अथ विलम्बात् किं भयम् ?, श्रीमन्त्रिपादाश्चिरं राज्यमुपभुञ्जानाः सन्तीह तावत् । ततोऽनुपमया जगदे— सूत्रधार ! चाटुमात्र- १० मेतत् । कोऽपि क्षणः कीदृक् भवेत् को वेत्ति ? । सूत्रधारो मौनं कृत्वा स्थितः । पत्नीवचनमाकर्ण्य सचिवेन्द्रो बहिर्निःसृत्य सूत्रधारमवोचत्— **अनुपमा** किं वावदीति ? । सूत्रधारो व्याहार्षीत्— यद् देवेन अवधारितम् । मन्त्री दयितामाह— किं त्वयोक्तम् ? । **अनुपमा**ऽऽह— देव ! वदन्त्यस्मि—काल्स्य १५ को विश्वासः ? । काऽपि कालवेला कीदृशी भवति ? । न सर्वदा- ऽपि पुरुषाणां तेजस्तथा । यथा—

> श्रियोर्वा स्वस्य वा नाशो, येनावश्यं विनश्यति ।
> श्रीसम्बन्धे बुधाः स्थैर्य–बुद्धिं बध्नन्ति तत्र किम् ? ॥१॥[१]
> वृद्धानाराधयन्तोऽपि, तर्पयन्तोऽपि पूर्वजान् । २०
> पश्यन्तोऽपि गतश्रीकान्, अहो मुह्यन्ति जन्तवः ॥ २ ॥[३]
> भूपभ्रूपल्लवप्रान्ते, निरालम्बाऽविलम्बनीम् ।
> स्थेयसीं बत मन्यन्ते, सेवकाः स्वामपि श्रियम् ॥३ ॥[४]
> इति विपदितो मृत्यु–रितो व्याधिरितो जरा ।
> जन्तवो हन्त पीड्यन्ते, चतुर्भिरपि सन्ततम् ॥४॥[६] २५

१ ख–'मौनेनातिष्ठत्' । २-३ अनुष्टुप् । ४ ग–'स्वल्पावस्थायिनीं लक्ष्मीं, मन्यन्ते मन्त्रिणो बुधाः' । ५–६ अनुष्टुप् ।

एतत् तत्त्ववचः श्रुत्वा मन्त्रिवरः प्राह–अयि कमलदलदीर्घलोचने ! त्वां विना कोऽन्यः एवं वक्तुं जानाति ? ।

'ताम्रपर्णी'तटोत्पन्नै–मौक्तिकैरिक्षुकुक्षिजैः
वेद्धस्पर्धभरा वर्णाः, प्रसन्नाः स्वादवस्तव ॥५॥[1]

५ गृहचिन्ताभरहरणं, मतिवितरणमखिलपात्रसत्करणम् ।
किं किं न फलति कृतिनां गृहिणी गृहकल्पवल्लीव ? ॥६॥[2]

राज्यस्वामिनि ! वद केनोपायेन शीघ्र प्रासादा निष्पत्सन्ते ? । देव्याह—नाथ ! रात्रीयसूत्रधाराः पृथक् दिनीयसूत्रधाराः पृथग् व्यवस्थाप्यन्ते । कटाहिश्चटाप्यते । अमृतानि भोज्यन्ते । सूत्र-
१० धाराणां च विश्रामलाभाद् रोगो न प्रभवति । एवं चैत्यसिद्धिः शीघ्रा । आयुर्यात्येव, श्रीरस्थिरैव । यतः—

गृहीत इव केशेषु, मृत्युना धर्ममाचरेत् ।
अजरामरवत् प्राज्ञो, विद्यामर्थं च चिन्तयेत् ॥१॥[3]

इत्यादि सरस्वतीवीणाक्वणितकोमलया गिरोक्त्वा निवृत्ता
१५ सुलक्षणा सा । मन्त्रिणा सर्वदेशकर्मस्थायेषु सैव रीतिः प्रारब्धा । निष्पन्नं च सर्वं स्तोकैरेव दिनैः । गतो मन्त्री 'धवलक्क'म् । दिनैः कतिपयैर्वर्धापनिकानर आयातः–देव ! 'अर्बुदा'द्रौ नेमिचैत्यं निष्पन्नम् । हृष्टौ द्वौ बान्धवौ । पुनः प्रासादप्रतिष्ठार्थं गतौ ससङ्घौ तत्र । तत्र च 'जावालि'पुरात्[4] श्रीयशोवीरो नाम भाण्डागारिकः
२० सरस्वतीकण्ठाभरणत्वेन[5] ख्यातः स आहूत आगात् । मिलिता वस्तुपाल-तेजःपाल-यशोवीरा एकत्र न्याय-विक्रम-विनया इव साक्षात् । चतुरशीती राणाः । द्वादश मण्डलीकाः । चत्वारो महीधराः । चतुरशीतिर्महाजनाः । एवं सभा । तदा वस्तुपालेन यशोवीरः प्रोचे– भाण्डागारिक ! त्वं नृपउदयसिंहस्य मन्त्री यौगन्धरायण
२५ इव वत्सराजस्य । तव स्तुतीः स्वस्थानस्थाः शृणुमः, यथा—

---

१ ग–'व्रधस्पर्ध०' । २ अनुष्टुप् । ३ आर्या । ४ अनुष्टुप् । ५ ग–'बालहुरपुरात्' ।
६ घ–'कण्ठभूषणत्वेन' ।

बिन्दवः श्री**यशोवीर** !, मध्यशून्या निरर्थकाः ।
सङ्ख्यावन्तो विधीयन्ते, त्वयैकेन पुरस्कृता ॥१॥[1]
**यशोवीर** ! लिखत्याख्यां, [2]यावच्चन्द्रविधिस्तव ।
न माति भुवने ताव–दाद्यमप्यक्षरद्वयम् ॥२॥[3]

अत एव नः सदा भवद्दर्शनरणरणकाक्रान्तमेव स्वान्तमासीत् । ५
इदानीं चारुसम्पन्नं भवदीयसाङ्गत्यम्, तदपि विशेषतः [4]श्रीमन्-
**नेमिदृष्टौ** । ततो **यशोवीरो** व्याहरति—

श्रीमत्कर्णपरम्परागतभवत्कल्याणकीर्तिश्रुतेः
प्रीतानां भवदीयदर्शनविधा[5]वस्माकमुत्कं मनः ।
श्रुत्वा प्रत्ययिनी सदा ऋजुतया स्वालोकविस्रम्भणी १०
दाक्षिण्यैकनिधानकेवलमियं दृष्टिः समुत्कण्ठते ॥१॥[6]

इत्याद्याः सङ्कथाः पप्रथिरे । प्रासादबिम्बप्रतिष्ठोत्सवाः संवृत्ताः ।

**श्रीवस्तुपालेन** एकदा चैत्यस्य दूषणभूषणानि पृष्टो **यशोवीरः**
प्रोचे–देव ! **शोभनदेवः** सूत्रधारः शोभनः, [7]ततो युक्तं एतदम्बा
कीर्तिस्तम्भोपरिस्थिता एकामङ्गुलीमूर्ध्वीकृत्य वर्तमाना घटिता । १५
[8]स तु कर्मकर एव द्रव्यलोलुपः । अत्र तत्र मातुर्मूर्तिर्विलोक्यते
येन दाता दुर्लभः ।

शतेषु जायते शूरः, सहस्रेषु च पण्डितः
वक्ता शतसहस्रेषु, दाता भवति वा न वा ॥१॥[9]

इत्यादि किमुच्यते[8] । प्रासादः परमतमः । परं दोषा अपि सन्ति । २०
प्रासादापेक्षया सोपानानि ह्रस्वानि १ स्तम्भे बिम्बान्याशातना-
भाजनं स्युः २ द्वार[10]प्रवेशे व्याघ्ररूपाणि पूजाऽल्पत्वाय स्युः
३ जिनपृष्ठे पूर्वजारोपणात् पाश्चात्यानामृद्धिर्ना[11]शो भविता

१ अनुष्टुप् । २ घ 'यावच्चिन्द्रे विधि०' । ३ अनुष्टुप् । ४ घ–'श्रीनेमि०' । ५ ग–'विधौ नास्माकमुत्कं मनः' । ६ शार्दूल० । ७ ख– 'ततोऽपि न युक्त' । ८ ग–पुस्तके 'स तु' एतदारभ्य 'किमुच्यते' इति पाठाधिक्यम् । ९ अनुष्टुप् । १० ख–'प्रदेशे' । ११ ख–'नाशिनी' ।

४ आकाशे जैनमुनिमूर्तिरोपणात् त्वत्परं दर्शनपूजाऽल्पत्वाय ५ गूहलीकृष्णा न मङ्गलाय ६ भारपदाः द्वादशहस्तप्रलम्बाः कालेन स कोऽप्येवंविधो न भविष्यति यः विनाशे ईदृशः प्रक्षेपयिष्यति ७ । इत्यादि श्रुत्वा सत्यं मत्वा न चुकोप कोऽपि । ५ भवितव्यतां चाप्रतिकारां निश्चिक्ये । विविधदानैर्विक्रमादित्य इव प्रकाश्य महिमानं विसृज्य स्वस्थाने लोकं सपरिजनो 'धवलक्कं' गत्वा प्रभुं नत्वा सुखं तस्थौ ।

इतश्च श्रीवीरधवलस्य द्वौ पुत्रौ स्तः । एको वीरमः, अपरो वीसलः । तत्र वीरमो यौवनस्थः सूरेषु रेखां प्राप्तः यो वर्षा- १० कालेऽकस्मादुपरि पतन्त्या विद्युत उद्देशेन कृपाणीमाकृषत् । स एकदा कचिदेकादशीपर्वणि 'धवलकक'मध्ये तरुतलमगमत् । तत्र पर्वण्यसौ रीतिः—वैष्णवैः सर्वैरष्टोत्तरशतं बदराणां वा आमलकानां द्रम्माणां वा मोक्तव्यं तरोरधः । वीरमेनाऽष्टोत्तरं शतं द्रम्मा मुक्ताः । एकेन तु वणिजा तस्यामेव सभायां स्थितेना- १५ ष्टोत्तरशतं आवूनां मुक्तम् । वीरमेण तस्योपरि कृपाणिका कृष्टा । रे अस्मत्तः किमधिकं करोषीति वदन्नसौ वणिजं हन्तुमन्व- धावत् । वणिग् नष्ट्वा वीरधवलाध्यासितां सभामाविशत् । जातः कलकलः । ज्ञातं पारम्पर्यं वीरधवलेन । वणिजि पश्यति वीरम आकार्य हक्कितः—का ते चर्चा यद्यं त्वदधिकं २० करोति ? । अस्माकं न्यायं न वेत्सि ? । दूरे भव, पुनर्मद्दृष्टौ नागन्तव्यम् । वणिजो मम जङ्गमः कोशः । मयि जीवति सति केनाभिभूयन्ते ? । इत्युक्त्वा तं 'वीरमग्रामा'ख्ये आसन्नग्रामे- ऽतिष्ठिपत् । स तु कोणिककुमारवत् कंसवत् पितरि द्विष्टो जीवन्मृतमन्योऽस्थात् । वीसलस्तु राणश्रीवीरधवलस्य वल्लभः २५ श्रीवस्तुपालस्य च ।

---

१ ग–पुस्तके 'गूहलीकृष्णा' एतदारभ्य 'प्रक्षेपयिष्यति' एतावत् पाठाधिक्यम् ।
२ क–'रेखाः' । ३ ग–'तत्र स्थितेनाष्टोत्तरशत दुष्कता मुक्ता' ।

अत्रान्तरे श्रीवीरधवलोऽचिकित्स्येन व्याधिना जग्रसे। तदा **वीरमः** स्वसहायैर्बलवान् भूत्वा राज्यार्थं राणकमिलनमिषेण 'धवलक्क'मागात्। तदैव श्रीवस्तुपालेन तं दुराशयं ज्ञात्वा प्रत्युत्पन्नमतित्वादश्व-गज-हेमादिषु परमात्ममानुपैः परमो यत्नः कृतः। **वीरमः** प्रभवितुं न शशाक। 'धवलक्क' एव स्वसौधे विपुलेऽवतस्थौ। दिनैस्त्रिभिर्वीरधवलो दिवं गतः। लोकः शोकसमुद्रे पतितः। बहुभिश्चितारोहणं कृतम्[1]। मन्त्री तु सपरिजनः काष्ठानि भक्षयन्नपरापरैर्मन्त्रिभिर्निषिद्धः। उक्तं च—देव! त्वयि सति राणपादाः स्वयं जीवन्तीव लक्ष्यन्ते। त्वयि तु लोकान्तरिते परिपूर्णाः पिशुनानां मनोरथाः। गता 'गूर्जर'धरा इति ज्ञेयम्। ततो न मृतो मन्त्री। उत्थापनदिने मन्त्री श्रीवस्तुपालः सभासमक्षं पठति—

> आयान्ति यान्ति च परे ऋतवः क्रमेण
> संजातमेतदृतुयुग्ममगत्वरं तु।
> वीरेण वीरधवलेन विना जनानां
> वर्षा विलोचनयुगे हृदये निदाघः ॥ १ ॥[2]

अतीव निःश्वस्य गताः सर्वेऽपि स्वस्थानम्। ततश्च मृते वीरधवले तद्राज्यलिप्सुर्वीरमः सन्नह्य गृहान्निर्गमिष्यति यावता तावता श्रीवस्तुपालेन **वीसलः** कुमारो राज्ये विनियेशितः। वीसलदेव इति नाम प्रख्यापितम्। सर्वराज्याङ्गेष्वासनरैः रक्षा कारिता। स्वयं **वीसलं** गृहीत्वा साराऽश्वखुरपुटक्षुण्णक्षमापीठोच्छलद्रजःपुञ्जस्थगितव्योमा राजन्यकक्रूरकरवालशल्लभल्लकिरणद्विगुणद्योतितरविकिरणो **वीरमसम्मुखं** ययौ। दारुणः समरो जज्ञे। वीरमः स्वस्य तेजसोऽनवकाशं मन्यमानो नष्ट्वा श्वशुरेण राजकुलेन **उदयसिंहे**नाधिष्ठितं 'जावालि'पुरं[3] प्रत्यचालीत्। मन्त्री तस्याशयं दक्षतया ज्ञात्वा षोडशयोजनिकान् नरानुदयसिंहान्तिके प्रैषीत्, आख्यापयत्, यथा-

---

१ ग–'चिन्तारोपण कृतम्'। २ वसन्त०। ३ ख–'जालहुरपुरं।

–अमुं राजद्विष्टकारकं जामातृसम्बन्धेन यदि स्वान्तिके स्थापयिष्यासि तदा ते न राज्यं, न जीवितव्यं च । हन्याश्चैवैनम् । ततो यदा **वीरमो** 'जाबालिपुरो'द्यानं प्राप्तस्तदा विश्राम्यन्नङ्गरक्षिकामुत्तारयन्नलसायमान **उदयसिंह**नियुक्तैर्धनुर्धरैः शरैः शतमितैर्जर्जरश्चालनीयप्रायकायः कृतः मृतस्तत्र । तस्य शिरो **वीसलदेवाय** प्रहितं **उदयसिंहेन** । ततो जातं निष्कण्टकं **वीसलदेव**राज्यम् । यावन्मात्रं **वीरधवलेन** साधितं तावन्मात्रान्न किमपि न्यूनमासीत् । केवलं लब्धप्रसरेण **वीसलेन** श्रीवस्तुपालो लघुतया दृष्टः ।

पुरुषः सम्पदामग्र–मारोहति यथा यथा ।
गुरूनपि लघुत्वेन, स पश्यति तथा तथा ॥१॥[3]

राज्ञा **नागड**नामा विप्रः प्रधानीकृतः । मन्त्रिणोः पुनर्लघुश्रीकरणमात्रं दत्तम् । एकश्च **समराक**नामा प्रतीहारो राज्ञोऽस्ति । स प्रकृत्या नीचः । पूर्वमन्यायं कुर्वाणो मन्त्रिश्रीवस्तुपालेन पीडितोऽभूत् । स लब्धावकाश उपराजं ब्रूते–देव ! अनयोः पार्श्वेऽनन्तं धनमास्ते तद् याच्यताम् । राजाऽपि तावाहूयावादीत्–अर्थो दीयताम् । ताभ्यामुक्तम्—अर्थः 'शत्रुञ्जया'दिषु व्ययितत्वान्नास्ति नः पार्श्वे । राज्ञोक्तम्-तर्हि दिव्यं दीयताम् । मन्त्रिभ्याममिहितम्–यद्दिव्यं भवद्भ्यो रोचते तदादिश्यताम् । राज्ञा घटसर्पः पुरस्कृतः । **लवणप्रसादो** तदा जीवन्नभूत् । स निषेधयति तदकृत्यम्, न तु तद्वचनं राजा शृणोति, अभिनवदर्पवशात् । तदा **सोमेश्वरे**णोक्तं काव्यमेकं **वीसलं** प्रति—

मासान्मांसलपाटलापरिमलव्यालोलरोलम्बतः
प्राप्य प्रौढिमिमां समीर ! महतीं हन्त त्वया किं कृतम् ? ।

१ घ–'ज्ञातेयेन' । २ ग–'तदनु जात' । ३ अनुष्टुप् । ४ 'वृद्धनगरीय' इत्यधिको ग–पाठः । ५ ग–'अस्मिन् प्रस्तावे एकः समराक०' । ६ ग–'कृतघ्नेन राज्ञाऽपि'।

सूर्याचन्द्रमसौ निरस्ततमसौ दूरं तिरस्कृत्य यत्
पादस्पर्शसहं विहायसि रजः स्थाने तयोः स्थापितम् ॥१॥[1]

निवर्तितं दिव्यं राज्ञा ।

अथ कदाचिद् 'धवलक्कके' मन्त्रिणि वसति सति पौषधशाला एका आस्ते । तस्या उपरितनं पुञ्जकं क्षुल्लकोऽधः क्षिपन्नासीत् । तस्याज्ञानात् स पुञ्जको वीसलदेवमातुलस्य सिंहनाम्नो यानाधिरूढस्याधो रथ्यायां गच्छतः शिरसि पतितः । क्रुद्धः सः । मध्ये आगत्य क्षुल्लकं दीर्घया तर्जनकेन पृष्ठे दृढमाहत्य रे मां 'जेठुआकं' [2]सिंहनामानं राजमातुलं न जानासीति वदन् स्वगृहं गतः । तं वृत्तान्तं मध्याह्ने मन्त्रिवस्तुपालं भोजनारम्भे उत्क्षिप्तप्रथमकवलं आगत्य रुदन्नुद्घाटितपृष्ठोऽभिजिज्ञपत् क्षुल्लकः । मन्त्रिणाऽभुक्तेनैव उत्थाय क्षुल्लकः सन्धार्य प्रस्थापितः, शालायां प्रेषितश्च । तदनु स्वयं स्वकीयः परिग्रहो भाषितः—भो क्षत्रियाः ! स कोऽप्यस्ति युष्मासु मध्ये यो मम मनोदाहमुपशमयति ? । तन्मध्ये एकेन राजपुत्रेण भूणपालाख्येनोक्तम्—देव ! ममादेशं देहि; प्राणदानेऽपि तव प्रसादानां नानृणीभवामः । स एकान्ते नीत्वा मन्त्रिणा छन्नं कर्णे प्रविश्य समादिष्टम्—याहि, 'जेठुआ'वंशस्य राजमातुलस्य सिंहस्य दक्षिणं पाणिं छित्त्वा मे ढौकय । स राजपुत्रस्तथेत्युक्त्वा एकाकी मध्याह्नोद्देशे सिंहावासद्वारे तस्थौ । तावता राजकुलात् सिंह आगात् । राजपुत्रेणाग्रे भूत्वा प्रणिपत्य सिंहाय उक्तम्—मन्त्रिणा श्रीवस्तुपालदेवेनाहं वः समीपं केनापि गूढेन[3] कार्येण प्रेषितोऽस्मि । तेन इतो भूत्वा प्रसद्याऽवधार्यताम् । इत्युक्तः स किञ्चिद् गत्वा पराङ्मुखो[4] भूत्वा यावद् वार्ता श्रोतुं यतते तावन्मन्त्रिभृत्येन सिंहस्य करः स्वकरे कृतः सहसा[5] छुर्याच्छिन्नश्च । छिन्नं तं करं गृहीत्वा रे वस्तुपालस्य भृत्योऽस्मि, पुनः श्वेताम्बरं परिभवेरिति वदंश्चरणबलेन पलाय्य

१ शार्दूल० । २ घ—'सिंहं राज०' । ३ ग—'गूढकार्येण' । ४ ग—'परागभूत्वा' । ५ ग—'सहसा कङ्कलोहछुर्या' ।

भूणपालो मन्त्र्यन्तिकमगमत्, करमदीदृशत् । मन्त्रिणा शिक्षापितो-ऽसौ । स करः स्वसौधाग्रे बद्धः । स्वमानुषाणि परमासनरगृहे मुक्तानि । आत्मीयपरिग्रहो भाषितः—यस्य जीविताशा स स्वगृहं यातु, जीवतु चिरम् । अस्माभिर्बलवता सह वैरमुपार्जितम् । मरणं करस्थमेव, जीविते सन्देहः । तैः सर्वैरप्युक्तम्—देवेन सह मरणं जीवितं च । [illegible] स्मा वयं । एतदर्थे निश्चयो ज्ञातव्यः । ततो गोपुराणि दत्त्वा [illegible]ः स्वावृत्तं कृत्वा स्वयं स्वसौधोपरि सज्जीभूय तस्थौ निषङ्गी [illegible] धनुष्मान् । ततः सिंहस्यापि परिच्छदो मिलितो बान्धवा-दिभूयान् । तैः सर्वैरभाणि—गत्वा श्रीवस्तुपालं सपुत्रपशुबान्धवं हनिष्याम इति प्रतिज्ञा जज्ञे । चलित "[1]जेठुआक'सैन्यम् । यावद् राजमन्दिराग्रे आयात कलकलायमानं तत् तावदेकेन ज्यायसो-क्तम्—एवंविधं व्यतिकरं यदि राजा विज्ञप्यते तदा वरम्; माऽस्मत्सहसाकारित्वे तस्य कोपोऽभूत् । ततो विज्ञप्तं राज्ञे । राज्ञा वार्ता ज्ञात्वा विमृश्य भणितम्—अनपराद्धे[2] वस्तुपालो न पीडयति किञ्चित् । युष्माभिरन्यायं कृतं भावि । तैरुक्तम्—मन्त्रिणो गुरुः पीडितः । राजा प्राह—यदीत्थं कृतं तस्मात् तिष्ठता-मत्रैव । वयं स्वयं करिष्यामो यदुचितम् । ततः सोमेश्वरदेवः पृष्टः—गुरो ! किमत्र युक्तं स्यात् ? । गुरुणोक्तम्—मां तत्पार्श्वे प्रहिणुत । आयतिपथ्यं करिष्ये । प्रहितः सः । प्राप्तो मन्त्रिसौधद्वारम् । प्राप्तो मन्त्र्यनुज्ञया मन्त्रिपार्श्वे पुरोहित आह—मन्त्रिन् ! किमेतदल्पे कार्ये कियत् कृतं भवद्भिः ? । 'जेठुयका'[3] मिलिताः सन्ति । राजाऽपि तद्भागिनेयः[4] । क्रोधः[5] वः शम्यतां येन सन्धिं कारयामि । अथ मन्त्रीशः प्राह—मरणात् किं भयम् ? ।

> [6]'जिते च लभ्यते लक्ष्मी— र्मृते चापि सुराङ्गना ।
> क्षणविध्वंसिनी काया, का चिन्ता मरणे रणे ? ॥१॥'[7]

---

१ घ–'जेठुयक' । २ ग–'अनपराधे' । ३ ग–'जेठअक्का' । ४ घ–'तद्भामेयः' । ५ ग–'तेन क्रोधः' । ६ इदं पद्यं नास्ति ख-घ-प्रत्योः । ७ अनुष्टुप् ।

परं गुरुपरिभवो दुःसहः । अथ किं व्यापृतं जग्धं पीतं दत्तं गृहीतं विलसितं यदा तदा यथा तथा मर्तव्यमेव । इदमेवं मरणमित्थं भवतु ।

जीवितैकफलमुद्यमार्जितं, लुण्टित पुरत एव यद् यशः ।
ते शरीरकपलालपालनं, कुर्वते बत कथ मनस्विनः ? ॥१॥[1] ५

इत्यादिगीर्भिर्मृतिकृतनिश्चयं मन्त्रिणं ज्ञात्वा गुरुर्गत्वा राजानमूचे—राजेन्द्र ! म्रियत एवात्र [2]झगटके मन्त्री । सः अग्रेऽपि युद्धशूरः तेषु तेषु स्थानेषु जयश्रीवरो जातः । तत्र वक्तुं न पार्यते। अपि च 'तृणं शूरस्य जीवितम्' इति वचनात् ईदृशो योधः क्वचिद् विषमे कार्येऽग्रे धृत्वा घात्यते, नैवं वृथा । बहुधा भवतामुपकारी । अन्यच्च स किं प्रभुर्यो जीर्णभृत्यानां द्वित्रानपराधान् न सहते ? । अस्मदादीनामपि मनसि देवस्य कीदृशी आशा भाविनी ? । इत्यादि दृढं मृदुसारं निगद्य हस्ते कृतो राजा । यदुक्तम्—

[3]वल्ली नरिंदचित्तं, वक्खाणं पाणियं च महिलाओ ।
तत्थ य वच्चंति सया, जत्थ य धुत्तेहिं निज्जंति ॥१॥[4] १५

राजा प्रोवाच—मन्त्री धीरां दत्त्वा सम्मान्य समानीयताम् । गतो गुरुस्तत्र । राज्ञोक्तमुक्त्वा नीतो मन्त्री । परं सन्नद्धबद्ध एव मिलितः । राज्ञा विविधतदुपकृतिरमृत्या आर्द्रनयनमनसा पितृवदुपशमितो मन्त्री । मातुलाः [5]पादयोर्लगापिताः । स मन्त्रिच्छेदितः सिंहहस्तो लोके दर्शितः । बहुराजलोकसमक्षं शब्दः प्रलापितः—यो मन्त्रिदेवगुरुहन्ता तस्य प्राणान् [6]हनिष्यामः । इत्युक्त्वा जिनमतस्य मन्त्रिणश्च गौरवमवीवृधद् वीसलदेवः । २०

---

१ स्वागता । २ ख—'प्रघट्टके'(?) ।
३ ग—पुस्तके एवेद पद्य दृश्यते । अस्य छाया चैवम्—
वल्ली नरेन्द्रचित्त व्याख्यानं पानीयं च महिलाः ।
तत्र च वर्तन्ते सदा यत्र च धूर्तैर्नीयन्ते ॥
४ आर्या । ५ घ—'पदयोर्लगिताः' । ६ घ—'हरिष्यामः' ।

अथ विक्रमादित्यात् १२९८ वर्षे[1] प्राप्तम् । **श्रीवस्तुपालो** ज्वररुक्क्लेशेन पीडितः तदा **तेजःपालं** सपुत्रपौत्रं स्वपुत्रं च **जयन्तसिंह**मभाषत–वत्साः ! श्रीनरचन्द्रसूरिभिर्मलधारिभिः संवत्-[2]१२८७ वर्षे भाद्रपदवदि १० दिने तेषां देवगमनसमये वयमुक्ताः[3]– मन्त्रिन् ! भवतां १२९८ वर्षे स्वर्गारोहो भविष्यति । तेषां वचांसि च न चलन्ति, गीःसिद्धिसम्पन्नत्वात् । ततो वयं श्री'शत्रुञ्जयं' गमिष्याम एव ।

> गुरुर्भिषग् युगादीश–प्रणिधानं रसायनम् ।
> सर्वभूतदयापथ्यं, सन्तु मे भवरुग्भिदे ॥१॥[4]
>
> लब्धाः श्रियः सुखं स्पृष्टं, मुखं दृष्टं तनूरुहाम् ।
> पूजितं दर्शनं जैनं, न मृत्योर्भयमस्ति मे ॥२॥[5]

कुटुम्वेन तन्मतम्[6] । 'शत्रुञ्जय'गमनसामग्री निष्पन्ना । **वीसलदेवो** मन्त्रिणा साश्रुलोचनः समापृष्टः मुत्कलापितश्च कतिपयपदानि सम्प्रेपणायायातः । ततो **नागड**प्रधानगृहं मन्त्री स्वयमगात् । तेनासनादिभिः सत्कृत्य पृष्टः कार्यविशेष मन्त्री बभाषे—वयं भवान्तरशुद्धाय 'विमल'गिरिं प्रति प्रतिष्ठामहे । भवद्भिर्जैनमुनयोऽमी ऋजवः सम्यग् रक्षणीयाः, क्लिष्टलोकात् । यतः—

> [7]"गौर्जराणामिदं राज्यं, **वनराजात्** प्रभृत्यपि ।
> स्थापितं जैनमन्त्रौघै[8]–स्तद्द्वेषी नैव नन्दति ॥१॥[9]

इति ज्ञातव्यम् । मन्त्रि**नागडे**नोक्तम्–श्वेताम्बरान् भक्त्या गौरवयिष्यामि । चिन्ता न कार्या । स्वस्त्यस्तु वः । इति तद्वचसा समतुषत् । अथ चचाल **वस्तुपालः** । 'अड्केवालिआ'ग्रामं यावत् प्राप तत्र शरीरं वाढमसहं दृष्ट्वा तस्थौ । तत्र सहायाताः सूरयो

---

१ ग–'एव काले गच्छति' । २ क–'१२२८ वर्षे' । ३ ग–'वधमेवमुक्ताः' । ४–५ अनुष्टुप् । ६ ग–'तन्मानितम्' । ७ 'गौर्जरात्रामिदं' । ८ ग–'मन्त्रैस्तु' । ९ अनुष्टुप् ।

निर्यामणां कुर्वन्ति । मन्त्रीश्वरोऽपि समाधिना सर्वं शृणोति, श्रद्दधाति च । अनशनं प्रतिपद्य यामे गते[1] स्वयं भणति—

न कृत सुकृतं किञ्चित्, सतां संस्मरणोचितम् ।
मनोरथैकसाराणा-[2]मेकमेव गतं वयः ॥१॥[3]

यन्मयोपार्जितं पुण्यं, जिनशासनसेवया ।
जिनशासनसेवैव, तेन मेऽस्तु भवे भवे ॥२॥[4] 5

या रागिणि विरागिण्यः, स्त्रियस्ताः कामयेत् कः ? ।
तामहं कामये मुक्तिं, या विरागिणि रागिणी ॥३॥[5]

शास्त्राभ्यासो जिनपतिनुतिः सङ्गतिः सर्वदाऽऽर्यैः
सद्वृत्तानां गुणगणकथा दोषवादे च मौनम् । 10
सर्वस्यापि प्रियहितवचो भावना चात्मतत्त्वे
सम्पद्यन्तां मम भवभवे यावदाप्तोपवर्गः[6] ॥४॥[7]

इति भणन्नेवास्तमितो जैनशासनगगनमण्डनमृगाङ्कः श्री-**वस्तुपालः** । तदा निर्ग्रन्थैरपि तारपूत्कारमरोदि । का कथा सोदरादीनाम् ? । [8]मन्त्रिणि दिवं गते श्री**वर्धमान**सूरयो वैराग्यादा- 15 म्बिलवर्धमानतपः कर्तुं प्रारेभुः । मृत्वा **शङ्खेश्वरा**धिष्ठायकतया जाताः । तैर्मन्त्रिणो गतिर्विलोकिता, परं न ज्ञाता । ततो 'महाविदेहे' गत्वा श्री**सीमन्धरो** नत्वा पृष्टः । स्वाम्याह—अत्रैव 'विदेहे' 'पुष्कलावत्यां' 'पुण्डरीकिण्यां' पुरि **कुरुचन्द्र**राजा सञ्जातः । स तृतीये भवे सेत्स्यति । **अनुपमदे**जीवस्तु अत्रैव श्रेष्ठिसुताऽ- 20 ष्टवार्षिकी मया दीक्षिता पूर्वकोट्यायुः । प्रान्ते केवलं मोक्षश्च । सा एषा साध्वी व्यन्तरस्य दर्शिता । तदनु तेन व्यन्तरेणात्रागत्य तयोर्गतिः प्रकटिता । तत्र **तेजःपालो** विलपति—

आह्लाद कुमुदाकरस्य जलधेर्वृद्धिः सुधास्यन्दिभिः
प्रद्योतैर्नितरां चकोरवनितानेत्राम्बुजप्रीणनम् । 25

---

१ ग–'मते' । २ घ–'मेवमेष' ।३–५ अनुष्टुप् । ६ घ–'पदनतिः' । ७ मन्दाक्रान्ता ।
८ 'मन्त्रिणि' इत्यारभ्य 'प्रकटिता' प्रान्तः पाठः क–प्रतौ नास्ति ।

एतत् सर्वमनादरादहृदयोऽनादृत्य राहुर्हहा
कष्टं चन्द्रमसं ललाटतिलकं त्रैलोक्यलक्ष्म्याः पपौ ॥१॥[1]

जयन्तसिंहो वदति—

खद्योतमात्रतरला गगनान्तराल-
मुक्तावचाः कति न दन्तुरयन्ति ताराः? ।
एकेन तेन रजनीपतिना विनाऽद्य
सर्वाः दिशो मलिनमाननमुद्वहन्ति ॥२॥[2]

कवयः प्राहुः—

मन्ये मन्दधियां विधे! त्वमवधिर्वैराय सेवार्थिनां
यद् वैरोचन-सातवाहन-बलि-श्वेता-[3]ऽब्ज-भोजादयः ।
कल्पान्त चिरजीविनो न विहितास्ते विश्वजीवातवो
मार्कण्ड-ध्रुव-लोमशाश्च मुनयः तृप्ताः[4] प्रभूतायुषः ॥३॥[5]

लोकास्तु वदन्ति—

किं कुर्मः? कमुपालभेमहि? किमु ध्यायाम? कं वा स्तुमः?
कस्याग्रे स्वमुख स्वदुःखमलिनं सन्दर्शयामोऽधुना? ।
शुष्कः कल्पतरुर्यदङ्गणगतश्चिन्तामणिश्चाजरत्
क्षीणा कामगवी च कामकलशो भग्नो हहा दैवतः ॥ ४ ॥[6]

ततस्तेजःपाल-जयन्तसिंहाभ्यां मन्त्रिदेहस्य 'शत्रुञ्जये'कदेशे संस्कारः कृतः। संस्कारभूम्यासन्नः 'स्वर्गारोहण'नामा प्रासादो नमि-विनमियुतऋषभसनाथः कारितः । मन्त्रिण्यौ ललितादेवी-सोषू[7][8] अनशनेन ममृतुः । श्रीतेजःपालस्त्वऽनुपमासहितो मध्यमव्यापार-भोगभाग् लेशतोऽपि तथैव दानं तन्वानः[9] १३०८वर्षे द्यामगमत् । शनैः शनैः[10] श्रीजयन्तसिंहोऽपि परलोकमभजत् । श्रीअनुपमाऽपि तपसा स्वर्गमसाधयदिति भद्रम् ।

---

१ शार्दूल० । २ वसन्त० । ३ घ–'श्वेताभभोजा०' । ४ क्रृप्ताः' । ५–६ शार्दूल० । ७ घ–'ललतादेवी सोष्वौ' । ८ क–'सौष्वौ', ख–'सोष्टौ' । ९ ख-घ–'तन्वन्' । १० ग–'ततः श्री०' ।

एतयोश्च श्रीवस्तुपाल-तेजःपालयोर्धर्मस्थानसङ्ख्यां कर्तुं क ईश्वरः ?। परं गुरुमुखश्रुतं किञ्चिल्लिख्यते—लक्षमेकं सपादं जिनबिम्बानां विधापितम्। अष्टादश कोट्यः षण्णवतिर्लक्षाः श्री'शत्रुञ्जय'-तीर्थे द्रविणं व्ययितम्। द्वादश कोट्योऽशीतिलक्षाः श्री'उज्जयन्ते'। द्वादशकोट्यस्त्रिपञ्चाशल्लक्षा 'अर्बुद'गिरिशिखरे 'लूणिग'वसत्याम्। नव शतानि चतुरशीतिश्च पौषधशालाः कारिताः। पञ्च शतानि दन्तमयसिंहासनानां कारापणम्, सूरीणां प्रत्येकमुपवेशनार्थमर्पणम्। पञ्च शतानि पञ्चोत्तराणि समवसरणानां जादरमयानां कारणं श्रीकल्पवाचनाक्षणे मण्डनार्थम्। ब्रह्मशालाः सप्त शतानि। सप्त शतानि सत्रागाराणाम्। सप्तशती तपस्वि-कापालिकमठानाम्। सर्वेषां भोजननिर्वापादि दानं कृतम्। [3]त्रिंशच्छतानि द्व्युत्तराणि महेश्वरायतनानाम्। त्रयोदश शतानि चतुरुत्तराणि शिखरबद्धजैनप्रासादानाम्। त्रयोविंशतिः जीर्णचैत्योद्धाराणां, अष्टादशकोटिव्ययेन सरस्वतीभाण्डागाराणां त्रयाणां स्थानत्रये करणं 'धवलक्क'-'स्तम्भतीर्थ'-'पत्तना'दौ। पञ्चशती ब्राह्मणानां नित्यं वेदपाठं [4]कारयति स्म। तेषां गृहमानुषाणां निर्वाहकरणम्। वर्षमध्ये सङ्घपूजात्रितयम्[5]। पञ्चदशशती श्रमणानां नित्यं गृहे [6]विहरति स्म। [7]तटिककार्पटिकानां सहस्रं समधिकं प्रत्यहमभुक्त। त्रयोदश यात्राः सङ्घपतीभूय कारिता लोकानाम्। तत्र प्रथमयात्रायां चत्वारि सहस्राणि पञ्च शतानि शकटानां सशय्यापालकानाम्, सप्तशती सुखासनानाम्, अष्टादशशती वाहिनीनाम्, एकोनविंशतिशतानि श्रीकरीणाम्, एकविंशतिः शतानि श्वेताम्बराणाम्, एकादशशती दिगम्बराणाम्, चत्वारि शतानि सार्धानि जैनगायनानाम्, त्रयस्त्रिंशच्छती बन्दिजनानाम्, चतुःसहस्रतुरगाः, द्विसहस्रोष्ट्राः चतु-

---

१ घ-'व्ययकृतम्'। २ ख-'मथानां'। ३ ग-'पञ्चविंशतिशतानि हरिहरब्रह्मादिमहे०'। ४ ख-'कुर्वन्ति स्म', घ-'करोति स्म'। ५ 'सर्वदर्शनिनां' इत्यधिको ग-पाठः। ६ ख-'विरमति स्म'। ७ ग-'बहुककटिक-कार्प०'।

श्चत्वारिंशदधिकशतं देवार्याः, सप्तलक्षमनुष्याः, इदं प्रथमयात्राप्रमाणम्। अग्रेतना तदधिका ज्ञेया। यथा चतुरशीतिस्तडागाः सुबद्धाः। चतुःशती चतुःषष्ट्यधिका वापीनाम्। पाषाणमयानि द्वात्रिंशद् दुर्गाणि। चतुःषष्टिर्मशीतयः। एवं लौकिकमपि कृतं मनो विनाऽपि। तथा दन्तमयजैनरथानां चतुर्विंशतिः। विंशतिशतं शाकघटितानाम्। एकविंशत्याचार्यपदानि कारितानि। सरस्वतीकण्ठाभरणादीनि चतुर्विंशतिबिरुदानि भाषितानि कविजनैः। श्रीवस्तुपालस्य दक्षिणस्यां दिशि 'श्री'पर्वतं यावत् पश्चिमायां 'प्रभासं' यावत् उत्तरस्यां 'केदार'पर्वतं यावत्, पूर्वस्यां 'वाराणसीं' यावत्, तयोः कीर्तनानि श्रूयन्ते। सर्वाग्रेण त्रीणि कोटिशतानि चतुर्दश लक्षा अष्टादश सहस्राणि अष्ट शतानि द्रव्यव्ययः पुण्यस्थाने। त्रिषष्टिवारान् सङ्ग्रामे जैत्रपदं गृहीतम्। अष्टादश वर्षाणि तयोर्व्यावृत्तिः।

[2]बिरुदानि २४ वस्तुपालस्य, तद्यथा— प्राग्वाटज्ञात्यलङ्करण १ सरस्वतीकण्ठाभरण २ सचिवचूडामणि ३ कूर्चालसरस्वती ४ सरस्वतीधर्मपुत्र ५ लघुभोजराज ६ षण्डेरातु ७ दातारचक्रवर्ति ८ बुद्धि अभयकुमारु ९ रूपि कंदर्पु १० चतुरिमा चाणाक्यु ११ ज्ञाति वाराहु १२ ज्ञाति गोपालु १३ सैदवंशक्षयकालु १४ सांखुलारायमादमर्दनु १५ मज्जाजैन १६ गम्भीरु १७ धीरु १८ उदार १९ निर्विकारु २० उत्तमजनमाननीयु २१ सर्वजनमाननीयु २२ शान्तु २३ ऋषिपुत्र २४ ॥

॥ इति [3]श्रीवस्तुपालप्रबन्धः ॥ २४ ॥

श्री'प्रश्नवाहन'कुले 'कोटिक'नामनि गणे जगद्विदिते।
श्री'मध्यम'शाखायां 'हर्षपुरीया'ऽभिधे गच्छे ॥१॥

---

१ ग–'पश्चनदे'। २ 'बिरुदानि० ऋषिपुत्र २४' इति पाठाधिकता घ–प्रतावेव।
३ ख–'पालतेजःपालयोः प्रबन्धः'।

‘मलधारि’विरुदविदितश्रीअभयोपपदसूरिसन्ताने

**श्रीतिलकसूरिशिष्यः सूरिः श्रीराजशेखरो** जयति ॥ २ ॥

तेनायं मृदुगद्यैर्मुग्धो मुग्धावबोधकामेन ।

रचितः **प्रबन्धकोशो** जयताज्जिनपतिमतं यावत् ॥ ३ ॥[3]

तथा—

‘कट्टारवीरदुस्साध’वंशमुकुटो नृपौघगीतगुणः । ५

बब्बूलीपुरकारितजिनपतिसदनोच्छलत्कीर्तिः[4] ॥ ४ ॥

**यप्पकसाधोस्तनयो गणदेवो**ऽजनि ‘सपादलक्ष’भुवि ।

तद्भूर्**जूनकनामा** तत्पुत्रः **साढको** दृढधर्मः ॥ ५ ॥

तत्सूनुः सामन्तस्तत्कुलतिलकोऽभवज्जगत्सिंहः ।

दुर्भिक्षदुःखदलनः श्रीमहमदसाहिगौरवितः ॥ ६ ॥ १०

तज्जो जयति **सिरिभवः** षड्दर्शनपोषणो **महणसिंहः** ।

‘ढिल्ल्यां’ स्वदत्तवसतौ ग्रन्थमिमं कारयामास ॥ ७ ॥

शरगगनमनु(१४०५)मिताब्दे ज्येष्ठामूलीयधवलसप्तम्याम् ।

निष्पन्नमिदं शास्त्रं श्रोतृध्येत्रोः सुखं तन्यात् ॥ ८ ॥[5]

इति चतुर्विंशतिप्रबन्धाः सम्पूर्णाः ॥ १५



१ घ–‘श्रीमलधारिगच्छे श्रीअभयसूरिसन्ताने’ । २ घ– ‘राजशेखरसूरीन्द्र-वादीन्द्रकृतिरियम्’ । ३ अतः परं सप्तमपर्यन्तानि पद्यानामभावो घ-प्रतौ । ४ ख– ‘वच्छलीपूर०’ । ५ घ–‘श्रीः ॥ संवत् १५२० वर्षे वैशाखवदि त्रयोदश्यां भृगुवारे ॥ श्री‘तपा’गच्छे श्री ४ **सोमसुन्दरसूरिश्रीमुनिसुन्दरसूरिश्रीजयचन्द्रसूरिशिष्यः चतुर्विंशतिप्रबन्धानां** प्रतिमेतामलीलिखत् ॥ लेखकवाचकयोः शुभ कल्याणं भूयात् भवतु इत्यादि पण्डित**मेरुरत्न**गणिना लिखापिता ॥ छ ॥ श्रीः ॥’

